THE

KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

NO. 111.

( Vyākaraṇa Section, No. 13 )

THE

# Sārasvata Vyākaraṇam

of

ANUBHÛTI SVARÛPĀCHĀRYA

**WITH TWO COMMENTARIES**

**THE SUBODHIKĀ COMMENTARY OF CHANDRAKĪRTI**

and

**THE PRASĀDA COMMENTARY OF VĀSUDEVA BHAṬṬA**

*Edited*

With Notes ( Manoramā ), Introduction etc.,

By

*Pandit Nava Kishora Kara S'armā*

PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

1935.

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशी संस्कृत सीरिज़ ग्रन्थमालायाः

१११

व्याकरणविभागे (१३) त्रयोदशं पुष्पम् ।

अनुभूतिस्वरूपाचार्य्यप्रणीतं

# सारस्वत-व्याकरणम् ।

श्रीचन्द्रकीर्त्तिसूरिप्रणीतचन्द्रकीर्त्तिनाम्न्या सुबोधिकया व्याख्यया, श्रीवासुदेवभट्टविरचितप्रसादाख्य-टीकया च समन्वितम् ।

तच्च—

व्याकरणसाङ्ख्यवेदान्ततीर्थश्रीविम्बाधरकरचरणसेवकेन न्याय-वैशेषिकवेदान्तशास्त्रिणा काव्यव्याकरणतीर्थेन साहित्य-शास्त्राचार्य्येण करशर्म्मोपाधिकेन कवितार्किकोत्कल-

यास्क—श्रीनवकिशोरशास्त्रिणा

निर्मितया मनोरमया विवृत्या समुद्भासितं

तेनैव परिष्कृत्य सम्पादितम् ॥

( पूर्वार्द्धम् )

प्रकाशकः—

जयकृष्णदास हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९६१





# भूमिका

अनादिमध्यान्तमशेषमीड्यं लिप्तपङ्कलेशं विरलप्रकाशं
नैसर्गिकाज्ञानविघातदक्षं गुरोःपदाम्भोजयुगं भजामः ॥ १ ॥

जगत्पारावारे जननमरणग्राहनिकरैः
कुकर्मव्यूहानां परिणतिवशादन्तिकगतैः ।
धृतानां जीवनामथ विधिनिषेधात्मगहना ।
परेशोक्तिः पुण्या भवति खलु निःश्रेयसकरी ॥ २ ॥

तदर्थव्याख्यायै धृतपरिकरो वैदिकगण—
स्त्रिलोक्याः कल्याणं व्यतत निगमादेः प्रणयनात् ।
क्रियासौकर्यं हि स्वपरजनसाधारणकृते.
सतामात्मज्ञानां प्रभवति विधिः प्राकृत इति ॥ ३ ॥

श्रीनारदादिमुनिभिः स्वरवर्णभेदो—
दात्तानुदात्तसमवृत्ततति युक्ता ।
पाठप्रकारकथनेन समं प्रणीता
शिक्षा धरातलमलंकुरुतेऽनवद्या ॥ ४ ॥

बोधायनेन विदुषा मुनिपुंगवेनाऽऽ-
पस्तम्बनामयतिनाऽऽत्मविदांवरेण ।
वेदोक्तमन्त्रविनियोगपथप्रदर्शी
ग्रंथः कृतोऽस्ति नितरां भुवि कल्पनामा ॥ ५ ॥

यास्केन वैदिकवरेण निरुक्तमुक्तं
वेदस्थशब्दनिवहार्थविनिर्णयाय ।
श्रीपिङ्गलेन विबुधेन महर्षिणा च
छन्दःस्वरूपमखिलं व्यरचि स्वतन्त्रम् ॥ ६ ॥

अर्केन्दुभादिमहसामवलम्बनेन
स्वाध्याययागविधिकालविनिश्चयाय ।
प्रोवाच नातिविततं लगधो विधिज्ञ—
स्तन्त्रं हिताय जगतां किल गणितं तत् ॥ ७ ॥

वेदस्याङ्गं प्रधानं मुखमिव निखिलज्ञानराशेर्निदानं
वाचां व्युत्पादकं व्याकरणमतिशयं क्षेमदं पंडितानाम् ।
शास्त्रारण्येऽप्यगम्ये कथमपि चलितुं तद्विहीनस्य पुंसः
सामर्थ्यं नैव कस्यापि भवति नितरां पाठ्यमेतत्सदैव ॥ ८ ॥

शब्दानुशासनं नाम ख्यातं व्याकरणं हि तत् ।
प्रकृतिप्रत्ययादीनां साधनेनोपकारकम् ॥ ९ ॥
शब्दव्युत्पादनेनैव वेदानामङ्गमुच्यते ।
मुख्यं व्याकरणं यस्माद्वेदः शब्दमयोऽखिलः ॥ १० ॥
शब्दज्ञानं वर्णमूलं पदज्ञानं ततः परम् ।
वाक्यज्ञानं ततः सर्व–वाग्ज्ञानान्मुक्तिरिष्यते ॥ ११ ॥
अस्माद्व्याकरणं पाठ्यं सर्वैरेव मुमुक्षुभिः ।
गुर्वन्तिके यथान्यायं नरैः शान्तिसमन्वितैः ॥ १२ ॥

तथा च प्राचामुक्तिः—

"आसनं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः" ॥ १३ ॥
"अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते" ॥ १४ ॥ इति ।

श्रुतावपि व्याकरणाध्ययने विधिमाह—

"ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदो ऽध्येयो ज्ञेयश्च" इति ।

कश्चित्पुत्रमुपदिदेशश्च—

"यद्यपि बहुनाधीषे तथापि पठ पुत्र ! व्याकरणम् ।
स्वजनः श्वजनो माभूत् सकलं शकलं सकृच्छकृत्" ॥१५॥ इति ।
"अङ्गीकृतं कोटिमितञ्च शास्त्रं नांगीकृतं व्याकरणं च येन ।
न शोभते तस्य मुखारविन्दं सिन्दूरविन्दुर्विधवाललाटे" ॥ १६ ॥

इत्यपि कश्चिदाह ।

तत्र व्याकरणे—

"इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा इत्यष्टौ शाब्दिकाः मताः" ॥ १७ ॥

इत्युक्तरीत्याष्टौ प्रधानकर्त्तार आसन् ॥

व्याकरणानि च—

"ऐन्द्रं चान्द्रं काशकृत्स्नं जैनेन्द्रं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्" ॥ १८ ॥ इति ।

तत्र सारस्वतव्याकरस्येदं वृत्तं श्रूयते—

सारस्वतं व्याकरणं प्रसिद्धं जानन्ति सर्वे विबुधाः प्रसिद्धाः ।
कर्त्तास्य काश्यामनुभूतिरूप आसीदुदासो महतां वरेण्यः ॥ १९ ॥
सरस्वती यस्य हि सूत्रकर्त्री संराधिता देव्यनुभूतिना सा ।
पुंक्षुप्रयोगं विदुषां सभायां प्रमार्ष्टुकामेन यतात्मनैव ॥ २० ॥

तुष्टा तदा ध्यानगुणेन तस्य स्वकीयमातेव कृपावशा सा ।
आगत्य देवी त्वरयानुभूतिं वरं वृणीष्वेति जगाद वाणी ॥ २१ ॥
ततोऽनुभूतिर्निजगूढवृत्तं मातुः समक्षे तनयो मुदेव ।
उक्त्वाभ्ययाचन्महनीयचेष्टः सरस्वतीं व्याकरणं नवीनम् ॥ २२ ॥
स्वकण्ठसंराजितहारगर्भात् सूत्राणि सा सप्तशतानि दत्वा ।
अन्तर्दधे व्याकरणं ततः सोऽनुभूतिरूपो रचयांचकार ॥ २३ ॥
प्राचीनवैयाकरणेन तेन विनिर्मिता साधनपद्धतिश्च ।
शंकासमाधानविचारचारुः सोदाहृतिर्वृत्तिरलं विभाति ॥ २४ ॥

सारस्वतस्य निर्माता नरेन्द्राचार्य्यं इत्यपि ।
केचिद्वदन्ति सामर्षं विद्वद्भिस्तद् विभाव्यताम् ॥ २५ ॥
मन्येऽहं प्रकृता यात्र वृत्तिरस्ति सुविस्तरा ।
तत्कर्त्ता कुशली श्रीमान्नरेन्द्राचार्य्यपंडितः ॥ २६ ॥

अस्य ग्रंथस्य टीकास्ति चन्द्रकीर्तेः सुबोधिका ।
वासुदेवेन भट्टेन प्रसादाख्या च निर्मिता ॥ २७ ॥
उक्तटीकाद्वयं पाठ्ये परीक्षायां नियोजितम् ।
कालिकाक्षेत्रगीर्वाण-वाणीसंसदि पंडितैः ॥ २८ ॥
माधवीति समाख्याता व्याख्या गुर्वर्थबोधिका ।
चकास्ति सा च सर्वत्र प्रणीता माधवेन या ॥ २९ ॥
जगन्नाथेन केनापि पंडितेन कृता तदा ।
सारप्रदीपिका नाम्ना सारार्थस्य प्रकाशिका ॥ ३० ॥
काशीनाथो बुधश्रेष्ठः फणिभाषितभाष्यवत् ।
यत्सारस्वतभाष्यं तच्चक्रेऽलभ्यं भवेज्जनैः ॥ ३१ ॥
जगन्नाथो रमाकान्तो यत्रास्ते तत्र शाश्वतः ।
भारतीत्युपनामासा-वमृतो विवृतिं सुखम् ॥ ३२ ॥
कृतवान् योऽमलस्वामि—शिष्य आसीत्सदा सुखी ।
दुण्टिकां मेघरत्नो हि गम्भीरार्थप्रकाशिकाम् ॥ ३३ ॥ युग्मकम् ॥
शब्दार्थचन्द्रिका हंसविजयस्य महात्मनः ।
विद्वत्प्रबोधिनी टीका रामभट्टस्य चास्ति सा ॥ ३४ ॥
एवं बहुविधाष्टीका न मिलन्ति कथंचन ।
इतिहासादिवाक्येभ्यो जानीमो नाममात्रतः ॥ ३५ ॥

भट्टोजिदीक्षितच्छात्रो रघुनाथो महामना।
भणिभाष्यमिवात्रापि लघुभाष्यमरीरचत् ॥ ३६ ॥
ग्रन्थे च रघुनाथेन मतं कातन्त्रसम्भवं।
खण्डितं वोपदेवस्य भट्टोजिदीक्षितस्य च ॥ ३७ ॥

## अनुभूतिस्वरूपाचार्य्यः।

अयं किल सुजन्मा खृष्टीयपञ्चमशतके आविरासीदिति लोकश्रुतिः। वाराणसीमधितिष्ठतानेनाचार्य्यवर्य्येण चरमे वयसि लोकानुग्रहकांक्षिणा यथानायासेनैव बालानां व्याकरणकलाज्ञानं स्यात्तथास्य रचना कृतेति दाक्षिणात्यप्रचलितकिंवदन्ती। एष खलु महात्मा द्वितीयवृत्तिप्रारम्भे स्वयमेवाह—

लक्ष्मीनृसिंहौ प्रणिपत्य काश्यां
बुधांश्च पद्माकरभट्टमुख्यान्।
सारस्वतीयां च तिवादिवृत्तिं
कुर्माल्लिखेयं गणपप्रसादात् ॥ इति ॥

एवमादिलोकवादादिप्रमाणकलापैर्विभाव्यते ननु वा काश्यामस्य महात्मनो जन्मेति तत्त्वमालोडयन्तु ऐतिह्यरसिकाः।

## श्रीचन्द्रकीर्त्तिः।

सुखबोधस्यापि व्याकरणस्यास्याध्येतृवर्गस्य सम्यक् व्युत्पत्तिविधित्सया परमकारुणिको नागपुरतपागच्छाधिराजभट्टारकः सूरीश्वरः श्रीचन्द्रकीर्तिः सुबोधिकापराभिधां चन्द्रकीर्त्तिनाम्नीं व्याख्यां विरचय्य बालानां महदुपकृतिं ससाध। तेन च सूरिवर्य्येण स्वकृतटीकामध्ये प्रक्रियाकौमुदीमतग्राहं सविस्तरं व्याकरणं व्याख्यायि। अस्य किल व्याख्यातुर्व्याख्यानस्य मननाध्ययनाध्यापनवशेन दुस्तरमपि शब्दाम्भोधिं तर्त्तुमकातरा एव भविष्यन्ति व्याकरणाध्वनिनः।

## सूरीश्वरश्रीचन्द्रकीर्त्तिप्रशस्तिः।

"सुबोधिकायां क्लृप्तायां सूरिश्रीचन्द्रकीर्तिभिः
कृत्प्रत्ययानां व्याख्यानं बभूव सुमनोहरम् ॥ १ ॥
तीर्थे वीरजिनेश्वरस्य विदिते श्रीकोटिकाख्ये गणे।
श्रीमच्चन्द्रकुले वटोरुहवृहद्गच्छे परिम्लाचिते। (?)
श्रीमन्नागपुरीयकाह्वयतया प्राप्तावदातेऽधुना
स्फुर्जद्भूरिगुणान्विता गणधरश्रेणी सदा राजते ॥ ३९ ॥



वर्षे वेदमुनीन्द्रशंकरमिते ११७४ श्रीदेवसूरिप्रभु—
जंज्ञेऽभूत्तदनु प्रसिद्धमहिमा पद्मप्रभः सूरिराट्।
तत्पट्टे प्रथितः प्रसन्नशशभृत्सूरिः सतामादिमः
सूरीन्द्रास्तदनन्तरं गुणसमुद्राह्वा बभूवुर्बुधाः ॥ ३ ॥
तत्पट्टे जयशेखराख्यसुगुरुश्रीवज्रसेनस्तत—
स्तत्पट्टे गुरुहेमपूर्वतिलकः शुद्धक्रियाद्योतकः।
तत्पट्टे प्रभुरत्नशेखरगुरुः सूरीश्वराणां वर—
स्तत्पट्टाबुधिपूर्णचंद्रमनसः श्रीपूर्णचन्द्रः प्रभुः ॥ ४१ ॥
तत्पट्टेऽजनि हेमहंससुगुरुः सर्वत्र जाग्रद्यशा-
आचार्य्या अपि रत्नसागरवरास्तत्पट्टपद्मार्यमा।
श्रीमान् हेमसमुद्रसूरिरभवच्छ्रीहेमरत्नस्तत-
स्तत्पट्टे प्रभुसोमरत्नगुरवः सूरीश्वराः सद्गुणाः ॥ ४२ ॥
तत्पट्टोदयशैलहेलिरमलश्रीजेसवालान्वया-
ऽलंकारः कलिकालदर्पदमनः श्रीराजरत्नः प्रभुः
तत्पट्टे जिनविश्ववादिनिवहा गच्छाधिपाः संप्रति
सूरिश्रीप्रभुचन्द्रकीर्त्तिगुरवो गाम्भीर्यधैर्य्याश्रयाः ॥ ४३ ॥
तैरियं पद्मचन्द्राख्योपाध्यायाभ्यर्थनात्कृता।
शुभा सुबोधिकानाम्नी श्रीसारस्वतदीपिका ॥ ४४ ॥
श्रीचन्द्रकीर्त्तिसूरीन्द्रपादाम्भोजमधुव्रतः।
हर्षकीर्त्तिरिमां टीकां प्रथमादर्शकेऽलिखत ॥ ४५ ॥
अज्ञानध्वान्तविध्वंसविधाने दीपिकानिभाः।
दीपिकेयं विजयतां वाच्यमाना बुधैश्चिरम् ॥ ४६ ॥
स्वल्पस्य सिद्धस्य सुबोधकस्य सारस्वतव्याकरणस्य टीकम्।
सुबोधिकाख्यां रचयांचकार सूरीश्वरः श्रीप्रभुचन्द्रकीर्त्तिः" ॥ ४७ ॥

## भट्टवासुदेवः।

अयं हि वैयाकरणमूर्द्धन्यः पाणिनीयरसाभिज्ञोऽतिसंक्षिप्तस्यास्य सारस्वतस्य सकललौकिकप्रयोगसाधनवैकल्यं मन्वानो मनोरमामिव कौमुद्याः प्रसादाभिधां टीकां व्यरचयत्। सा चातीवार्थगभीरा नानामतान्तरसंम्यमिता च सती वैयाकरणपाशैर्दुरधिगमैव संजाता। अस्याञ्च टीकायां सारस्वतसूत्राणां पाणिनीयसूत्रैः साधनं च यथारीति निर्दिष्टमस्ति। एतट्टीकनावलोकनेनैव ज्ञास्यन्ति सुधियो न्यायव्याकरणयोः कीदृशं पाण्डित्यमासीद् भट्टविदुषः। अस्य जन्मादीतिवृत्तविषये न किंचिदवधार्य्यत इति मे विबुधाः शरणम्। इयं खलु प्रसादटीकास्य पूर्वार्द्धमात्रे व्यवस्थिता चोपलभ्यते, उत्तरार्द्धे च सा सदसत्तया सन्देहास्पदमादधानानुपलभ्यमानत्वात्।

## उपसंहारः ।

इदं नाम सारस्वतव्याकरणं सरस्वतीप्रसादलब्धमस्याध्ययनाध्यापनादिविधौ विद्याधिष्ठात्री भगवती सरस्वतीदेवी समाराधिता सती ज्ञानवरं प्रयच्छेदिति गुरवो वदन्ति । अथात्र व्याकरणे-

प्राच्यपुस्तकमतान्तरगर्भा पाठभेदसहिता सुगमा च ।
टिप्पणी व्यरचि बालमुदेऽस्मिन् तेन सा भवती भावुकदास्तु ॥ ४८ ॥

ममैतदादिसम्पादनसमालोचनादिकर्मणि एम्० ए० उपाधिधारिकिटकरेअेन्साकलेजाह्वमहाविद्यालयप्राच्यशास्त्राध्यापक-श्रीयुक्तार्त्तवल्लभमहान्तिमहोदयैस्तथोत्कलच्छोटनागपुरसमस्तसंस्कृतविभागनिरीक्षक—( Asst. Superintendent ) पदवाच्य-श्रीकिशोरीमोहनद्विवेदि-एम्० ए० काव्यतीर्थमहाशयैः; पुरीसंस्कृतकलेजाख्यमहाविद्यालयस्य प्रधानाध्यापक—( Principal ) एम्० ए० काव्यव्याकरणतीर्थ-श्रीकरुणाकरकरशर्मभिश्च यादृशः समुत्साहः संवर्द्धितस्तेन तेषां विद्वद्वराणां कृतज्ञोऽस्मि ।

काशीसंस्कृतसीरिजादिसकलग्रन्थप्रकाशेन यः
प्राप्तो भूसुरसेवया च विमलां कीर्त्तिं विदेशे तथा ।
श्रीलश्रीहरिदासगुप्ततनयो धीमानिदं पुस्तकं
धीरः "श्रीजयकृष्णदास" इतिनामासावमुद्रापयत् ॥ ४९ ॥

हेमाननीयविबुधाः कृतशास्त्रचर्चाः !
यद्यत्र लेखनगता मम दोषसंघाः ।
जाता भवद्भिरनिशं परिमार्जनीयाः
दोषान्धरन्ति महतामपि ये तु दुष्टाः ॥ ५० ॥

वसन्तोत्सवः । १९९१ — विद्वद्विधेयः— श्रीनवकिशोर शास्त्री ।

## सारस्वतव्याकरणपूर्वार्द्धगतमुख्यविषयाणां

# सूचीपत्रम् ।

## सङ्केतितनामानि—

( क ) ( ख ) ( ग ) इति टिप्पणीचिह्नम् ।

विशेष इति मुम्बईपुस्तकधृतपाठविशेषो बोध्यः ।

अधिकमिति कलिकातामुद्रितपुस्तकधृतपाठाधिकं बोध्यम् ।

( प्रा० ) प्राचीनपुस्तकगतपाठभेदचिह्नम् ।

( च० ) इति चन्द्रकीर्त्तिव्याख्या ।

( प्र० ) इति प्रसादटीका ।

---

सर्वविधपुस्तकप्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

# सारस्वतप्रक्रिया ।

## प्रसाद—चन्द्रकीर्तिसमाख्यया व्याख्यया मनोरमा-ख्याविवृत्या च संवलिता ।

## ( पूर्वार्द्धम् )

---

**प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ।**
**सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् (क) ॥१॥**

### * चन्द्रकीर्तिः *

नमोऽस्तु सर्वकल्याणपद्मकाननभास्वते ।
जगत्त्रितयनाथाय पराय परमात्मने ॥ १ ॥
नमः श्रीगुरवे चारुबुद्धये दत्तसिद्धये ।
मतिप्रदानशीलायै सरस्वत्यै नमो नमः ॥ २ ॥

---

प्रणम्येति पद्यस्य कुत्रचित्पुस्तके व्याख्येयं प्रतिभाति—अनुभूतिस्वरूपाचार्यः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये शिष्टाचारपरिपालनाय च स्वेष्टदेवतानमस्कारलक्षणं मङ्गलमाचरन् सरस्वतीकृतप्रक्रियाया ऋजुकरणं प्रतिजानीते—अहं सारस्वतीं प्रक्रियां ऋजुं कुर्वे इत्यन्वयः। कुर्वे इत्यनेनाहमिति कर्तृपदं लभ्यते। 'अस्मद्युत्तमः' इत्युक्तेः। अहं कुर्वे इति वाक्येन कर्मापेक्ष्यते करोतेः सकर्मकत्वात्। प्रक्रियामिति कर्म। प्रक्रियन्ते प्रकृतिप्रत्ययादिविभागेन व्युत्पाद्यन्ते शब्दा अनयेति प्रक्रिया ताम्। प्रकृतिप्रत्ययविभाग-कर्त्रीमित्यर्थः। अहं प्रक्रियां कुर्वे इत्येवमुक्तावस्यामप्रामाण्यमायाति कृतकत्वात्, तत्परिहाराय प्रक्रियां विशिनष्टि। कथंभूतां प्रक्रियाम्? सारस्वतीम्। सरतीति सरः पुरः तद्विद्यते यस्याः सा सरस्वती ज्ञानरूपिणी प्रसिद्धा। सरस्वत्या प्रणीतानि सारस्वतानि-सूत्राणि, एवं सारस्वतानि विद्यन्ते यस्यां सा सारस्वती तां सारस्वतीम्। सरस्वतीप्रणीतसूत्रसम्बन्धिनीमित्यर्थः। अथवा सरस्वत्या प्रणीता सारस्वती ताम्, सरस्वती-

---

( क ) सुमनसां विसरैः सुमनोहरै रचितमञ्जुलहारविराजिता ।
सरसमानसहंसकृतासना स्फुरतु साद्य सरस्वती मे मतौ ॥ १ ॥
तातं चक्रधरं नत्वा बिम्बाधरसमन्वितम् ।
कुर्वे मनोरमाभिख्यां विवृतिं विबुधाज्ञया ॥ २ ॥

अथ श्रीमत्परमहंसपरिव्राजकाचार्यः श्रीअनुभूतिस्वरूपो निःशेषविघ्नसंघातशान्त्यर्थं

कृतमित्यर्थः। 'गौरवलाघवयोर्मध्ये लाघवमिष्टम्' इत्युक्तेः सुगमं व्याख्यानं प्रशस्तं यदर्थान्तरं न सम्भवति। अर्थान्तरेऽस्तु। ननु सरस्वतीकृता प्रक्रियास्ति, तदात्र करणे कः प्रयत्न इति चेत्तत्राह—ऋजुमि यत्रतत्र स्थितानां सूत्राणां प्रयोगार्थमेकत्र लेखनं ऋजुकरणम्। प्रयोगानुकूलसूत्रक्रमाम्। एवञ्च सरलाम्

---

तत्र तावत्सारस्वतसूत्रव्याकृतिं चिकीर्षुरनुभूतिस्वरूपाचार्य्यो निर्विघ्नपरिसमाप्त्यर्थं कृतस्य परमात्मप्रणतिरूपमङ्गलस्य शिष्या एवं कुर्य्युरिति शिष्यशिक्षायै निबन्धनं कुर्वन् चिकीर्षितं ग्रन्थादौ प्रतिजानीते प्रणम्येति। ननु मङ्गलं किमर्थं न तत् विघ्नध्वंसस्य हेतुः। न वा शास्त्रसमाप्तेरपि। मङ्गलसत्त्वेऽपि कादम्बर्य्यादौ निर्विघ्नेन परिसमाप्तिर्न दृश्यते। दृश्यते च मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिः। अतोऽन्वयव्यतिरेकरूपस्यात्र व्यभिचारः। इति चेन्न। कादम्बर्य्यादौ विघ्नप्राचुर्यात्समाप्तेरभावः। किरणावल्यादौ ग्रन्थाद्बहिरेव मङ्गलं कृतमिति न तत्र व्यभिचारः। तथाच श्रुतिः—"समाप्तिकामो मङ्गलमाचरेद्" इति वस्तुतस्तु विघ्नध्वंसद्वारेण मङ्गलं समाप्तिसाधनमिति केचित्। अपरे तु मङ्गलस्य विघ्नध्वंस एव फलम् समाप्तिस्तु बुद्ध्या प्रतिभया वा भवतीत्यास्तामत्र विस्तरः। ननु श्रोतृप्रवृत्तये ग्रन्थादावधिकारिविषयसम्बन्धप्रयोजनानि भवन्ति वक्तव्यानि। तथाह—सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते, शास्त्रादौ तेन वक्तव्यः सम्बन्धस्तत्प्रयोजनम्। यावत्प्रयोजनं नोक्तं सम्बन्धो न निरूप्यते, सम्बन्धानभिधायित्वाद् भ्रष्टा भवा सङ्गति"रिति प्रयोजनं चात्र वक्तव्यमित्यत आह—बालधीवृद्धिसिद्धय इति। ननु व्याकरणस्य मुख्यं शब्दानुशासनमेव प्रयोजनं ततो बालव्युत्पत्तिसिद्धिरतस्तात्किमिति नोक्तम् उक्तं तदपि प्रक्रियामिति। तथा हि प्रकृतिप्रत्ययादिविभागेन शब्दव्युत्पत्तिः प्रक्रिया तदेव च शब्दानुशासनम्। तथोक्तं'-विवक्ताः साधवः शब्दाः प्रकृत्यादिविभागतः ज्ञाप्यते येन तत् शास्त्रमत्रशब्दानुशासन'मिति। महाभाष्ये च—"रक्षोहागमलघ्वसन्देहाः प्रयोजनानि" इति रक्षाद्यर्थं व्याकरणमध्येयम्। तथाहि—वेदानां रक्षणार्थं व्याकरणं भवति। लोपागमविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति। ऊहः खल्वपि। न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा भणिताः। ते चावश्यं पुरुषेण यज्ञगतेन यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुमिति व्याकरणमध्येयम्। आगमः खल्वपि। ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति प्रधानं च षडङ्गेषु व्याकरणम्। प्रधाने तु कृतो यत्नः फलवान् भवति। लघ्वर्थं चाध्येयं व्याकरणम्। न च व्याकरणमन्तरेण लघूपायेन शब्दा बोद्धुं शक्याः। असन्देहार्थं चाध्येयं व्याकरणम् तथाहि याज्ञिकाः पठन्ति—"स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत" इति अत्र भवति संशयः स्थूला चासौ पृषती च स्थूलपृषती किं वा स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति तान्नावैयाकरणः स्वरतोऽध्यवस्यति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः। अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति विस्तरमुक्तं शेषेण॥ इतोऽधिकमपि शास्त्रान्तरे प्रयोजनानि वर्त्तन्ते। विस्तरभयान्नात्र लिखामः। शब्दाश्चात्र विषयीभूताः। सम्बन्धस्तु प्रतिपाद्यप्रतिपादकभावः। व्युत्पित्सुरधिकारी। नन्वत्र कस्ताबच्छब्दः। उच्यते। यदुच्चारणेन लोमलाङ्गुलसास्नादिमतां भवति सम्प्रत्ययः सः शब्दः। अथवा प्रतीतपदार्थको ध्वनिः शब्द इति। तार्किकास्तु—श्रोत्रग्राह्यो गुणः शब्दः इति वदन्ति। तन्मते स द्विविधः। ध्वन्यात्मको वर्णात्मकश्चेति। ध्वन्यात्मको हस्तमृदङ्गादिसंयोगप्रभवः। वर्णात्मकस्तु संस्कृतभाषादिरूपः। इह केषाञ्चिज्जातिः पदार्थः। गृहीततत्सम्बन्धे नैव शब्देनार्थप्रतीतिः। न चक्षुरादिवत्सम्बन्धनिरपेक्षेण। व्यक्तिषु च तदानन्त्यात्सम्बन्धग्रहणासम्भव इति। केषाञ्चिद्व्यक्तिरेव पदार्थः। तत्रैव वाहदोहादिकार्यसद्भावात्। जातौ तु पदार्थे व्यक्तिषु क्रियमाणं वाहदोहादिकमनोदितार्थेऽनुष्ठितं स्यात्। सम्बन्धग्रहणन्त्वत्र जातेरुपलक्षणभावाश्रयणात्तत्रार्थस्य शब्दमहिम्नैव प्रतीयमानत्वादुभयं शब्दार्थः। अथ व्याख्या—परमात्मानमिति। परा जगत्कारणतयोत्कृष्टा मा शक्तिर्यस्य सः परमः स चासौ आत्मा चेति तं नित्यशुद्धबुद्धमुक्तस्वभावपुरुषमित्यर्थः प्रणम्येति॥ प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वेत्यर्थः। अत्रादौ मङ्गलार्थं प्रशब्दप्रयोगः। मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इति शास्त्रवचनात्। तथाच वार्त्तिककारेणादौ प्रयुक्तस्य सिद्ध

सत्स्वपि देवेष्वपरेष्वैहिकामुष्मिकफललिप्सुस्तांश्च फलद्वयदानक्षमानपास्य भगवन्नमस्कृति-पूर्वकं सारस्वतीं प्रक्रियां चिकीर्षुः सरस्वतीदत्तवर आदावेव प्रस्तावनावलोकमाह—प्रण-म्येत्यादि ॥ अथैतस्य साधनापूर्वं व्याख्यालेशः प्रारभ्यते—'णम् प्रह्वीभावे' । 'आदेः ष्णः स्नः' नम् प्रपूर्वः । 'समासे क्यप्' इति क्यप् प्रत्ययः । य । 'स्वरहीनं परेण संयो-ज्यम्' । 'प्रादेश्च तथा तौ स्रनमाम्' इति नकारस्य णकारः । प्रथमैकवचनं सि । 'अव्य-याद्विभक्तेर्लुक्' इति सिलोपः । प्रणम्येति सिद्धम् ॥ अग्रे-परमात्मानम् । परा प्रकृष्टा मा लक्ष्मीः कान्तिर्वा यस्य स परमः । यद्वा-परैर्योगिभिर्मीयते ज्ञायते इति परमः । यद्वा-परान् शत्रून् रागद्वेषादीन् मिनाति हिनस्तीति परमः । यद्वा—मानं माः ज्ञानं, परं प्रकृष्टं मा ज्ञानं यस्य स परमः ॥ अत सातत्यगमने । अतति सातत्येन गच्छति तांस्तान् भा-वानित्यात्मा । मनिण् प्रत्ययः । मनिणो णित्वात् 'अत उपधायाः' इति वृद्धिः ॥ पर-मश्चासावात्मा च परमात्मा तं परमात्मानम् । द्वितीयैकवचनम् अम् 'नोपधायाः' इति दीर्घः त्म इत्यस्य त्मा । 'स्वरहीनं परेण संयोज्यम्' । 'मोऽनुस्वारः' परमात्मानमिति सिद्धम् ॥ अग्रे-बालधीवृद्धिसिद्धिः कल् बल् कामधेनू । बल् बलन्ति दीव्यन्ति गृहेष्विति बालाः । यद्वा-बलन्ति चलन्ति दुर्बोधार्थादिति बालाः । 'ज्वलादेर्णः' इति णप्रत्ययः । 'अत उपधायाः' इति वृद्धिः ब इत्यस्य बा । 'स्वरहीनं परेण संयोज्यम्' ॥ अग्रे-ध्यै चिन्तायाम् । ध्यै ध्यायते इति धीः । 'क्विप्' इति क्विप् प्रत्ययः । 'ध्यायतेः क्विपि सं-प्रसारणं दीर्घता च' इति संप्रसारणं यकारस्येकारः, तस्य दीर्घता च । ध्यै इत्यस्य धी । 'क्विपः सर्वापहारी लोपः' इति क्विब्लोपः । धी इति सिद्धम् ॥ अग्रे-वृधु वर्धने । वर्धनं वृद्धिः । 'क्तिः' इति क्तिप्रत्ययः । ति । 'तथोर्धः' इति तिस्थाने धिः । 'झबे जबाः' इति धस्य दः । 'स्वरहीनं परेण संयोज्यम्' ॥ अग्रे-षिधू शास्त्रे माङ्गल्ये च । षिधू । 'आदेः ष्णः स्नः' सिधू । सेधनं सिद्धिः । क्तिप्रत्ययादिकं प्राग्वत् । अत्र शब्दा-शब्दानभिज्ञा बाला न तु स्तनंधयाः । यदि वा अधीतान्यशास्त्रा अव्यनभ्यस्तशब्दशास्त्रा बालाः । सर्वशास्त्रेषु शब्दशास्त्रं प्रधानम् । यतः 'अनधीत्य शब्दशास्त्रं योऽन्यच्छास्त्रं

---

स्यर्थः । अनेन सरस्वतीकृतप्रक्रियाया दुर्बोधत्वं सूचितम् । निर्विघ्नपरिसमाप्तये मङ्गलमाचरति—ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारात् । तत्र किंनाम मङ्गलं तदाह—'वन्दनं गुरुदेवानां ग्रहशान्तिर्द्विजार्चनम् । शुभद्रव्यावलोकश्च मङ्गलं परिचक्षते॥' इति । किमर्थं मङ्गलं क्रियते कविना । विघ्न-

---

शब्दस्य व्याख्यायां महाभाष्ये उक्तम्, यन्माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते—मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति ॥ बालधीवृद्धिसिद्धये इति । ध्यायतेऽनयेति धीर्बुद्धिः, ध्यायतेः क्विपि सम्प्रसारणे दीर्घः । धियो वृद्धिरिति धीवृद्धिः । बालानां धीवृद्धिर्बालधीवृद्धिः । तस्याः सिद्धिरिति तस्यै बालधीवृद्धिसिद्धये । बालपदेनात्र न स्तनन्धयरूपोऽर्थः, किन्तु शब्दापशब्दविवेकशून्यरूपः । नातिविस्तरामिति । न विद्यते-ऽतिविस्तरः सूत्रबाहुल्यं यस्यां ताम् । अत्यल्पामित्यर्थः । नाकादिवर्जामिति निषेधादनुस्वर इति नानादेशः । असमासो वा । सारस्वतीमिति । सरस्वत्या प्रणीता सारस्वती । सरस्वतीशब्दात्तत्प्रणीतेऽर्थेऽण्, तत ईप् ताम् वाणीप्रणीतामित्यर्थः । प्रक्रियामिति । शब्दानुशासनमित्यर्थः । ऋजुमिति । सरलामित्यर्थः । कुर्वे इति । अहमिति शेषः ।

समीहते मूढः । सोऽहेः पदानि गणयति निशि तमसि जले चिरगतस्य ॥' तथा च । 'अङ्गीकृतं कोटिमितं च शास्त्रं नाङ्गीकृतं व्याकरणं च येन । न शोभते तस्य मुखारविन्दं सिन्दूरबिन्दुर्विधवाललाटे ॥' इति वचनात् । धियो वृद्धिर्धीवृद्धिः । तेषां बालानां या धीवृद्धिर्बुद्धिवृद्धिर्व्युत्पत्तिस्तस्याः सिद्धिः बालधीवृद्धिसिद्धिः । तस्यै बालधीवृद्धिसिद्धये चतुर्थ्येकवचनं ङे । ए । 'ङिति' द्धि इत्यस्य द्धे । 'स्वरहीनं परेण संयोज्यम्' । बालधीवृद्धिसिद्धये ॥ अग्रे सरस्वती । सृगतौ सृ 'वचादेरस्' गुणः । 'स्वरहीनं०' सरः प्रसारणं मुखे मुखे अस्त्यस्या इति 'मान्तोपधाद्वस्विनौ' इति अस्त्यर्थे वतुः । 'ङिद्वतः' इतीप् । 'स्वरहीनं०' । ततः सरस्वत्या प्रणीतानि सूत्राणि सारस्वतानि । ततः सारस्वतेभ्यः सूत्रेभ्यो जाता सारस्वती । 'कारकात्क्रियायुक्ते' अण्प्रत्ययः । अ । 'आदिस्वरस्य ञ्णिति वृद्धिः' स इत्यस्य सा । 'यस्य लोपः' ईकारलोपः 'स्वरहीनं०' । 'नूण ईप्' इतीप् प्रत्ययः । 'स्वरहीनं०' । द्वितीयैकवचनम् अम् । 'अमूशसोरस्य' अलोपः ॥ सरस्वत्या प्रणीतानि यानि सूत्राणि इति युक्त्या । 'वृद्धाच्छः+' 'यस्य लोपः+' इति पाणिनीयस्य छप्रत्ययस्य संभवः । छस्य इयादेशः । तदा सारस्वतीया इति भवति । तेन सरस्वत्या प्रणीता या सा सारस्वती तां सारस्वतीम् । इत्येके ॥ अग्रे-ऋजु । द्वितीयैकवचनम् अम् । 'अमूशसोरस्य' इत्यकारस्य लोपः । 'मोऽनुस्वारः' । ऋजुम् ॥ 'वोर्गुणात्' इति विकल्पेन ईप् । तेन स्त्रीलिङ्गेऽपि ऋज्वी, ऋजुरिति रूपद्वयं स्यात् । अग्रे-कुर्वे । डुकृञ् करणे । कृ आत्मनेपदे वर्तमानोत्तमपुरुषैकवचनम् । ए । 'तनादेरुप्' इति उप्रत्ययः । उ । गुणः । कर् । 'स्वरहीनं०' करु । 'हित्यदुः' क इत्यस्य कुः । 'उ वम्' 'रात्पो द्विः' । जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् । 'स्वरहीनं०' कुर्वे इति सिद्धम् ॥ अग्रे-प्रक्रियाम् । पुनः डुकृञ् करणे । कृ प्रपूर्वः । प्रक्रियन्ते व्युत्पाद्यन्ते साध्यन्ते शब्दा अनयेति प्रक्रिया । 'सदोणादयः' इत्यप्रत्ययः । 'अयकि' कृ इत्यस्य क्रि । 'नुधातोः' इतीय् क्रिय् । 'स्वरहीनं०' क्रिय् । 'आवतः स्त्रियाम्' 'सवर्णे दीर्घः सह' तां प्रक्रियाम् । 'अमूशसोरस्य' 'मोऽनुस्वारः' । अथवा डुकृञ् करणे । कृ । 'स्त्रियां यजां भावे कृञो यवाक्' इति यक् । रिङ् । क्रिया कृत्या ॥ अथवा-क्रियादयः शान्ता निपात्याः । कृ । ततः 'कृञः श च+' कृञो भावादौ श स्यात् । 'क्यप् च+' स्त्रियां शित्वात् भावे यक् रिङादेशः । प्रपूर्वः । प्रक्रिया तां प्रक्रियाम् । द्वितीयैकवचनम् अम् । 'अमूशसोरस्य' 'मोऽनुस्वारः' ॥ ततोऽग्रे स्तृ विस्तारे स्तृ विपूर्वः विस्तरतीति विस्तरः । 'पचिनन्दिग्रहादेरयुणानिः' इत्यप्रत्ययः । मतान्तरे-'मदामः' इत्यप्रत्ययः । गुणः । विस्तरः । 'स्वरहीनं०' । अतिपूर्वः अतिविस्तरः । निषेधार्थे नञ्पूर्वः । न विद्यते अतिविस्तरः शब्दबाहुल्यं यस्यां सा नातिविस्तरा तां नातिविस्तरामित्यत्र नाकादिवत् 'अनुस्वरे' इत्यनेन नञोऽनादेशप्रतिषेधः । यद्वा-केचित्तु बहुव्रीहौ नञो अनादेशमेव नेच्छन्ति । अथ वा-न इति पृथगेव

---

निवारणाय । 'शिष्टैर्विघ्ननिवारणाय मङ्गलं क्रियते' इति सदाचारात् । तथोक्तम्—'नित्यं पथ्याशिनां प्रशस्तिस्थाननिवासिनाम् । मङ्गलं चरतां विघ्नोपनिपातो न विद्यते ॥' इति । कादम्बर्यादौ मङ्गलं कृतेऽपि न तत्परिसमाप्तिः, बौद्धेन न कृतं तत्प्रणीतसमाप्तिश्च दृष्टा, अतो मङ्गलं न सदिति चेन्न । प्राक्तनसंस्कारं विना

पदम् । ततः 'सवर्णे दीर्घः सह' । 'आवतः स्त्रियाम्' इति आप्प्रत्ययः । 'सवर्णे०' द्वितीयैकवचनम् अम् । 'अमृशसोरस्य' 'मोऽनुस्वारः' इति प्रथमश्लोकस्य साधना ॥

अथ व्याख्या—प्रणम्य, परमात्मानम्, बालधीवृद्धिसिद्धये, सारस्वतीम्, ऋजुम्, कुर्वे, प्रक्रियाम्, नातिविस्तराम्, एवमस्मिन् श्लोके अष्टौ पदानि सन्ति ॥

अथान्वयः—अहमनुभूतिस्वरूपचार्यः सारस्वतीं प्रक्रियामृजुं सरलां कुर्वे विदधे । लोकप्रसिद्धशब्दव्युत्पादनार्थमीपद्रचयामीत्यर्थः । कुर्वे इत्यस्य पठनपाठनादुत्पन्नस्य पुण्यरूपफलस्य कर्तृगामित्वादात्मनेपदप्रयोगो युक्त एव । किंनामधेयां प्रक्रियाम् ? । सारस्वतीं सरस्वतीप्रणीतसूत्रसंबन्धिनीमित्यर्थः । ननु शास्त्रादौ मङ्गलाचरणं विना शास्त्रसमाप्तिर्न स्यादत आह—किं कृत्वा ? । परमात्मानं परमेश्वरं प्रणम्य प्रकर्षेण मनोवाक्कायैर्नत्वा । परमात्मनि नमस्कृते सर्वेऽपि देवा नमस्कृताः स्युः । यथोक्तं भागवते—'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या' । इति । तथा च प्रशब्दस्य माङ्गलिकत्वादादौ प्रयोगः । तथा च—'प्रशब्दश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ ततो माङ्गलिकावुभौ' । ननु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' अतोऽत्र प्रक्रियाया ऋजुकरणे किं प्रयोजनमित्यत आह—कस्यै ? बालधीवृद्धिसिद्धये । सत्स्वपि महाभाष्यादिषु तेषां गहनत्वेन बालानां सम्यगप्रबोधात् । स्वल्पबुद्धीन् जनांस्तेषु चानादरान् संभाव्येमां प्रक्रियामवैयाकरणजनबुद्धिवर्धननिष्पत्त्यर्थं कुर्वे इत्यर्थः । चिकीर्षितायामपि प्रक्रियायां वक्रत्वकरणे भूयांसो जना निरादरा बोभूयन्ते तन्निरासार्थमाह—ऋजुमिति । सरलामित्यर्थः । सरस्वतीदत्तसूत्राणां क्रममुत्सृज्य प्रयोगसाधनार्थं यत्र तत्र स्थितानां सूत्राणामनुक्रममेलनेन ऋजुं सरलां कुर्वे इत्यर्थः । ननु भो, ऋजुमित्येव कथं कृतम् ऋज्वीमिति कथं न स्यात् । तत्रोच्यते—'वोर्गुणात्' इत्यनेन सूत्रेण वा ईप्रत्ययः । द्वे रूपे ऋजुम् ऋज्वीमिति भवतः । परं छन्दोभङ्गभिया नोच्चार्यते । ऋजुरपि प्रक्रिया विस्तरबाहुल्यादध्येतुमशक्या अत आह—नातिविस्तराम् । विस्तरः शब्दबाहुल्यं तेन रहितां स्वल्पग्रन्थां प्रचुरार्थामित्यर्थः । एतावता सर्वाण्यपि सूत्राण्यादायोदाहरणसाधनार्थं बालव्युत्पत्त्यर्थं च दीपिकाकल्पामिमां प्रक्रियां कुर्वे इति भावः ॥ अत्र बालधीवृद्धिः प्रयोजनम् । शब्दा विषयाः । अधिकारिणो बालाः । प्रतिपाद्यप्रतिपादकभावः संबन्धः । इति प्रथमश्लोकस्य व्याख्या ॥ १ ॥

## ❋ प्रसादः ❋

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

नमस्कृत्य जगन्नाथं रामं राजीवलोचनम् ।
ससीतं लक्ष्मणोपेतं मुरारिकुलभूषणम् ॥ १ ॥

---

किमपि न सम्भवति । अतो बौद्धेन पूर्वजन्मनि मङ्गलमाचरितं तेनात्राकृतेऽपि मङ्गले विघ्नवारणसम्भवात् । प्राचीनसंस्काराभावादपवित्रत्वेनाचरितत्वात्कादम्बर्यादीनां न सिद्धिर्याता । अतो मङ्गलं सदेव तदेवाह—परमात्मानं प्रणम्येति । पिपर्तीति परः । माया लक्ष्म्या आत्मा जीवनं मात्मा । लक्ष्मीपतिरित्यर्थः । परश्चासौ

सारस्वतप्रसादाख्या बालानां बुद्धिदा मुदा ।
क्रियते वासुदेवेन सरस्वत्याः प्रसादतः ॥ २ ॥

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति भाष्योक्तेः शिष्टाचाराच्च ग्रन्थसमाप्त्यपेक्षितप्रारिप्सितप्रत्यूहापोहादिप्रतिबन्धकशमाय श्रीमद्भगवत्स्तुतिरूपं मङ्गलं ग्रन्थकृच्छिष्यशिक्षार्थं निबध्नाति ॥ प्रणम्येत्यादिना ॥ सारस्वतीमिति टिड्ढाणञिति ङीप् । प्रक्रियन्ते प्रकृतिप्रत्ययादिविभागेन व्युत्पाद्यन्ते शब्दा यया सा प्रक्रिया । तस्याश्च सरस्वतीप्रोक्तत्वेन सिद्धत्वात्तामनूद्य ऋजुत्वं विधीयते । तस्या एव च ऋजुत्वाभावान्मृदं घटं करोतीतिवत्कर्मत्वम् । अत एव सरस्वत्या प्रोक्तानि सूत्राणि सारस्वतानि तत्सम्बन्धिनी सारस्वतीति व्याख्याने वृद्धाच्छ इति छः स्यात् । तस्य च वृद्धसंज्ञापूर्वकत्वेन संज्ञापूर्वको विधिरनित्य इत्यनित्यत्वेन कथंचित्समाधानेऽपि शैषिकादणः शैषिकाणो निषेधः । सरस्वतीप्रोक्तप्रक्रियाकरणे च पिष्टपेषणादिदोष इत्यादि निरस्तम् । अभूततद्भावात्क्त्वो योगे च्विप्राप्तावपि महाविभाषानुवृत्तेर्न । अत्र यद्यप्यस्य बालव्युत्पादकत्वात्परगामित्वात्क्रियाफलस्य स्वरितञितः कर्त्रभिप्राये क्रियाफल इति नियमादात्मने पदमयुक्तं तथाप्यस्य वेदान्तानुसारित्वेन तत्त्वतः परगामित्वाभावात्तज्जन्यापूर्वस्यात्मगामित्वेन वाऽऽत्मनेपदम् । य्वोर्विहस इति दीर्घविधेर्दीर्घसंज्ञापूर्वकत्वेनानित्यत्वादीर्घविधेरल्पापेक्षत्वेनान्तरङ्गत्वात् असिद्धं बहिरङ्गमन्तरङ्ग इति वत्वस्यासिद्धत्वाद्वा कुर्व इत्यत्र दीर्घाभावः । आरम्भादासमाप्तेर्वर्त्तमानत्वम् । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वा सूत्रपाठादिक्रमातिक्रमेण च प्रयोगानुकूलसूत्रादिक्रमकरणादृजुकरणम् । अतश्च स्वकपोलकल्पितत्वाद्यनवकाशात्साक्षात्सरस्वतीप्रणीतत्वेनान्यप्रक्रियोत्कर्षश्च । केचित्तु—सरस्वतीसंज्ञकसन्न्यासिकृतत्वेन नवीनसूत्रवृत्त्यादिकृत्यक्रियाकरणप्रतिज्ञेति व्याख्यन् । तन्न । "सूत्रसप्तशतं यस्मै ददौ साक्षात्सरस्वती ।" इत्यादिना सर्वदेशप्रसिद्धत्वं च विरुद्धम् । ननु ऋजुत्वमात्रं वै विधीयते तदा यां कांचित्प्रक्रियामनूद्य ऋजुत्वं विधीयतामित्यत आह । किंविशिष्टां प्रक्रियाम् । नातिविस्तराम्, न अतिविस्तरः शब्दबाहुल्यं यस्यां सा तथा तां न अतिविस्तरा नातिविस्तरेति मयूरव्यंसकादित्वात्तत्पुरुषो वा । नैकधेत्यादिवन्निषेधार्थनकारेण समासात्सानुबन्धकग्रहणे न निरनुबन्धकस्येति अन्स्वरे इत्यनादेशो न । नेति पृथक्पदं वा । अयं भावः । व्याकरणस्य तावदनादिपरम्पराप्राप्तसाधुशासनत्वेन तेषां चानन्तत्वात्पाणिन्यादिभिरपि प्रयोगैकशरणैः पृषोदरादीनि यथोपदिष्टमित्यादिनाऽलाक्षणिकानामेव साधुत्वाभिधानाद्बालव्यामोहकविस्तरमसहन्त्या परमकरुणाकररूपया श्रीसरस्वत्यापि च वापि तु शब्दविपरीतविधानयोगविभागतन्त्रधर्म्मादिभिः समस्तसाधुशब्दानुशासन्त्या प्रक्रिया प्रकल्प्यानुभूतिस्वरूपाय स्वभक्तायानुभाविता । स च सर्वातिशयां तामनूद्य ऋजुत्वमर्ज्जयति । ननु "स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम्" इत्यन्तेऽभिधानादृजुत्वमात्रविधानमयुक्तमिति चेन्नैवम् । तत्रापि प्रक्रियामनूद्य शुभत्वविधा-

---

-त्मा च परमात्मा तम् । अथवा परः पूर्णः निरपेक्ष एवंभूतो मात्मा लक्ष्मीपतिस्तम् ॥ अयं भावः—कविभिर्विघ्ननिवारणकं भक्ष्याच्छादनसूक्तयो(?) नित्यमिष्यते । ततोऽयमपि परशब्देन पालकत्वसर्वज्ञत्वोपदर्शितः मात्मा परमात्मा तं तथाभूतम् । अथवा परा शत्रुरूपा मा येषां ते परमा ये विरक्तास्तेषामात्मा मनो

नात् । तस्मात्छन्दूक्तम् । ननु "श्रेयांसि बहुविघ्नानि" इति श्रेयः-साधनभूते प्रक्रिया-र्जवकरणे विघ्नैर्भवितव्यमत आह किं कृत्वा । परमात्मानं प्रणम्येति । परा जगत्कारण-तयोत्कृष्टा मा माया शक्तिर्यस्य स परमः । यस्य मायाऽचिन्त्यानन्तशक्तिरित्यर्थः । परैरुपनिषद्भागैः सदनुमानैर्वा मीयते ज्ञायते इति वा परमः । अतति विश्वं व्याप्नोति विषयानादत्ते इति वा स आत्मा परमश्चासावात्मा चेति परमात्मा कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः तं परमात्मानमिति । पृथक्पदे एव वा । प्रकर्षेण भक्तिश्रद्धा-तिशयेन नत्वा । प्रथमं प्रकर्षवाचिप्रशब्दप्रयोगः । श्रीशब्दादिवत्स्वरूपतो माङ्गलिक-त्वादेतदध्येतॄणां प्रज्ञाप्रकर्षध्वन्यर्थत्वाच्च । पूर्वकालार्थकवाक्यारम्भात्पूर्वमाचरणीयत्वं न-स्यादेर्द्योत्यते । ननु "सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धस्तत्प्रयोजनम् ॥ यावत्प्रयोजनं नोक्तं सम्बन्धो न निरूप्यते । सम्बन्धानभिधा-यित्वादूभ्रष्टा भवति सङ्गतिः" ॥ इति प्रयोजनं वक्तव्यमित्यत आह । किमर्थम् । बाल-धीवृद्धिसिद्धये इति । बले कामधेनुत्वाद्बलन्ति चलन्ति दुर्बोधार्थादिति बालाः शाब्दव्यु-त्पत्तिरहितास्तेषां धियो बुद्धिर्व्युत्पत्तिस्तयाः सिद्धिर्निष्पत्तिस्तस्यै । अयं भावः । "रक्षोहागमलघ्वसन्देहाः प्रयोजनानि" इत्यादिमहाभाष्योक्तव्याकरणप्रयोजनानाम् "रक्षा-द्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम् । न तदप्यन्यतः सिद्धेरुपसिद्धेस्ततोऽपि वा" इत्या-दिना तन्त्रवार्तिककारैरध्ययनादिभिरेव वेदपाठस्येव रक्षादेरपि तत एव सम्भवान्नातीव प्रयोजनत्वमुक्तमतः केवलं साधुत्वासाधुत्वज्ञानमेव प्रयोजनत्वेन विज्ञायते विचारविशेषश्च विस्तरभयान्नेहोक्तः । अत्र च प्रक्रियाऽऽर्जवो विषयः, बालव्युत्पत्तिः प्रयोजनम्, जन्यज-नकभावः सम्बन्धः, शब्दव्युत्पत्तिव्युत्पन्न श्चाधिकारी इत्यनुबन्धचतुष्टयमपि तत्तत्पदैः समसूचि ॥ १ ॥

**इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ।**
**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥**

( च० ) ननु विस्तरः कथं निरस्तः इत्याशङ्कानिवारकं स्वगर्वापहारसूचकं च द्विती-यश्लोकमाह—इन्द्रादयोऽपीति । अथैतस्य साधना । 'इदि परमैश्वर्ये' । इन्दति ईष्टे इतीन्द्रः 'नमादेः+' इद् अग्रे रप्रत्ययः । 'इदितो नुम् इति नुमागमः इ अग्रे न् द्र । 'नश्चापदान्ते झसे' नकारस्यानुस्वारः । 'स्वरहीनं०' ॥ अग्रे 'डुदाञ् दाने' दा आङ्पूर्वः । आदीयत इत्यादि । 'नक्वौ' इति क्विप्रत्ययः । इ । 'आतोऽनपि' इत्याकारलोपः । 'स्व-रहीनं०' 'सवर्णे दीर्घः सह'इन्द्र आदिर्येषां ते इन्द्रादयः । प्रथमाबहुवचनम्—ज —अस् । 'ए ओ जसि'दि इत्यस्य दे । 'ए अय्' 'स्वरहीनं०' 'स्रोर्विसर्गः' इन्द्रादयः ॥ अग्रे अपि प्रथमैकवचनम् सि 'अव्ययाद्विभक्तेः' सिलोपः । मध्ये 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' अ-लोपः ॥ 'अग्रे यद् षष्ठ्येकवचनम्—ङस् 'त्यदादेष्टेरः स्यादौ' इति यदित्यस्य य । 'ङस्स्य'

यस्मिन्त परमात्मा तम् । परमेषु आत्मा यस्येति वा बहुव्रीहिणा परमपुरुषार्थत्वं सूचितम् । सप्तमीबहु-व्रीहिणा कृपालुत्वं च । अथवा परैरुत्कृष्टैः सर्वतो विरक्तैर्योगिभिर्मीयते प्राप्यत इति परमः । 'नम्री च' इति डः । अततीत्यात्मा । सर्वग इत्यर्थः । परमश्चासावात्मा च परमात्मा तं, परम् आत्मानमिति वा छेदः ।

अग्रे—अन्तम् । द्वितीयैकवचनम् अम्—'अमूशसोरस्य' 'मोऽनुस्वारः' ॥ अग्रे—नेति प्रथमैकवचनं सि । 'अव्ययाद्विभक्तेर्लुक्' ॥ अग्रे 'या प्रापणे' । या । परोक्षप्रथमपुरुषबहुवचनम्—उस् । 'द्विश्च' इति द्वित्वम् । या या उस् इति स्थिते 'ह्रस्वः' पूर्वयास्थाने यः । 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' 'स्रोर्विसर्गः' ॥ अग्रे शप् आक्रोशे' । शप् शपति आक्रोशति जिह्वामिति शब्दः । उणादिषु दप्रत्ययः 'चपा अबे जबाः' पस्य बः । 'स्वरहीनं०' ॥ अग्रे 'डुधाञ् धारणपोषणयोः' । धा वारिपूर्वः । वारि धीयते यत्र स वारिधिः । 'नह्वी' इति किप्रत्ययः । इ । 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' शब्दानां वारिधिः शब्दवारिधिः । यद्वा-शब्दा एव वारीणि धीयन्ते अस्मिन्निति शब्दवारिधिः । षष्ठ्येकवचनम् ङस् । 'ङिति' धिस्थाने धे । 'ङस्य' इत्यकारलोपः । 'स्रोर्विसर्गः' अग्रे प्रक्रियामिति द्वितीयैकवचनम् अम् । 'अमूशसोरस्य' ॥ अग्रे तद् षष्ठ्येकवचनं ङस् । 'त्यदादेष्टेः स्यादौ' 'ङस्य' ॥ अग्रे कृत्स्नस्येति षष्ठ्येकवचनम् ङस् 'ङस्य' । अग्रे 'क्षम् सामर्थ्ये' क्षम् । क्षमते इति क्षमः 'पचिनन्दि०' इत्यप्रत्ययः । 'स्वरहीनं०' प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ 'वच परिभाषणे' वच् । 'तुम् तदर्थायां भविष्यति' इति तुम्प्रत्ययः । 'चोः कुः' 'स्वरहीनं०' । प्रथमैकवचनान्तम् । 'अव्ययाद्विभक्तेर्लुक्' ॥ अग्रे 'नृ विक्षेपे' 'नृ । नॄयते विक्षिप्यते कामादिभिरिति नरः । 'स्वरादः' इत्यप्रत्ययः । गुणः । नरः । 'स्वरहीनं०' प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः ॥' अग्रे किंशब्दस्य तृतीयैकवचनं टा । 'टा ना स्त्रियाम्' । 'तत्रादिर्गणो विभक्त्यर्थे निपात्यते + +' इति विभक्तिसहितस्य किमित्यस्य कथं निपातः इति द्वितीयश्लोकसाधनिका ॥

अथ व्याख्या । इन्द्रादयोऽपीति । अस्मिन् श्लोके चतुर्दश पदानि सन्ति तान्याह-इन्द्रादयः, अपि, यस्य, अन्तम् , न, ययुः, शब्दवारिधेः, प्रक्रियाम् , तस्य, कृत्स्नस्य, क्षमः, वक्तुम् , नरः. कथम् ॥

अथान्वयः । इन्द्रादयो देवाः अपिशब्दाद्व्यासवाल्मीक्यादय ऋषयोऽपि । अथवा । इन्द्रादयोऽष्टौ महाव्याकरणकर्तारोऽपि यस्य शब्दवारिधेः शब्दसमुद्रस्य व्याकरणस्यान्तं पारं न ययुर्न प्रापुः । तस्य कृत्स्नस्य समग्रस्य शब्दवारिधेः प्रक्रियां शब्दव्युत्पादनविधां वक्तुं नरः मल्लक्षणो मनुष्यः कथं क्षमः कथं समर्थो भवति । अतः कारणात् संक्षेपतः कथयामीत्यर्थः । इन्द्र आदिर्येषां ते इन्द्रादयः । 'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः' इति ॥ २ ॥

( प्र० ) नन्वपूर्वेव सर्वशब्दाव्युत्पत्त्यादिकापि प्रक्रिया क्रियतामित्यत आह । इन्द्रादय इति । "इन्द्रश्चन्द्रः काशकृत्स्नाऽपिशली शाकटायनः ॥ पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः" इत्याद्युक्ता ऐन्द्रचान्द्रादिव्याकृतिकर्तारः महेन्द्रादयो देवा वा यस्य शब्दवारिधेः शब्दसमुद्रस्य अन्तं परं पारमियत्तया परिच्छेदं न ययुः न प्रापुः । तथा च श्रुतिः "दिव्यं वर्षसहस्रं च किलेन्द्राय बृहस्पतिः परायणं प्रोवाच नान्तं जगाम ॥"

---

आत्मानं प्रणम्य प्रकर्षेण नत्वा । कायवाङ्मनोभिर्नमनम् । प्रकर्षो मङ्गलवाचकः । 'आत्मा जीवे मुने देहे स्वभावे परमात्मनि' इति कोशात् । एषु कतममात्मानं प्रणमसीति चेत्तत्राह—परमिति । परं पूर्णं तथाभूतमात्मानम् । व्यापकमित्यर्थः । तथाच वेदान्तसारे—'अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् । आत्मानमखि

इति तस्य कृत्स्नस्य समस्तस्य प्रक्रियां वक्तुं नरो मादृङ् मनुष्यः कथं क्षमः समर्थः । अपिः कैमुतिकन्यायसंसूचनार्थः व्यासवाल्मीक्याद्यनुक्तसमुच्चयार्थो वा । अयमभिसन्धिः । यदा वाचस्पत्यादयो वक्तारः इन्द्रादयश्चाध्येतारः दिव्यवर्षसहस्रादिश्च समयस्तथापि प्रतिपदपाठेनापि पारगमनं दुस्तरतरं तद्व्युत्पादनं तत्र मादृशमनुष्येण मन्दमतिना मन्दभाग्येनाल्पायुषाऽनन्तविघ्नाभिभूतेन कथङ्कारसर्वशब्दव्युत्पादकं प्रक्रियान्तरं कार्यमित्यतस्तस्या एवानुवादेन ऋजुत्वविधानमुचितमिति ॥ २ ॥

---

# * अथ संज्ञाप्रकरणम् । १ । *

## तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते(क) ॥

( च० ) अथ प्रथमं संज्ञाप्रक्रियायां विवक्षितायां संज्ञाव्याख्यानसूचिकां फक्किकामाह—तत्र तावत्संज्ञेति । तत्र तस्यां सारस्वतीप्रक्रियायां तावदादौ प्रथममेव समानस्वरादीनां संज्ञा नाम मया संगृह्यते । कस्मै प्रयोजनाय ? संव्यवहाराय सम्यक्शास्त्रव्यवहाराय । शास्त्रे हि संज्ञां विना न सम्यगवबुध्यते । यथा किल लोकेऽपि श्रूयते—अयं राजा अयममात्यः अयं यज्ञदत्तः अयं देवदत्त इत्यादि । तथाऽत्रापि समानादिसंज्ञा शास्त्रव्यवहाराय संगृह्यते इति भावः ॥

( प्र० ) संज्ञाविधानमन्तरेण सुखप्रतिपत्त्यसम्भवादाभिधास्यमानसंज्ञासंग्रहं प्रतिजानाते । तत्रेति । तस्मिन्प्रक्रियाऽर्जवे विधेये तावत्प्रथमं संव्यवहाराय सम्यक्शास्त्रप्रवृत्तये । संज्ञा अस्मात्पदादयमर्थो बोध्य इत्येवं संकेतरूपा सरस्वती पूर्वाचार्यैश्च कृता । मया संगृह्यत इत्यर्थः ॥

**अइउऋऌ समानाः ॥** अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते । तेषां समानसंज्ञा च विधीयते ॥ नैतेषु सूत्रेषु सन्धिरनुसन्धयोऽविवक्षितत्वात् । विवक्षितस्तु सन्धिर्भवतीति नियमात् लौकिकप्रयोगनिष्पत्तये समयमात्रत्वाच्च(ख) ॥ १ ॥

---

त्साधारमाश्रयेऽभीष्टसिद्धये ॥' इति । तथाभूतं ब्रह्मैव । ननु गुरुगणेशादीन्विहाय कथं परमात्मानं प्रणम्येत्युक्तम् । सत्यम् । परमात्मानं नमस्कृते सर्व एव नमस्कृताः स्युः तस्य सर्वान्तर्यामित्वात् । तथाचोक्तं भागवते चतुर्थस्कन्धे—'यथा तरोर्मूलनिषेचनेन' इति । मनुः(?)–'अधिकारी च सम्बन्धो विषयश्च प्रयोजनम् ।

---

( क ) संज्ञाविधानमन्तरेण सुखप्रतिपत्तेरभावादभिधास्यमानसंज्ञासङ्ग्रहं प्रतिजानीते–तत्रेति । तस्मिन् प्रक्रियार्जवे तावदादौ संज्ञाऽस्मात्पदादयमर्थो बोध्य इत्येवं रूपा वाणी पूर्वाचार्यकृता च संव्यवहाराय सम्यक् व्यवहरणं संव्यवहारः 'भावे घञ्' तस्मै सम्यक् शास्त्रप्रवृत्तये संगृह्यते मयेति शेषः ।

( ख ) अइउऋऌ समानाः । संज्ञासूत्रमिदम् । संज्ञात्मकत्वं चास्य 'आद्यन्ताभ्याम्' इत्यनेन संज्ञाविधायकसूत्रेण सहैकवाक्यत्वात् । तेनावेल इत्यादिप्रत्याहारसंज्ञा सिध्यति । यद्यपि अकारादीनामर्थस्याविवक्षितत्वात्प्रातिपदिकत्वासम्भवाद्विभक्तेरसम्भवे पदत्वासम्भवः, तथापि वासुदेवादीनामर्थानां सत्त्वात्तदविवक्षामात्रात्प्रातिपदिकसंज्ञानिषेधासम्भवान्निपातस्य चानर्थकस्येति वा प्रातिपदिकत्वाद्विभक्तेरुत्पत्तेः पदत्वं, तस्याश्च

( च० ) तत्र मातृकायां प्रथमं पठितत्वात् प्रथमं स्वराणामेव संज्ञामाह—सूत्रम् ।

**'अ इ उ ऋ ऌ समानाः ।'** अश्च, इश्च, उश्च, ऋश्च, ऌश्च, अइउऋऌ प्रथमाबहुवचनान्तम् । साङ्केतिकत्वाज्जसूलोपः । यतः 'सूत्रे विभक्तिर्नैवास्ति वृत्तौ यत्रोपलभ्यते । एकद्वित्वबहुत्वादि तत्साङ्केतिकमुच्यते' । समानाः । समानं तुल्यं मानं परिमाणं येषां

---

अवश्यमेव वक्तव्यं शास्त्रादौ तु चतुष्टयम् ॥' इति ग्रन्थप्रामाण्याय चतुष्टयमपेक्षणीयम् । आचार्यैस्तत्करणे किं प्रयोजनम् । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । तत्र चतुष्टयं वदन्स्वप्रयोजनमाह—बालधीवृद्धिसिद्धये इति । बाला अनधीतव्याकरणाः तेषामेव शब्दापशब्दज्ञानाभावात् । न तु स्तनपाः ।

---

छन्दोवत्सूत्राणि भवन्तीति' छान्दसत्वाश्रयणात् सुपां सुलुगिति लुक्" । विभक्तेः प्रायशो लोपो वर्णस्य च पदस्य च सरस्वतीकृते सूत्रे ह्रस्वोक्तौ दीर्घसङ्ग्रहः । बहुवचनं प्रत्येकसंसिद्ध्यर्थम् । अन्यथा वृक्षावनमित्यादिवत्समुदायसंज्ञा स्यात् तच्च संज्ञासञ्ज्ञिनोरभेदोपचाराद् विसन्धिनिर्देशश्च विष्णुप्रभृत्यर्थान्तरसंस्मरणेन मङ्गलार्थः । अतः षट्पदमिदं सूत्रम् इति केचित् । अपरे पुनराहुः, अत्राकारादिषु अर्थवत्सु सत्स्वपि स्वरूपग्रहणस्येष्टत्वेनार्थवत्त्वस्याविवक्षितत्वमस्ति । अर्थवत्त्वाभावान्न नामसंज्ञा, नामताभावान्न स्याद्युत्पत्तिः, अविभक्तिकानां समासो न भवति पदानामेव समास इत्युक्तत्वात् । समासाभावाद्वाक्यमात्रतः साङ्केतिकं षट्पदमिदं सूत्रम् । नन्वत्र सन्धिः कथं न कृतः ? उच्यते । वर्णानामसन्दिग्धत्वेन बोधनायाविवक्षितत्वादेतेष्वसन्धिः । एतदपरे न सहन्ते, अयमसहनाशयः—व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति वचनाद्व्याख्यानेन तत्सन्देहनिरासस्सम्भव इति । अन्यस्तु—अस्याद्यसूत्रत्वेन संधिसूत्राणामसिद्धत्वात्तदभावइत्याह । तदन्ये न मन्यन्ते । व्याकरणस्यानादित्वेनातोऽत्युरित्यादाविव सन्धिसम्भवात् । केचित्तेषां चादिषु पाठान्निपातसंज्ञा । 'औनिपात' इति प्रकृतिभावान्न सन्धिरित्याहुः । अन्ये तु—षट्पदत्वेन वाक्यत्वात् 'संहितैकपदे नित्या नित्या धातूपसर्गयोः, नित्या समासे वाक्ये तु सा विवक्षामपेक्षते"इति वचनाद्विवक्षाऽभावात्सन्ध्यभावः, इत्याहुः । एवमुत्तरत्र ग्रन्थसङ्गतिरपि । इतरे तु द्विपदमेव कुर्वते । सन्ध्यभावस्तु पूर्वरीत्यैवेत्याहुः । तेषामुत्तरग्रन्थविरोधः । ननु वर्णात्कार इत्यनेनैभ्यः कारप्रत्ययः कथं न स्यात् । उच्यते । वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसम्भवान्न कारप्रत्यय । ननु आकारादीनामुपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टा तथा ऋऌ वर्णयोः सावर्ण्यादृकारोपदेशेनैवोभयग्रहणसिद्धेः किं पृथगुपदेशः कृतः । कथ्यते । ऋऌवर्णयोः सावर्ण्यस्यानित्यताज्ञापनायोभयोरुपदेशः । तत्फलन्तु क्लृप्ता शिखा यस्य स क्लृप्तशिखः, तस्य सम्बोधने हे क्लृप्तशिखेत्यत्र प्लुतभवनम् । ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु गुरोरनृतोऽनन्त्यस्यापीत्यत्रानृत इति निषेधादृकारस्येव ऌकारस्यापि प्लुतो न स्यात् । ननु समाना इति महासंज्ञाविधानात् समानं तुल्यं मानं परिमाणमित्यन्वर्थत्वाद्भिन्नस्वरूपाणामेषां कथं समानत्वमिति चेत्, सत्यम् । ह्रस्वदीर्घप्लुतोदात्तानुदात्तसमाहारसानुनासिकनिरनुनासिकसंवृतविवृतादिभरेतैः समानमानत्वादान्वर्थ्यम् । ननु वर्णपरिगणनमन्तरेण संज्ञाविधानानुपपत्तेरैकवाक्यादेकं वाक्यं साकांक्षं चेद्विभागस्यादित्येकेनानेन वाक्येन वाक्यभेदप्रसङ्गादर्थद्वयप्रतिपादनमयुक्तमित्यत आह —अनेनेति । वर्णपरिगणनस्यानुषङ्गिकत्वादर्थद्वयम् । विधानाभावान्न वाक्यभेदापत्तिरिति भावः । प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णा यैः प्रतिकार्यमाह्रियन्ते वा प्रत्याह्रियन्ते सङ्क्षिप्यन्ते इति वा प्रत्याहारा अवादिसंज्ञास्तेषां ग्रहणायेत्यर्थः ।

ननु एतेषु सूत्रेषु सन्धिः कथं न कृत इत्यत आह-नैतेष्विति । एतेषु सूत्रेष्विति बहुवचनं वक्ष्यमाणसूत्राभिप्रायेण जात्याभिप्रायेण वा । विवक्षितस्त्विति । अत्र यद्यपि सन्धिरविवक्षित एव भवति विवक्षितः सन्धिरेव भवतीत्युभयथापि नियमासंभव एकपदादौ विवक्षाभावेऽपि सन्धेरावश्यकत्वात् । इकारोकारान्तानां द्विवचनान्तानामेकस्वराणां निपातानां च शतशो विवक्षायामपि सन्ध्यसम्भवाच्च । तथापि विशेषार्थानुशब्दाद्वाक्यविषयत्वं नियमस्यावगम्यते ।

सन्धिविवक्षाभावे कारणमाह—लौकिकेति । समयः सङ्केतस्तन्मात्रत्वात् ।

ते समानाः प्रथमाबहुवचनान्तम् । 'सवर्णे०, 'स्रोर्विसर्गः' ॥ यद्वा । अ इ उ ऋ ऌ इति प्रत्येकं प्रथमैकवचनान्तानि साङ्केतिकानि पञ्चैव भिन्नानि पदानि । समाना इति प्रथमाबहुवचनान्तम् । एवं षट्पदमिदं सूत्रम् । षट्पदत्वमेव युक्तम् । यतः 'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इति । यद्यपि 'अइकौ च मत्वर्थे' इत्यादौ समासेऽपि संधिर्न तथाऽप्यसार्वत्रिकोऽयं विधिरिति । केचित्तु-एकाविति सन्धिरेव दृश्यते ॥ एतत्सूत्रं कार्यद्वयविधायकं वर्णपरिगणनानिरूपकं समानसंज्ञानिरूपकं चेत्यर्थः । तदेवाह—अनेनेति । अनेनोक्तवक्ष्यमाणसूत्रसमुच्चयेन प्रत्याहारग्रहणाय वर्णा अक्षराणि परि सामस्त्येन गण्यन्ते संख्याक्रियन्ते परिपाट्या प्रकाश्यन्ते । च पुनस्तेषां पूर्वोक्तानाम् अइउऋऌअक्षराणां समानसंज्ञा समान इति नाम विधीयते क्रियते । अथवा अभिधीयते कथ्यते ॥ ननु पञ्चानामकारादीनां न्यासवैसदृश्ये कथं समानसंज्ञा सङ्घटीति ? अत्रोच्यते । एकमात्रत्वेन समानत्वमेतेषाम् ।। ननु अइउऋऌ इत्यादिषु सूत्रेषु सन्धिः कथं न कृतस्तत्राह—नैतेष्विति । एतेषु उक्तवक्ष्यमाणेषु सूत्रेषु सन्धिर्वर्णानुसन्धेयः न कर्तव्यः । कस्मात् ? अविवक्षितत्वात् वक्तुमिष्टो विवक्षितः । यद्वा वक्तुमिच्छा विवक्षा विवक्षा जाता अस्येति विवक्षितः न विवक्षितोऽविवक्षितः तस्य भावोऽविवक्षितत्वं तस्माद विवक्षितत्वात् । वक्तुमवाञ्छितत्वात् ।। हेत्वन्तरमाह—विवक्षितस्त्विति । तु पुनर्विवक्षित एव सन्धिर्भवति नाविवक्षित इति नियमात् गुर्वाम्नायनिश्चयात् । यत्र सन्धौ कृते कार्यभ्रंशो भवति सोऽविवक्षितः सन्धिर्यथा-अ इ उ ऋ ऌ इत्यस्य य्वर्ल् इति स्यात् । यत्र च सन्धौ कृते कार्यसिद्धिर्भवति स विवक्षितः सन्धिः । यथा—ई च ऊ च ए च य्वे इत्यादिषु न निषेधः । हेतुमाह—लौकिकेति । लोक्यन्ते विलोक्यन्ते शब्दापशब्दा अनेनेति लोको व्याकरणं लोके भवा लौकिका अनादिसिद्धास्ते च ते प्रयोगाश्च लौकिकप्रयोगास्तेषां निष्पत्तिः सिद्धिः लौकिकप्रयोगनिष्पत्तिस्तस्यै लौकिकप्रयोगनिष्पत्तये । समयमात्रत्वात्सूचनामात्रकृत्वात् । विभक्त्यादिसंकेतरूपत्वात् शास्त्रस्येति सन्धिर्न कृतः । अस्य व्याकरणस्य सङ्केतरूपत्वात् विभक्त्यनुपलम्भेऽपि अर्थानुसारेण शाङ्केतिकं पदं व्यवहर्तव्यम् ॥ चशब्दो हेत्वन्तरसूचकः । अत्र केऽप्याहुः । लोके भवा लौकिका बालास्तेषां प्रयोगनिष्पत्तिस्तस्यै सूचनमेवोक्तमत्रास्तीति भावः । अस्य व्याकरणस्य सङ्केतरूपत्वात् । विभक्त्यनुपलम्भेऽप्यर्थानुसारेण साङ्केतिकं पदं व्यवहर्तव्यम् । कृते हि सन्धिकार्ये अय्वर्ल् इति पदं भवति तत्पाठे मन्दबुद्धयो जनाः सायासाः संजायन्ते यकारादीनां च स्वरसंज्ञाप्रसक्तिर्भवति अतोऽत्र सन्धिर्न कृतः ॥ १ ॥

( प्र० ) तत्राकारादिक्रमेण वर्णमातृकामभ्युपदेष्टुमाद्यसूत्रमाह । अइउ इति । षट्पदमिदं संज्ञासूत्रम् । यद्यपि अकारादीनामर्थस्याविवक्षितत्वात्प्रातिपदिकत्वासम्भवाद्विभक्त्यसम्भवे पदत्वासम्भवस्तथापि वासुदेवादीनामर्थानां सत्त्वात्तद्विवक्षामात्रात्प्राति-

---

धियो वृद्धिर्धीवृद्धिः बुद्धिवृद्धिः बालेभ्यो धीवृद्धिर्बालधीवृद्धिरिति तादर्थ्ये चतुर्थीतत्पुरुषः । बालानां धीवृद्धिरिति न षष्ठीतत्पुरुषः कार्यः । बालानामज्ञानिनां धीर्बुद्धिः अज्ञानधीः तस्या वृद्धिरिति दूषणात् । बालधीवृद्धिश्चासौ सिद्धिश्च बालधीवृद्धिसिद्धिस्तस्यै ॥ बालधीवृद्धेः सिद्धिरिति तत्पुरुषो न कार्यः । कुतः । तस्य

पदिकसंज्ञानिषेधासम्भवान्निपातस्य चानर्थकस्येति वा प्रातिपदिकत्वाद्विभक्त्युत्पत्तेः। पदत्वं तस्याश्च छन्दोवत्सूत्राणि भवन्तीति छान्दसत्वाश्रयणात्ऽपां सुलुगिति लुक् । तथोक्तम् "विभक्तेः प्रायशो लोपो वर्णस्य च पदस्य च ॥ सरस्वतीकृते सूक्ते ह्रस्वोक्तौ दीर्घसंग्रहः" बहुवचनं च प्रत्येकसंसिद्ध्यर्थम् । अन्यथा वृक्षा वनमितिवत्समुदायसंज्ञा स्यात् तच्च संज्ञासंज्ञिनोरभेदोपचारात् विसन्धिनिर्देशश्च विष्णुप्रभृत्यर्थान्तरसंस्मरणेन मङ्गलार्थः । यत्तु सन्ध्यकरणमसन्देहार्थम्, सन्धौ हि सति सकारादीनामपि समानसंज्ञासन्देहः स्यात् । तदयुक्तम् । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति वचनाद्व्याख्यानेन तत्सन्देहनिराससम्भवात् । अन्यस्त्वस्याद्यसूत्रत्वेन सन्धिसूत्राणामसिद्धत्वात्तदभाव इत्याह । तदप्यसत् । व्याकरणस्यानादित्वेनातोऽत्युरित्यादाविव सन्धिसम्भवात् । केचित्त्वेषां निपातोक्तपाठान्निपात एकाजनाङिति प्रगृह्यत्वात्प्लुतप्रगृह्याचीति प्रकृतिभावमाहुः । अपरे तु षट्पदत्वेन वाक्यत्वात् "संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्यासमासे वाक्ये तु सा विवक्षामपेक्षते ॥" इति वचनाद्विवक्षाऽभावात्सन्ध्यभाव इत्याहुः । एवं चाग्रिमग्रन्थसङ्गतिरपि । इतरे तु द्विपदमेव कुर्वते सन्ध्यभावस्तु पूर्वयुक्त्यैवेत्याहुस्तेषामुत्तरग्रन्थविरोधः । ननु समाना इति महासंज्ञाविधानात् समानं तुल्यं मानं परिमाणमित्यन्वर्थत्वाद्भिन्नस्वरूपाणामेषां कथं समानत्वमिति चेत् । सत्यम् । ह्रस्वदीर्घप्लुतोदात्तानुदात्तसमाहारसानुनासिकनिरनुनासिकसम्वृतविवृतादिभिरेतैः समानमानत्वादन्वर्थम् ननु वर्णपरिगणनमन्तरेण संज्ञाविधानानुपपत्तेरर्थैक्यादेकं वाक्यं साकांक्षं चेद्विभागे स्यादित्येकेनानेन वाक्येन वाक्यभेदप्रसङ्गादर्थद्वयप्रतिपादनमयुक्तमित्यत आह । अनेनेति । वर्णपरिगणनस्यानुषङ्गिकत्वादर्थद्वयम् । विधानाभावाच्च वाक्यभेदापत्तिरिति भावः प्रत्याह्रियन्ते सङ्कोच्यन्ते वर्णा यैः प्रतिकार्यमाह्रियन्ते वा प्रत्याह्रियन्ते सङ्कोच्यन्ते इति वा प्रत्याहारा अबादिसंज्ञास्तेषां ग्रहणायेत्यर्थः । प्रत्याहाराणां संज्ञारूपत्वात्संज्ञासंग्रहान्तःस्ये परिगणनं नाकस्मिकम् । एतेषु सूत्रेष्विति बहुवचनं वक्ष्यमाणसूत्राभिप्रायेण जात्यभिप्रायेण जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति वा । अवयवावयविनोरभेदोपचारात्सूत्रावयववर्णाभिप्रायेण वा । वक्तुमिष्टो विवक्षितः न विवक्षितोऽविवक्षितः तस्य भावस्तत्त्वं तस्मात् । ततः किमत आह । विवक्षितस्त्विति । अत्र यद्यपि सन्धिर्विवक्षित एव भवति विवक्षितः सन्धिरेव भवतीत्युभयथापि नियमासम्भव एकपदादौ विवक्षाभावेऽपि सन्धेर्लोपावश्यकत्वात् इह ईदूदेदन्तानां द्विवचनान्तानामेकस्वराणां निपातानां च शतशो विवक्षायामपि सन्ध्यसम्भवाच्च, तथापि विशेषार्थात्तु शब्दाद्वाक्यविषयत्वं नियमस्यावगम्यते । विवक्षाभावे हेतुमाह । लौकिकेति लोके भवा लौकिका बालास्तेषां प्रयोगज्ञानाय । अथ वा लौकिकप्रयोगा ददृध्यानयेत्यादयोऽनादिवृद्धप्रयोगास्तत्सिद्धये । समयः सङ्केतस्तस्मात्त्वादुपदेशेऽजनुनासिक इत्यादौ कुत्वाभाव इवात्रापि सन्ध्यभाव इति भावः । द्विपदत्वपक्षे वायं हेतुः । चकारो निपातत्वादिह हेत्वन्तरसूचनार्थः ॥ १ ॥

---

क्रियाभिसम्बन्धादुभयप्रधानो वलवानिति निगमात् । अत्र वृद्धिसिद्धिशब्दौ मङ्गलवाचकौ । अत एवायं ग्रन्थः सिद्धिकरः । अत्र बाला अधिकारिणः । शब्दो विषयः । तस्य ज्ञानं प्रयोजनम् । सरस्वतीप्रणीतत्वात्स एव सम्बन्धः । अनेनाप्रमाणताशङ्का निरस्ता ॥ १ ॥

**ह्रस्वदीर्घप्लुतभेदाः सवर्णाः** ॥ एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं-सवर्णा भण्यन्ते।२। 'लोकाच्छेषस्य सिद्धि'रिति वक्ष्यति। ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्याः । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः व्यञ्जनं चार्धमात्रकम्(क) ।

"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम्॥
चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः ।
शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम्" ॥ १ ॥

( च० ) अथैतानेव भिन्नतया विवृण्वन्नाह—'ह्रस्वदीर्घ०' । ह्रसति हीयते दीर्घापेक्षया इति ह्रस्वः । दृणाति विदारयत्युच्चार्यमाणो मुखमिति दीर्घः । प्लवते लंघते ह्रस्वदीर्घाविति प्लुतः । ततो ह्रस्वाश्च दीर्घाश्च प्लुताश्च ह्रस्वदीर्घप्लुतास्ते च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः । प्रथमाबहुवचनान्तम् । सदृशा वर्णाः सवर्णाः । 'सवर्णे दीर्घः सह' 'सोर्विसर्गः' ॥ एतेषां समानानां ह्रस्वदीर्घप्लुतभेदाः परस्परमन्योन्यं स्वजातीयेन सवर्णा भण्यन्ते कथ्यन्ते । यथा अ, ह्रस्वः । आ, दीर्घः । आ ३, प्लुतः ॥ इ, ह्रस्वः । ई, दीर्घः ई ३, प्लुतः ॥ उ, ह्रस्वः । ऊ, दीर्घः, । ऊ ३, प्लुतः ॥ ऋ, ह्रस्वः । ॠ, दीर्घः । ॠ ३, प्लुतः ॥ ऌ, ह्रस्वः । ॡ, दीर्घः । ॡ ३, प्लुतः । एतेषां समानानामेव सवर्णत्वं न तु संध्यक्षराणाम् । तेन हरे अग्रे ए इत्यत्र 'सवर्णे दीर्घः सह' इति न भवति ॥ ननु सरस्वतीसूत्रेष्वनुक्तं ह्रस्वादीनां लक्षणं कुतो ज्ञायते इत्यत आह—लोकादित्यादि । शेषस्येह व्याकरणेऽनुक्तस्य सिद्धिर्निष्पत्तिर्लोकादन्यव्याकरणात् ज्ञेया । लोकात् गुरुपारम्पर्याद्वा अवगन्तव्येति शेषः । अस्य ग्रन्थस्यान्ते 'लोकात्' इति पदं वक्ष्यति कथयिष्यति । ततो लोकत इत्यादि ॥ ततस्तस्मात्कारणाल्लोकतोऽन्यव्याकरणादेव ह्रस्वादिसंज्ञा ज्ञातव्याः। तथा हि तदेव लोकोक्तमेव ह्रस्वादीनां लक्षणमाह—एक० । एका मात्रा उच्चारणकालो यस्य स एकमात्रो ह्रस्व उच्यते। मात्रा कालविशेषः स्यात्। अक्षिस्पन्दनप्रमाणः कालो मात्रा । द्विमात्रो० । द्वे मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घः । त्रिमात्रः०। तिस्रो मात्रा उच्चारणकालो यस्य स त्रिमात्रः प्लुतः । अर्धमात्रायां भवमार्धमात्रिकं व्यञ्जनमुच्यते ॥ केचित्तु व्यञ्जनं चार्धमात्रकमिति नोच्चरन्ति । व्यञ्जनस्यात्रानधिकारित्वात्। यतः 'चाषो वदत्येकमात्रां द्विमात्रं वायसो वदेत् । त्रिमात्रं च शिखी ब्रूयान्नकुलश्चार्धमात्र-

---

( क ) अथ ह्रस्वादीनां परस्परं मात्रादिभेदेन भिन्नत्वादकारादीनां विहितं कार्य्यमाकारादीनां न प्राप्नोतीति-सावर्ण्यमारभते—ह्रस्वेति । एतेषाम् अइउऋऌवर्णानां ये भेदा विशेषव्यक्तयः ह्रस्वदीर्घप्लुतरूपा ते मिथः सवर्णसंज्ञका आचार्य्येण कथ्यन्ते। अर्थादकारादीनामेव ते सवर्णसंज्ञा स्युरित्येकवाक्यता । अथवा ह्रस्वदीर्घप्लुतानां ये भेदा उदात्तानुदात्तस्वरितरूपास्ते सजातीयाः मिथः सवर्णसंज्ञाः स्युः । समानो वर्णो धर्मो येषां ते सवर्णा इत्यन्वर्थसंज्ञातः सजातीया इति लब्धम् । वृद्धकुमारीवरन्यायाद्ध्रस्वादिसंज्ञालाभः । संज्ञाफलं तु सवर्णे दीर्घं इत्यादौ । सजातीया इति किम्, अकारस्य विजातीयैरिकारादिभिः सावर्ण्यमाभूत् ।

कम्' इति ॥ १ ॥

( प्र० ) ननु परिगणितानां पञ्चानामेव समानत्वे गङ्गानामित्यादौ दीर्घवर्णादी समानकार्यं न स्यादित्यतः सूत्रान्तरमवतारयति । ह्रस्वेति । ह्रस्वश्च दीर्घश्च प्लुतश्च भेद्यन्ते । भेदाश्चोदात्तादयः । एतेषामित्यनन्तरोक्तसमानानामित्यर्थः । एवं च हरये इत्याद दीर्घत्वाप्रसङ्गः । समाना वर्णाः सवर्णा इत्यन्वर्थताविज्ञानात्समानस्थानप्रयत्नानामेव सावर्ण्यं परस्परमिति ह्रस्वस्य ह्रस्वदीर्घप्लुतैः दीर्घस्य दीर्घप्लुतह्रस्वैः प्लुतस्य प्लुतह्रस्व दीर्घैः सवर्णत्वं ततश्च वर्णग्रहणे सवर्णस्यापि ग्रहणमिति । ह्रस्वसवर्णानां दीर्घादीनाम समानत्वात्तत्कार्यं भवत्येवेति भावः । ऋऌवर्णयोः सावर्ण्यस्य च वक्ष्यमाणत्वात् । तयो स्तदंशभेदविबन्धनत्वात् । ननु ह्रस्वादिसंज्ञाविधानमन्तरेण तत्स्वरूपाप्रत्ययात्तत्सावर्ण्य सम्भव इत्यत आह । लोकादिति शेषस्यानुक्तस्य लोकतोऽनादिवृद्धव्यवहारप्रसिद्धः आदिनोदात्तादिसंज्ञामाह । मीयते इति मात्राऽतिसूक्ष्मसमयावस्था एका मात्रा च्चारणकालो यस्य स एकमात्रः । एवमपरत्रापि । तदुक्तम् । "एकमात्रो भवेद्ध्रस्वो द्वि मात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" इति ॥

**एषामन्येऽप्युदात्तादिभेदाः सन्ति । उच्चैरुपलभ्यमान उदात्तः । नीचै रनुदात्तः । समवृत्त्या स्वरितः । सानुनासिको निरनुनासिकश्च ॥ २ ॥**

( च० ) किमेतावन्त एव भेदा इत्याशङ्क्याह—एषामित्यादि । एषां समाना ह्रस्वादिभेदभिन्नानामप्यन्येऽपि लोकगम्या उदात्तादिभेदाः = उदात्तः१, अनुदात्तः२, स्वरितः ३, इति त्रयो भेदाः सन्ति ॥ उदात्तादीनां लक्षणमाह—उच्चैरित्यादि । वेदपाठ करणन्यासे उच्चैः स्थाने उपलभ्यमानः प्राप्यमाणः उच्चार्यमाणो वा उदात्तः प्रोच्यते । नीचैः स्थाने उच्चार्यमाणोऽनुदात्तः । नोच्चैर्न नीचैरिति समवृत्त्या स्वरेणोच्चार्यमाणो वर्णः स्वरितः । उदात्तादीनां तु प्रयोजनं वेदे एव ॥ अत्र तु प्रसङ्गवशादुक्तम् ॥ मुखनासिकाभ्यां कृत्वोच्चार्यमाणो वर्णः सानुनासिकः । तद्विपरीतो निरनुनासिकः । निर्गता नासिका उच्चार्यमाणकाले यस्मात्स निरनुनासिकः । किंतु केवलं मुखेनोच्चार्यमाणो वर्ण इत्यर्थः । सानुनासिकः निरनुनासिकश्चेति पदं क्वचिन्न दृश्यतेऽपि । अनयोरत्र लक्षणस्यानुक्तत्वात् । अथ समाहृत्याह—यथा पञ्च समानाः ह्रस्वदीर्घप्लुतभेदात्पञ्चदश । तेऽप्युदात्तानुदात्त स्वरितभेदात्पञ्चचत्वारिंशत् भवन्ति । ते च सानुनासिकनिरनुनासिकभेदान्नवतिभेदाः समानानाम् ॥ २ ॥

( प्र० ) उच्चैरिति । स्थानविशेषणं न वर्णानाम् । तथा च "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" ॥ स्थानानि तेषु चोच्चनीचसमभेदात् त्रयोंऽशास्तत्र नाभिदेशादूर्ध्वमाक्रामदुदानवाय्वभिघाताद्वर्णाभिव्यक्तिस्तत्रोच्चभागेऽभिव्यक्त उदात्तः । नीचभागे अनुदात्तः । समभागेस्वरित इत्यर्थः ।

**एऐओऔ सन्ध्यक्षराणि ॥ एषां ह्रस्वा न सन्ति(क) ॥ ३ ॥**

---

( क ) एऐ ओऔ सन्ध्यक्षराणीति । एकारादीनि सन्ध्यक्षरसंज्ञानि स्युरित्यर्थः । ननु सन्धेर्जाता

(च० ) सूत्रम्—ए ऐ ओ औ संध्यक्षराणि । द्विपदमिदं सूत्रम् । ए ऐ ओ औ प्रथमाबहुवचनान्तम् । सांकेतिकत्वाज्जस्लोपः ॥ यद्वा—ए, प्रथमैकवचनान्तम् । ऐ, प्रथमैकवचनान्तम् । ओ, प्रथमैकवचनान्तम् । औ प्रथमैकवचनान्तम् । सांकेतिकानि चत्वारि पदानि । एवं पञ्चपदम् ॥ सन्ध्यक्षराणि यथा समानानामेव संधिना कृत्वा एषां निष्पत्तिः । यथा—अकारइकारयोगे एकारः । अकारएकारयोगे ऐकारः । अकारउकारयोगे ओकारः । अकारओकारयोगे औकारः । यद्वा समानानां व्यञ्जनानां च संधौ मध्ये वर्तन्ते इति संध्यक्षराणि इति संध्यक्षरसिद्धिः । संध्यक्षरशब्दस्य प्रथमाबहुवचनान्तम् । जस्शसोः शि.' इ । 'नुमयमः' इकारात्पूर्वं नुमागमः । 'नोपधायाः' रस्थाने रा । 'ऋर्णोणो०' 'स्वरहोनं०' ॥ ए ऐ, ओ औ, एतानि चत्वार्यक्षराणि सन्ध्यक्षरसंज्ञकानि भवन्ति । ततश्चैषां संध्यक्षराणां ह्रस्वभेदा न भवन्ति । एकमात्रकालाभावात् दीर्घप्लुता भवन्ति । परं सवर्णत्वं न । एतेषां संध्यक्षराणामष्टचत्वारिंशद्भेदा भवन्ति । यथा चतुर्णां संध्यक्षराणां दीर्घप्लुतभेदादष्ट । तेषां चाष्टानां प्रत्येकमुदात्तानुदात्तस्वरितभेदाच्चतुर्विंशतिः । तेषां च सानुनासिकनिरनुनासिकभेदादष्टचत्वारिंशदिति ॥ ३ ॥

(प्र०) एऐ इति । पञ्चपदं द्विपदं वा पूर्ववत्सन्ध्यभावादि च । संधेर्जातानीवाक्षराणि संध्यक्षराणीति योगरूढया पङ्कजादिवदवयवव्युत्पत्तिसद्भावादन्वर्थता । अतो नाकारादिसङ्करः । द्विमात्रत्वेन ह्रस्वभेदाभावः । ह्रस्वा न सन्तीत्युक्त्या च दीर्घप्लुतोदात्तादयो भेदाः सन्तीत्युक्तं भवति । उभये वर्णाः स्वरसंज्ञका भवन्तीत्यर्थः । एवं च अइउऋवर्णानां ह्रस्वोदात्तसानुनासिकादिभेदैरष्टादशभेदभिन्नत्वम् । ऌवर्णस्य च दीर्घप्रयोगाभावात् । ऌवर्णसन्ध्यक्षराणां द्वादशद्वादशभेदवत्त्वम् । ते च स्वरप्रक्रियायामेवोपयुक्ता इति नात्रोक्ताः ।

**उभये स्वराः ॥ अकारादयः पञ्च, एकारादयश्चत्वारश्चोभये स्वरा उच्यन्ते । अइउऋऌएऐओऔ (क) ॥ ४ ॥**

(च०)अथ समानसंध्यक्षराणामिति मिलितानां संज्ञामाह—सूत्रम्—'उभयेस्वराः' द्विपदमिदं सूत्रम् । उभौ प्रकारावयवौ येषां ते उभये । उभयशब्दस्य प्रथमाबहुवचनान्तम् । 'जसी' 'अइ ए' ॥ स्वराः स्वयमनाश्रितत्वेन राजन्ते शोभन्ते इति स्वराः । प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्त्रोर्विसर्गः' ॥ अकारादयः पञ्च-अ इ उ ऋ ऌ । चत्वार एकारादयश्च--ए ऐ ओ औ । एते उभये मिलिताः नवसंख्याः स्वरा उच्यन्ते

---

क्षराणीत्यन्वर्थसंज्ञाबलादेव सन्ध्यक्षरसंज्ञासिद्धौ तत्संज्ञाविधायकं सूत्रं व्यर्थमिति चेन्न, यकारादीनामपि सन्निधिजत्वाविशेषेण सन्ध्यक्षरसञ्ज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । एषु च भागद्वयवत्त्वेऽपि नरसिंहवत् जात्यन्तराक्रान्तत्वेन न भागकार्यम् । तेन अग्ने इदं वायो उदकमित्यत्र सवर्णदीर्घत्वं न । अत्र वर्णपरिगणनसञ्ज्ञाविधानरूपकार्यद्वयस्य वृद्धकुमारीवरन्यायेन सिद्धेर्न वाक्यद्वयम् ।

(च ) उभये स्वरा इति । ननु ते स्वरा इत्येवं किमिति नोक्तम् । तच्छब्दस्य पूर्वपरामर्शित्वेनाकारादीनामेव लाभादिति चेन्न । अनन्तरोक्तसन्ध्यक्षराणामेव तच्छब्देन परामर्शः स्यादिति शङ्काया निवृत्तये उभयग्रहणस्यावश्यकत्वात् । ननु स्वरा इत्येवास्तु अकारादीनामनुवृत्त्यैव लाभादिति चेत् , न, उक्तयुक्तेः । अकारादय एकारादयश्च स्वरा उच्यन्त इत्यर्थः । यत्तु-अकारादयः पञ्च चत्वार एकारादय इति तन्न, अकारादिषु न्यूनाधिकसङ्ख्याया असम्भवेन तद्ग्रहणस्य अनावश्यकत्वात् ।

कथ्यन्ते । चकारात्समानानां ह्रस्वदीर्घभेदमेलनेन चतुर्दश स्वरा भवन्ति । यथा-- अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ ॥ केचित्तु अकारादयः पञ्च उभये उभयप्रकारा ह्रस्वदीर्घा इति, चत्वार एकारादयश्च स्वरा उच्यन्ते इति व्याकुर्वन्ति ॥ परं न तत्सूत्राऽनुसारि । यदा 'उभये' इत्यनेन अकारादय एव उभयप्रकारा गृह्यन्ते तदा चत्वार एकारादयः इति सूत्रे कुतःप्राप्यते ॥ ४ ॥

( प्र० ) उभये इति । समुदायद्वयपरामर्शकत्वादुभयशब्दप्रयुक्तिस्तस्य च द्विवचनान्तप्रयोगाभावाद्वर्णविवक्षया वा बहुवचनम् । समानसंज्ञकाः सन्ध्यक्षरसंज्ञकाश्चोभये वर्णाः स्वरसंज्ञका भवन्तीत्यर्थः । ४ ।

अवर्जा नामिनः ॥ अवर्णवर्जाः स्वरा नामिन उच्यन्ते(क) ॥५॥

( च० ) अथैतेष्वेव विशेषमाह--सूत्रम् । 'अवर्जा नामिनः' द्विपदं सूत्रम् । अम् अवर्णं वर्जयन्तीत्यवर्जाः प्रथमाबहुवचनान्तम् । 'सवर्णे०''स्रोर्विसर्गः ॥ नामिन्शब्दस्य प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' ॥ अवर्णवर्जा अकाराकाररहिताः स्वराः इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ एते नामिन उच्यन्ते । नमनं नामः सोऽस्त्येष्विति नामिनः । अवर्णो नामी नोच्यते । लिपिन्यासे तस्य सरलत्वात् ॥ ५ ॥

( प्र० ) अवर्जा इति । अं अवर्णं वर्जयन्ति त्यजन्तीत्यवर्जाः अवर्णभिन्ना अवर्णरहिता वेत्यर्थः । अत्र केचित्कालानुसारिणश्चतुर्दश स्वरा दश समाना द्वादश नामिन इत्याहुस्तदयुक्तम् । उभयशब्दस्य सर्वनामत्वात्तेषां च बुद्धिस्थप्रकारवाचित्वात् पूर्वोक्तसमानसंज्ञकपञ्चवर्णसन्ध्यक्षरसंज्ञकचतुर्वर्णपरामर्शकत्वेन वृत्तिकृद्व्याख्यानात्तद्भेदानामुपादानाच्चतुर्दशत्वे द्वादशत्वेऽपरभेदपरित्यागे मानाभावात् । तस्मात्पञ्च समाना नव स्वराः अष्टौ नामिनः तत्तद्भेदाश्च तत्तत्संज्ञकाः । ५ ।

अनुक्रान्तास्तावत्स्वराः (ख) ॥

( च० ) अथ स्वरोपसंहारमाह-अनुक्रान्ता इत्यादि । तावदादौ स्वरा अनुक्रान्ता अनुक्रमेण कथिताः ॥

---

( क ) अवर्जानामिन इति । अं वर्जयन्तीत्यवर्जाः । 'कःर्येऽण्' इत्यण् ।

ननु यो नामिन इत्येव किमिति नोच्यते, औनिपात इति वद् इकारमारभ्य आकारान्तस्य प्रत्याहारेण ग्रहणादवर्णवर्जानां लाभात् ।

नच इकारौकारयोः संज्ञाशङ्कानिरासाय तदिति चेन्न, पूर्वसूत्रोक्तस्वरानुवृत्त्या तन्निरासादिति चेत्, सत्यम्, नामिसञ्ज्ञायाः पूर्वं प्रत्याहारसञ्ज्ञाया अनुक्तत्वेन यावित्यनेनेकाराद्यौकारान्तस्वरबोधस्यानुदयात् । यदि तु व्याकरणस्यानादित्वमाश्रित्य प्रत्याहारादिसिद्धिस्तदैवमेव न्याय्यमित्यलं पल्लवितेन । ननु किमर्थमवर्जा इत्युच्यते । अवर्णस्य नामिसञ्ज्ञा माभूत् इति । यदि स्यात्, देव इह इति "नामिनो रः" इति रः स्यात् । अनवकाशेनादव इति लोपशास्त्रं बाधिष्यते इति चेत्, कुले इत्यत्र नामिनः स्वर इति नुम् प्रसङ्गादवर्जा इत्युक्तम् । स्वरा इति । उभये स्वरा इत्यतोऽनुवर्त्तमानाः स्वरसञ्ज्ञिन उभये इत्युभयग्रहणानुवृत्त्या व्याख्येयम् । अथवा सञ्ज्ञायाः सञ्ज्ञान्तरासम्भवात्पूर्वत्र सञ्ज्ञापरमपि स्वरग्रहणमेवेहानुवृत्तम्, अर्थात् सञ्ज्ञिपरं सम्पद्यते इति स्वरसञ्ज्ञिन इत्यर्थः । नामिप्रदेशा 'नामिनो रः' इत्येवमादयः ।

( ख ) अनुक्रान्ता इति । क्रमेणोक्ता इत्यर्थः । प्रत्याहारेति । अबादीनां शिष्यैर्ग्राहयितुमिच्छया इत्यर्थः । अनुक्रामतीति । क्रमेणाचष्टे इत्यर्थः ।

अथ प्रत्याहारजिग्राहयिषया व्यञ्जनान्यनुक्रमिति ॥

( च० ) अथ व्यञ्जनान्याह–व्यञ्ज्यन्ते प्रकटीक्रियन्तेऽर्थाः प्रत्याहारा वा एभिरिति व्यंजनानि ॥ कया ? ग्राहयितुमिच्छा जिग्राहयिषा प्रति कार्यं कार्यमाह्रियन्ते आनीयन्ते इति प्रत्याहारा अन्नादयस्तेषां प्रत्याहाराणां जिग्राहयिषा प्रत्याहारजिग्राहयिषा तया प्रत्याहारजिग्राहयिषया कृत्वा व्यंजनान्यनुक्रामति अनुक्रमेण कथयति ॥ ७ ॥

( प्र० ) उक्तानुवादपूर्वकमुत्तरग्रन्थं सम्बध्नाति । अनुक्रान्ता इत्यादि ग्राहयितुमिच्छा जिग्राहयिषा प्रत्याहाराणां जिग्राहयिषा तया ।

**हयवरल ॥ ञणनङम ॥ झढधघभ । जडदगब ॥**
**खफछठथ ॥ चटतकप ॥ शषस ॥ आद्यन्ताभ्याम् ॥**

प्रत्याहारं जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्त्येन गृह्यमाणस्तन्नामा प्रत्याहारः । तथाहि––अकारो बकारेण गृह्यमाणोऽबप्रत्याहारः (क) ॥ ६ ॥

( च० ) कानि तानि व्यञ्जनानि। सूत्रम् हश्च यश्च वश्च यावत्सश्च इति द्वन्द्वः, प्रथमाबहुवचनान्तम् । सांकेतिकम् । हय यावदाद्यन्ताभ्यां द्विपदम् । आदिश्च अन्तश्च आद्यन्तौ ताभ्याम् । तृतीयाद्विवचनान्तम् 'अश्वि' ॥ अथवा पञ्चमीद्विवचनान्तम् ॥ यद्वा हयवरलेति त्रयस्त्रिंशदपि प्रथमैकवचनान्तानि सांकेतिकानि पदानि । 'आद्यन्ताभ्यां' तृतीयाद्विवचनान्तम् । एवं चतुस्त्रिंशत्पदं सूत्रम् ॥ केचित्तु आद्यन्ताभ्यामित्येकपदं सूत्रं पृथक् मन्यन्ते ॥ क ख ग घ ङ इति क्रमं विहाय हयवरलेति क्रमः प्रत्याहारग्रहणार्थं कृतः । प्रतिकार्यमाह्रियते इति प्रत्याहारः तं प्रत्याहारं जिघृक्षता ग्रहीतुमिच्छता छात्रेण पुरुषेण वा आद्यन्ताभ्यां कृत्वा आद्यन्तवर्णाभ्यां सह एते हकारादयः सकारपर्यन्ता वर्णास्त्रय-

---

( क ) हयवरल इत्यादीनि । अयं व्यञ्जनानामनुक्रमः । एष्वकार उच्चारणार्थः । अनेन क्रमेण एते वर्णा ज्ञेयाः । इहापि पूर्ववद्विभक्त्यनुत्पत्तिः ।

माधवस्तु इहाप्यर्थस्याऽविवक्षितत्वाद्विभक्तेरनुत्पत्तिर्लुग्वा छान्दसः । एवं सर्वत्राप्यविभक्तिकनिर्देशो ज्ञेयः—इत्याह ॥ सञ्ज्ञासूत्राण्येतानि । आद्यन्ताभ्यामित्यनेनैकवाक्यत्वात् । हकारोपदेशस्य फलन्तु अवहवेलव्वादौ ग्रहणमिति बोध्यम् । ननु रेफस्य यपप्रत्याहारान्तर्भावात् कुण्डं रथेनेत्यादौ वापदान्तस्येति पक्षे रेफः स्यात् । भद्रह्रद इत्यत्र च रहाभ्यां द्विरिति द्वित्वम् । कथ्यते । भद्रह्रद इत्यत्र रहाभ्यो द्विरित्यनेन रस्य द्वित्वे कृते रिलोपो दीर्घश्चेति रलोपे च पूर्वहकारस्य स्वरत्वाभावान्न दीर्घ इति कुण्डं रथेनेत्यत्र चानुनासिकस्यानुस्वारस्य स्थानेऽनुनासिका एव यमा भवन्तीत्यर्थख्यापनाद्रेफस्याननुनासिकत्वादनुनासिकानुस्वारस्य रकारो न भवतीत्यर्थः ।

आद्यन्ताभ्याम् । सञ्ज्ञासूत्रमिदम् । आदिश्चान्तश्चाद्यन्तौ ताभ्यामाद्यन्ताभ्याम् । आद्यन्ताभ्यां कृत्वा मध्यस्था वर्णा ग्राह्याः । तथाचाद्यन्तौ मध्यस्थानां सञ्ज्ञेति फलितम् । ननु आद्यन्ताभ्यामवयवाभ्यामवयविनः समुदायस्याक्षेपस्तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यमेषु विश्राम्येव, नत्वाद्यन्तयोः, सञ्ज्ञास्वरूपान्तर्भावेन तयोः पारार्थ्यानिर्णयात् , ततश्चाचहसादिग्रहणे आद्यन्तयोर्ग्रहणं न स्यात्, इति चेन्न, तन्त्रावृत्त्योरन्यतरदवलम्ब्याद्यन्ताभ्यां कृत्वाऽद्यन्ताभ्यां सह मध्यस्था वर्णा ग्राह्या इति व्याख्येयत्वात् । तत्र मानं 'चपा अवे' 'ग्रादवे'इत्यादिनिर्देशाः । 'हसेऽहंस' इत्यत्र हकारपर्युदासश्च । नह्याद्यन्तयोरग्रहणे

र्थिशब्दसा ग्राह्याः । प्रत्याहारं व्यञ्जयन्नाह-आदिवर्णः आदौ वर्णः आदिवर्णः सोऽयमन्त्यस्थेन वर्णेन अक्षरेण सह गृह्यमाणः उच्चार्यमाणो वा अवप्रत्याहारादिस्तन्नामा प्रत्याहार उच्यते । तदेवाद्यन्तकं वर्णात्मकमेव नाम यस्य स तन्नामा ॥ अकार इत्यादि सुगमम् न वरम् ॥ ६ ॥

( प्र० ) आद्यन्ताभ्यामिति । प्रत्याहारा इति अधिकारसूत्रं पुर्वतोऽनुवर्तते । तत आद्यन्ताभ्यां वर्णाभ्यां गृह्यमाणाः प्रत्याहारसंज्ञका भवन्ति संज्ञाविधानसामर्थ्यात्ते मध्यगानामाद्यन्तवर्णानां च ग्राहका भवन्तीत्यर्थः । तावाद्यन्तभागौ तन्नामा । वस्तुतस्तु आद्यन्तेति साङ्केतिकं पृथक् । ततश्चाभ्यामाद्यन्तवर्णाभ्यां गृह्यमाणा आद्यन्तवर्णसंज्ञक इत्यर्थः । आद्यन्तवर्णौ नाम यस्य स तथा । ६ ।

स च अइउऋऌएऐओऔहयवरलञणनङमझढधघभजडदगब इति अबप्रत्याहारः । चटतकप इति चपप्रत्याहारः झढधघभ इति झभप्रत्याहारः ।

---

हकारस्य द्वित्वप्रसक्तिः । अथवा'आद्यन्त आभ्याम्' इति पदच्छेदः। आद्यन्त इति अविभक्तिकम्, आभ्यामिति सहार्थे तृतीया । इदं शब्दस्तु आद्यन्तवाचकः सान्निध्यात् । पूर्वपक्षरीत्या समुदायाक्षेपप्रकारस्तूक्तः। ततश्चाद्यन्तौ वर्णौ मध्यगानामाभ्यां सहितानां सञ्ज्ञाः स्युरिति यावत् । यद्वा 'आद्यन्तौ आभ्याम्' इति च्छेदः, आवादेशे लोपाशि च कृते छान्दसत्वात्सन्धिः। सञ्ज्ञा प्रदेशाः 'चप अबे जबाः'इत्यादयः। एतत्सूत्रेण कृता सञ्ज्ञा प्रत्याहारशब्देन व्यवह्रियन्ते, प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णा अत्रेति व्युत्पत्तेः । यदि सञ्ज्ञाप्रदेशेष्वेवाद्यन्ताभ्यामवयवाभ्यसदृशन्यायेन समुदायानुकरणमुच्यते तदा मास्त्विदं सूत्रमिति केचित् ।जिघृक्षतेति । ग्रहीतुमिच्छता शिष्येणेति शेषः । एते वर्णा इति ।अकारादारभ्य सकारान्ता इत्यर्थः । आदिवर्ण इति । अकारादिर्वकारादिसंयुज्यमानो यदुच्चारणः स्यात् तत्सञ्ज्ञ एवावादिः प्रत्याहारः स्यादित्यर्थः । तथाहि इति । निदर्शनार्थेऽव्ययमिदम् । अकार इति। आदिमं वकारमतिक्रम्य बकारेणेति प्रसिद्धपरिग्रहार्थमुक्तम् । स चेति । अबप्रत्याहार इत्यर्थः । इति शब्दः प्रत्याहारसमाप्तौ । उपसंहरति—एवं यत्र यत्रेति । एवमिति प्रकारेऽव्ययम् । अमुना प्रकारेण यस्मिन् यस्मिन् सूत्रे येन येन प्रत्याहारेण कार्यं स स प्रत्याहारस्तस्मिन् तस्मिन् सूत्रे ग्राह्य इत्यर्थः । सङ्ख्यानियमस्त्विति ।तुर्हेतौ यस्मादेतावन्त एव प्रत्यहारा इति सङ्ख्यानियमोऽनास्ति । तद्ग्राहकसूत्राणां वक्ष्माणत्वान्नियताद्यन्तादिवर्णज्ञानस्य तदायत्तत्वात्तन्निरूपणे च गौरवापातादिति भावः । सङ्ख्याया नियमो वा नास्ति, उभौ नञौ प्रकृतार्थमनुगमयत इति ग्राहकसूत्राणां नियतत्वात्प्रत्याहाराणामपि सङ्ख्यानियमोऽस्तीत्यर्थः । सचैवम् "एकादिवर्णाद्वलभाः सताः स्युर्द्वाभ्यां मकारोऽथ पबौ चतुर्भ्यः षड्भ्यः स आद्यक्षरनित्यतात्र सारस्वतीयोत्तरसूत्रतः स्यादि"ति । अस्यार्थः-वलभा वकारलकारभकाराः, सताः सतकाराः। एकस्मादादिवर्णात्स्युः-भवन्ति । अव इल झभ छत इति । तथा मकारो द्वाभ्यामादिवर्णाभ्यां स्यात् ञमयमेति । अथ पबौ पकारबकारौ चतुर्भ्यः स्तः । यप झन खप चप हव भव झब जब इति । तथा सकारः षड्भ्य आदिवर्णेभ्यः स्यात् । हस वस रस झस खस शस इति । अत्रैषु प्रत्याहारेषु आद्यक्षरनित्यता आदिवर्णनियमः सारस्वतीयोत्तरसूत्रतः सारस्वतसम्बन्धीनि यान्युत्तरसूत्राणि वक्ष्यमाणसूत्राणि तेभ्यः स्यादित्यर्थः ।तेषु हि ये उपात्ता आदिवर्णा ते एव तत्प्रत्याहारप्रयोजका नान्य इति भावः । तथा हे अ । अवकुर्वन्तरेऽपि । इल—किलात् षः सः कृतस्य । झभ-हो झभाः । छत-नः सक् छते । ञम-ञमे ञमां वा । यम-तुमयमः । यप-यमायपेऽस्य । झन चप-झनानां जवचपाः । खप-शसात् खपाः । भव—आदवे लोपश् । झब जब—झबे जबाः । हव—हवे । हस—हसेऽर्हसः । वस-रुदादेश्चतुर्णां हसादेः । रस-ऊरसे । झस खस—खसे चपा झसानाम् । शस—शसात्खपाः । इति । प्रत्याहारप्रपञ्चस्तु लाघवेन शास्त्रप्रवृत्त्यर्थः ।

जडदगब इति जबप्रत्याहारः ।। एवं यत्र यत्र येन येन प्रत्याहारणे कृत्यं भवति स स तत्र तत्र ग्राह्यः । प्रत्याहाराणां संख्याऽनियमस्तु नास्ति ॥

( च० ) स च अबप्रत्याहारः इत्येतावत्संख्याक इत्यमुना प्रकारेणैतावता एकोनत्रिंशद्वर्णप्रमाणा संख्या यावत्सम्पद्यते भवति। आकारादिसवर्णग्रहणात्तु चतुस्त्रिंशद्वर्णप्रमाणसंख्या यस्य सः । एवं चटतकप इति पञ्चभिरक्षरैः चपप्रत्याहारो भवति । आद्यन्तयोश्चकारपकारग्रहणेन चपः । एवं झढधघभ इत्याद्यन्तयोर्झकारभकारयोर्ग्रहणेन झभः । एवं जडदगब इत्यत्र जकारबकारयोर्ग्रहणेन जबः । एवममुना प्रकारेण यत्र यत्रोदाहरणे येन येन प्रत्याहारेण सह कृत्यं कार्यं भवति स स प्रत्याहारस्तत्र तत्रोदाहरणे ग्राह्यः ॥ प्रत्याहाराणां संख्यानियमस्तु नास्ति यत् इयन्त एव प्रत्याहाराः सन्तीति ॥ केऽप्याहुः अनियमं व्यावर्तयितुमाह--संख्येति । अयमर्थः न नियमः अनियमः संख्याया अनियमः संख्यानियमः । प्रत्याहाराणां संख्याया अनियमो नास्ति । किं तर्हि नियम एव ॥ कथमाह—यतः । 'हसो झबो जबश्चैव यपो अब इलश्चरः । अमो झभः खसः प्रोक्तो झसश्च छत ईरितः । यमो हवः खपश्चोक्तो डबश्च ढभ इष्यते । रसो वसः शसः ख्यातो झपो अव उदाहृतः ॥ ऊ उच्यते ततः प्राज्ञैः प्रत्याहारा उदाहृताः । सौत्रा एते स्फुटं ज्ञेयास्तथा चान्ये यथामति' ॥ यदि वा—'अवलत एकैकस्मात् द्वाभ्यां मः स्यात्पबौ चतुर्भ्यः स्वः । सःष ड्भ्यः स्यादित्थं प्रत्याहारास्तु विंशतिर्ज्ञेयाः' ॥ झभ, अव, झल, छत, यम, अम, यप, झप, खप, चप, अब, हब, जव, झव, हस, वस, रस, झस, खस, शस, एवमेते विंशतिः प्रत्याहाराः ॥

( प्र० ) सङ्ख्यानियमस्त्विति । एतावन्त एवेति सङ्ख्यायाः नियमः । प्रतिकार्यमाहरणात्कार्याणां चानन्तत्वान्नियमाभाव इत्यर्थः । केचित्तु यत्र यत्र येन येनेत्युक्त्याऽनियमप्रसङ्गमाहुः । सङ्ख्येति अनियमः आनन्त्यं नास्ति विंशतित्वेन नियमात् । तदुक्तम् । "अव तल एकैकस्माद्द्वाभ्यां मः स्यात्पबौ चतुर्भ्यस्तः ॥ सः षड्भ्यः स्यादित्थं प्रत्याहाराश्च विंशतिर्ज्ञेयाः" इति । तथा हि । झब्, अव्, छत, इल्, यम् , अम् , झप्, चप्, खप्, यप्, अब्, हब्, झब्, जव्, जस्, हस्, वस्, रस्, खस्, शस्, ननु भोस्प्रभृतिप्रत्याहाराणामनेकेषां कथयिष्यमाणत्वात्कथं विंशतित्वम् । न च वर्णसमाम्नायसूत्रस्थत्वेन विंशतित्वमिति वाच्यम् । औ निपात इत्यादावेकस्वरत्वप्राप्तये औ इत्यस्य वर्णसमाम्नायसूत्रस्थैरेव वर्णैः प्रत्याहारस्य ग्रहीष्यमाणत्वादिति चेत्सत्यम् । वर्णसमाम्नायसूत्रस्थहसैर्विंशतित्वनियमात् । अन्यथा रप्रत्याहाराधिक्ये एकचत्वारिंशन्नियमोऽपि न स्यात् ।

**हसा व्यञ्जनानि** ॥ हकारादयः सकारान्ता वर्णा हसा व्यञ्जनानि भवन्ति ।७। स्वरहीनं व्यञ्जनम् ॥ तेष्वकारः सुखोच्चारणार्थत्वादित्संज्ञकः(क)

---

( क ) हसा व्यञ्जनानि । एत एव । नान्येषां व्यञ्जनसञ्ज्ञा इत्यर्थः । हसा इति बहुवचनेन प्रत्याहारसञ्ज्ञा प्रत्येकं दर्शयति । स्वरहीनमिति । स्वरेति भावप्रधानो निर्देशः । तेन स्वरत्वहीनमित्यर्थः । अन्यथा स्वराणामपि स्वरहीनत्वात् व्यञ्जनसञ्ज्ञातिप्रसज्यते । तेष्विति । हकारादिषु इत्यर्थः । अर्थशब्दः प्रयोजनवाची । अकारेण सता व्यञ्जनसमुदायः सूच्चरो भवति । नत्वन्यथा ।

( च० ) अथ हसानां संज्ञामाह सूत्रम्-'हसा व्यञ्जनानि'। हसशब्दस्य प्रथमाबहुवचनान्तम् 'सवर्णे०' 'स्रोर्विसर्गः'॥ व्यज्यन्ते प्रकटीक्रियन्ते अर्था यैस्तानि व्यञ्जनानि अथवा, विगतमंजनं स्वरलक्षणं येभ्यस्तानि। प्रथमाबहुवचनान्तम्। जस्। 'जस्शसोशिः' 'नुमयमः' 'नोपधायाः' 'स्वरहीनं०' हकारमारभ्य सकारं यावत्त्रयस्त्रिंशदक्षराणि हसाः हसंज्ञानि प्रोच्यन्ते। द्वितीयनाम्नि व्यञ्जनानि प्रोच्यन्ते। व्यञ्जनलक्षणमाह-'स्वरहीनं व्यञ्जनम्' यत्स्वरहीनं तद्व्यञ्जनं यत्स्वरेभ्यो हीनं रहितम्। यद्वा स्वरेभ्यो हीनं व्यतिरिक्तम् अन्यत्। यद्वा स्वरत्वहीनमपरं यदक्षरं तद्व्यञ्जनसंज्ञं कथ्यते॥ ननु हकारादयः सस्वरा वर्णाः कथं व्यञ्जनसंज्ञाः ? इत्याह—तेषु व्यञ्जनेषु अकारः सुखोच्चारणार्थत्वात्। सुखेनोच्चारणमेव अर्थः प्रयोजनं यस्य स सुखोच्चारणार्थस्तस्य भावः सुखोच्चारणार्थत्वं तस्मात्। इत्संज्ञकः॥ ७॥

( प्र० ) हसा इति। हसप्रत्याहारसंज्ञान्वर्णानन्द्यव्यंजनसंज्ञाविधीयते तदेव विवृणोति। हकारादय इति। हसप्रत्याहारद्वारेणैव व्यञ्जनव्यवहारे सिद्धे व्यञ्जनसंज्ञाभिधानं पूर्वप्रसिद्धसंज्ञासंग्रहार्थं विगतं व्यञ्जनं स्वररूपं यस्मात्तत् व्यञ्जनम्। तदेवाह। स्वरहीनमिति। स्वरेभ्यो हीनमन्यत् रहितमिति व्याख्याने तु आत्माश्रयापत्त्या स्वरेषु स्वराभावात्तेषामपि व्यञ्जनत्वमापद्येत। भावप्रधाननिर्देशात्स्वरत्वहीनमिति वार्थः। ननु हसा व्यञ्जनानीत्युक्तत्वाद्धसान्तर्वर्तिनोऽप्यकारस्य व्यंजनत्वं स्यादत आह। तेष्विति। अश्लिष्टोच्चारणस्य कर्तुमशक्यत्वात्सरित्तरणार्थोपात्ततरेरिव तन्निवृत्तौ पुनः स नोपादेय इत्यर्थः। एति गच्छतीति इत् गत्वर इत्यर्थः। ७।

**कार्यायेत्**॥ प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञो भवति॥ **यस्येत्संज्ञा तस्य लोपः**॥ **वर्णादर्शनं लोपः**॥ **वर्णविरोधो लोपश्**॥ **मित्रवदागमः**॥ **शत्रुवदादेशः**॥ **स्वरानन्तरिता हसाः संयोगः**॥ **कुचुटुतुपु वर्गाः**॥ उकारः पञ्चवर्णपरिग्रहणार्थः (क)॥ १९॥

---

( क ) कार्यायेद् इति। कर्मणि चतुर्थी। तुमोऽप्रयुक्तस्य कर्मणीति वचनात्। वर्णानामायोच्चारणं द्विधा; कार्य्यार्थं श्रवणार्थञ्चेति, कार्य्यार्थो यथा-डेङसिङसूङीनां ङकारो ङितीति ङिता यङिति कार्य्यार्थः। श्रवणार्थो यथा-हकारादिषु अकार इति। एति गच्छतीति इत्। इणूगतावस्मात्क्विप्। ह्रस्वस्य पिति कृति तुगिति तुक्। आशुविनाशीत्यर्थः। अत्राहुर्लोकेशकराः—यत्तु-प्रत्ययाद्यतिरिक्त इति प्रत्ययादयः प्रत्यागमादेशास्तदतिरिक्त इति तद्विवरणं च तत्सर्वमापाततः। यत्तु—प्रत्ययः परस्य बोधस्तदादिकारणमुत्तमवृद्धवाक्यप्रयोगस्तदतिरिक्त इति तदपि प्रकृतानुपयुक्तत्वादुपेक्षितम्। यथाग्रहस्तदेत्थं योज्यः। प्रत्ययादिषु अतिरिक्तः लौकिकः सिद्धप्रयोगोच्चारणादधिक इति कथञ्चित्प्राचो ग्रन्थ इति। लोपस्वरूपमाह—वर्णादर्शनं लोप इति। वर्णानां श्रवणत्वेन स्वत एवादर्शनान्तविधेर्दोषः श्रवणार्थः। वर्णाश्रवणमित्यर्थः। स्वानुच्चारणप्रवृत्त्यनन्तरं कार्य्यान्तरप्रवृत्तिप्रतिबन्धको वर्णविरोधः। स लोपसंज्ञो भवति। वर्णं विरुणद्धीति वर्णविरोधः। लोपशसञ्ज्ञाप्रदेशाः "व्योर्लोपश् वापदान्त" इत्यादयः। तत्फलं तु लोपशि पुनर्नसन्धिरिति। तस्य लोपशि न विभक्तिकार्य्यं च। यथा ते आगताः, राजभ्यामित्यादि।

इतो लक्षणमाह—'कार्यायेत्' । द्विपदं सूत्रम् । कार्यशब्दस्य चतुर्थ्येकवचनान्तम् । 'हेरक्' 'एअय्' 'सवर्णे०' 'स्वरहीनं०'॥ इत् एति गच्छति इत्। प्रथमैकवचनान्तम् । 'हसेपः सेः' पदद्वये न संधिः 'अइ ए'॥ प्रत्ययादीति। आदिशब्दात् प्रत्ययागमादेशोपदेशेभ्यो-ऽतिरिक्तोऽधिकः प्रत्ययादतिरिक्तः। अप्रत्ययादिः आगमातिरिक्तः । नुडागमादिः उपदेशः शिष्याख्यारूपः हयवरलेत्यादिः आदेशः 'पुलोऽड्डू'इत्यादिरूपः एषु कस्मैचित्कार्यायो-च्चार्यमाणो वर्ण इत्संज्ञकोऽनुबन्ध संज्ञको भवतीति॥ कृत्यमाह—यस्येत्संज्ञा तस्य लोपः क्रियते। उच्चरितप्रध्वंसिनो ह्यनुबन्धा इति॥ लोपलक्षणमाह—वर्णाद०॥ वर्णानामक्षराणा-मदर्शनमविलोकनं प्रध्वंसाभावो लोप उच्यते॥ वर्णानां विरोधः संधिकार्यवर्जनं यस्मिन् स लोप एव लोपश् कथ्यते । एवं वर्णं विनाशयत्यन्यस्योत्पत्तिं प्रतिबध्नातीति लोपश् । त-त्कार्यं—'लोपश्चि पुनर्न संधिः' । यथा—त आगता इत्यादि ॥ आगच्छतीत्यागमः॥ आगमो मित्रवत् । यथा मित्रं मित्रस्य समीपे आगत्योपविशति तथागमोऽप्यायाति । यथा 'नः सक् छते' इति सगादिः ॥ आदेशः शत्रुवत् । यथा शत्रुः शत्रुं विनाश्य तत्स्थाने तिष्ठति तथा आदेशोऽप्यादेशिनं विनाश्य तस्य स्थाने भवति । शसः सकारस्य नकारा-देशवत् ॥ अथ संयोगसंज्ञामाह—स्वरानन्तरितो०' इति । अन्तरं जातं येषां तेऽन्त-रिताः न अन्तरिताः अनन्तरिताः स्वरैरनन्तरिताः स्वरानन्तरिताः स्वरान्तर-रहिता ईदृशा हसा व्यञ्जनवर्णाः संयोगसंज्ञा उच्यन्ते । अत्र बहुवचनं जात्यभिप्रायेण । तेन द्वयोरपि हसयोः संयोगसंज्ञा स्यात् । यद्वा हसौ च हसाश्च हसाः एकशेषः समासः । संयोगकार्यं तु 'संयोगान्तस्य लोपः' इत्यादि ॥ वर्गसंज्ञामाह—कुचुटुतुपु इति । कुश्च चुश्च टुश्च तुश्च पुश्च कुचुटुतुपु प्रथमाबहुवचनान्तम् । सांकेतिकम् । वर्गाः प्रथमाबहुवचना-न्तम् । 'सवर्णे दीर्घः०' 'स्रोर्विसर्गः' ॥ एते पञ्च वर्गसंज्ञका भवन्ति । तत्कार्यं 'स्तोः श्चुभिः श्चुः' ष्टुभिः ष्टुः' 'कुप्वोः ≍क≍पौ वा' इत्यादि । उकारे हेतुमाह—उकारः स्वरेषु पञ्चमी मात्रा उकारस्तेन कु इत्युक्ते कखगघङ । चु इत्युक्ते चछजझञ । टु इत्युक्ते टठड-ढण । तु इत्युक्ते तथदधन, पु इत्युक्ते पफबभम इत्येतानि [ लौकिकपाठे ] पञ्च पञ्चाक्ष-राणि गृह्यन्ते ॥ १९ ॥

( प्र० ) इत्संज्ञासूत्रमाह । कार्यायेति । तादर्थ्ये चतुर्थी । कार्यार्थं च प्रत्यया-दिष्वेवेति प्रत्ययाद्यतिरिक्त इत्युक्तम्। प्रत्ययादय इति तद्गुणसंविज्ञानात् बहुव्रीहिः प्रत्यया-

---

स्वरानन्तरिता हसाः संयोगः। अन्तर्मध्यमगादित्यन्तरितस्तदन्योऽनन्तरितः ।

स्वरोऽनन्तरितो येषां ते तथा। स्वररहिताः हसाः संयोगसञ्ज्ञाः स्युः। यद्यपि अनन्तरा हसाः संयोग इत्येतावतैवेष्टसिद्धिस्तथापि स्वरशब्द इतशब्दश्च स्पष्टार्थौ। स्वरानन्तरिता इति किम्। पनसम्। हसा इति किम्। तितउभ्यः म् । महासञ्ज्ञा चेयं संयुज्यतेऽस्मिन् समुदाये वर्णा इत्यन्वर्थसञ्ज्ञा विज्ञानार्थाः। तेन समुदाये वाक्यपरिसमाप्तिर्न प्रत्येकम् तथा च दृषत्करोतीत्यादौ न लोपः ककारादेः। हसा इत्यविव क्षितं जातौ वा। तेन द्वयोरपि संयोगसञ्ज्ञा। तत्प्रदेशाः 'संयोगान्तस्य लोपः' इत्यादयः।

कु चु टु तु पु वर्गाः। एते वर्गसञ्ज्ञाः स्युः। फलम्। वर्गो वर्ग्येण सवर्ण इत्यादि उदित्सवर्णं गृह्णा-ति न वर्णमात्रमिति परिभाषाज्ञापनार्थं उकारः। अस्मादेवोदित्करणात्कादीनां पञ्चानां सवर्णसञ्ज्ञापि ः 'अ-कारात्पञ्चमो वर्णस्तमाहुः पञ्चकप्रदे। उकारस्तत्र विख्यातो नान्यो भवितुमर्हति' इत्याहुः।

गमादेशधातुसूत्रगणाणादिवार्तिकलिङ्गानुशासनादीनि गृह्यन्ते । एभ्योऽतिरिक्तो भिन्नस्तत्र वर्तमानोऽप्यतत्कार्यकारी कार्यायेतरव्यावृत्तिस्थानानियमनुमागमाद्यर्थादिरूपायेत्यर्थः । अथवा । प्रत्ययः प्रतीतिः प्रयोज्यवृद्धबोधस्तस्यादिः प्रयोजकवृद्धप्रयोगस्तद्रहितः व्यवहारावस्थायामवर्तमान इत्यर्थः। इत्संज्ञकस्य लोप इत्येव वक्तव्ये यस्य तस्येति ग्रहणं सर्वस्येत्संज्ञकस्य लोपार्थम् , अन्यथा ञिटुडुप्रभृतीनामित्संज्ञकानां लोपलक्षण आदेशे क्रियमाणे षष्ठीनिर्दिष्टस्येत्यन्त्यस्यैव स्यात् । यस्यतस्येत्युक्तौ च शब्दाधिक्यादर्थाधिक्यमिति न्यायात्सर्वादेशसिद्धिः । नानर्थकेऽऽलोन्त्यविधिरित्यस्याः परिभाषायाः प्रयोजनाभावाद् भाष्येऽनुक्तत्वादनाश्रयणात् ॥

लोपस्वरूपमाह—वर्णेति । वर्णानां श्रवणत्वेन स्वत एवादशनान्तविधेर्दर्शिः श्रवणार्थः । एकं वर्णं विनाश्यापरोत्पत्तिप्रतिबन्धाद्वर्णाभ्यां विरुध्यते वर्णो विरुणद्धि इति वा वर्णविरोधः ॥

स्वरानन्तरिता इति । स्वरैरकारादिभिरनन्तरिता अव्यवहिताः हलौ च हलाश्च हला इत्येकशेषाद्द्वयोरपि स्वराव्यवहितयोः संज्ञा । संयोग इत्येकवचनेन वृक्षा वनमितिवत्समुदायसंज्ञा । कुचुटुतुपु इति । वर्ज्यन्ते छखग्रहणार्थं विजातीया एषु प्रसारवर्जनाद्वा वर्गाः सजातीयवर्णसमूहास्तद्ग्राहका इत्यर्थः। संज्ञान्वर्थक्यादुकारानुबन्धित्वाच्च पञ्चवर्णग्राहित्वम् । तथोक्तम्—"अकारात्पञ्चमो वर्णस्तमाहुः पञ्चकग्रहे ॥ उकारस्तत्र विख्यातो नान्यो भवितुमर्हति" ॥ इति । १६ ।

**अरेदोन्नामिनो गुणः ॥** नामिस्थानिकाः अर् ए ओ एते गुणसंज्ञका भवन्ति (क) ॥ **आरैऔ वृद्धिः ॥** आ आर् ऐ औ एते वृद्धिसंज्ञा भवन्ति (ख) ॥ १७ ॥

---

( क ) अरेदो नामिनो गुणः । अर् च एच्च ओश्चैषां समाहार अरेदो । समाहारस्यैकत्वादेकत्वे द्विगुद्वन्द्वाविति नपुंसकत्वेऽपि ह्रस्वो न भवत्यत्र 'सञ्ज्ञापूर्वकविधेरनित्यत्वात्। 'सञ्ज्ञापूर्वको विधिरनित्यः' इत्युक्तत्वाच्च । तपरत्वं त्रिमात्रानिवृत्तये । तेन चेता स्तोतेत्यादौ द्विमात्र एव । स्पष्टार्थं वा । 'गुण' इत्यस्य स्थाने 'अरेदो नामिन' इति वक्तव्ये यत्सञ्ज्ञाप्रणयनं तद्गुणविधेरनित्यत्वज्ञापनार्थम् । तेन 'क्षिणोति' इत्यादौ पदे गुणाभावः सिद्ध्यति । यद्वानेकप्रयोजनमुद्दिश्य सञ्ज्ञाविधानमुचितम् । तेन 'मिदेर्गुणः' 'ऊर्ध्वेर्गुणः' इत्यादीनि प्रयोजनान्तराण्यनुमीयन्ते ।

नामिन इति । षष्ठ्यन्तमस्ति । नामिनः स्थाने गुणो भवतीत्यर्थः । ननु—गायति ग्लायतीत्यादौ सन्ध्यक्षराणां गुणः स्यात्। उच्यते । ऐकारोपदेशसामर्थ्यान्न भवति । नोचेत् एकारमेवोपादिशेत् । एकारस्यैकारस्य च सत्यसति वा गुणे विशेषता नास्ति । औकारान्तस्तु धातुर्नास्ति । अस्तु वा धातुरौकारान्तः । औकारान्तोपदेशसामर्थ्यान्न भविष्यतीति । न च तर्हि आयादेशोऽपि न स्यादिति वाच्यम् । 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' इति न्यायात् । गुणं प्रति हि ऐकारोपदेशोऽनर्थकः, 'ग्ले' इत्यस्यापि सुवचत्वात् । आयादेशस्य तु निमित्तमेवास्ति । अतः परिशेषाद्वर्णोवर्णेवर्णानां स्थाने अर् ए ओ यथाक्रमं गुणसञ्ज्ञका भवन्तीति फलितम्। गुणप्रदेशाः 'गुण' इत्यादयः ।

( ख ) आ रै औ वृद्धिः । पदद्वयमिदम् । आश्च आर् च ऐश्च औश्चैषां समाहारः, आरैऔ । नपुंसकत्वेऽपि संज्ञापूर्वकत्वान्न ह्रस्वः । एते वर्णा वृद्धिसञ्ज्ञकाः स्युः । आकारप्रश्लेषे च 'निपातः' 'भार्गेति' लिङ्गे । अविभक्तिको वा निर्देशः । 'आदिस्वरस्य ञ्णित्यारै औ' इति वक्तव्ये यत् सञ्ज्ञाविधानं तद्

(च०) अथ गुणसंज्ञामाह—'अरेदो'० । अर् च एत् च ओत् च अरेदोत् प्रथमाबहुवचनान्तम् सांकेतिकम् । अत्र तपरकरणमसंदेहार्थम् । नामिनः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' स्रोर्विसर्गः' ॥ गुणः प्रथमैकवचनम् । 'स्रोर्विसर्गः' ॥ मध्ये—'हृदे' 'उमो' ॥ यद्वा अर् प्रथमैकवचनान्तम् । गुणः प्रथमैकवचनान्तम् । इति पञ्चपदं वा सूत्रम् । नामिस्थानिका नामिनां स्थाने जाता ऋकारस्य ॠकारस्य च अर्, इकारस्य ईकारस्य च ए, उकारस्य ऊकारस्य च ओ, एते च त्रयो गुणसंज्ञका भवन्ति । ऌकारस्तु सावर्ण्यात् ग्राह्यः। तेन ऌकारस्य अल् गुणः । तत्कार्याणि 'गुणः' 'उपधाया लघोः' इत्यादीनि ॥ अथ वृद्धिसंज्ञामाह—'आरैऔ०' इति । आ च आर् च ऐ च औ च आरैऔ प्रथमाबहुवचनान्तम् । सांकेतिकत्वाद्विभक्तिलोपः । 'वृद्धिः' प्रथमैकवचनान्तम् । अथवा आ प्रथमैकवचनान्तम् । आर् प्रथमैकवचनान्तम् । ऐ प्रथमैकवचनम् । औ प्रथमैकवचनम् । वृद्धिः प्रथमैकवचनान्तम् । एवं पञ्चपदं सूत्रम्। अकारस्य आ वृद्धिः। ऋकारस्य आर् वृद्धिः । इवर्णस्य एकारस्य ऐ वृद्धिः । उवर्णस्य ओकारस्य च औ वृद्धिः । एते चत्वारो वृद्धिसंज्ञका उच्यन्ते। ऋकारऌकारयोः सावर्ण्यादेव ऌकारस्याल् वृद्धिः। तत्कार्याणि आदिस्वरस्य ञ्णिति वृद्धिः 'धातोर्नामिनः' 'अत उपधायाः' इत्यादीनि ।। १७ ॥

( प्र० ) अरेदो नामिन इति स्थानषष्ठी ॥ अनियतसम्बन्धायास्तस्यास्तत्त्वात् । एते चानिर्दिष्टस्थाना गुणत्वेन विधीयमाना नामिन एव स्थाने भवन्तीत्यर्थः । विपरीतनिर्देशो नामिग्वकारावध्यर्थः । तेन अर् अ ऋस्थाने एनेत्यादित्रयं एव नामिनः । ऌकारस्य त्वल् सावर्ण्यात् । ततश्च याति गोयतीत्यादौ गुणाप्रसङ्गः । विवर्तमनयोर्मध्यपाठान्नामिनो नानुवृत्तिः ॥

आरै औ इति । आ इति द्विमात्रग्रहणसामर्थ्यान्न ह्रस्वस्य वृद्धिसंज्ञा आकारस्य आकारो वृद्धिः शेषं पूर्ववत् ॥ १७ ॥

## अन्त्यस्वरादिष्टिः ॥ अन्त्यो यः स्वरस्तदादिवर्णष्टिसंज्ञो भवति ॥ १८ ॥

( च० ) अथ टिसंज्ञामाह—अन्त्यस्वरादिः प्रथमैकवचनान्तम् । टिः प्रथमैकवचनान्तम् । द्विपदम् । अन्ते भवोऽन्त्यः अन्त्यो योऽसौ स्वरः स आदौ यस्य सोऽन्त्यस्वरादिः प्रथमैकचनान्तम् । 'स्रोर्विसर्गः' । टिः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' मध्ये 'विसर्जनीयस्य सः'। 'ष्टुभिः ष्टुः' 'स्वरहीनं०'॥ अन्त्यो यः स्वरस्तदादिवर्णः सोऽन्त्यस्वर एवादौ यस्य सोऽन्त्यस्वरादिस्तेन सहैव अन्त्यस्वरादारभ्य वर्णष्टिसंज्ञो भवति । अथवा अन्त्यः स्वरस्तदादिवर्णश्च सोऽन्त्यस्वर एवादौ यस्य सोऽपि वर्णष्टिसंज्ञको भवति । स्वरान्तशब्दस्यान्तिमः स्वर एव टिसंज्ञः । हसान्तशब्दस्यान्त्यो हसस्तत्पाश्चात्यः स्वरश्च

---

सञ्ज्ञापूर्वको विधिरनित्यो यथा स्यादिति' ज्ञापनार्थम् । तत्फलं कविरिवाचारीदकवयीदित्यादौ पाक्षिको वृद्ध्यभावः । अथवा 'मृजेर्वृद्धिः' ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु' ऊर्णोतेर्वृद्धिः 'पेसौ' 'अतो हसादेर्लघोर्वा वृद्धिः सेटि सौ' इत्यादीनि प्रयोजनान्तराण्यनुमीयन्ते । सञ्ज्ञाविधानबलादिति । वृद्धिसञ्ज्ञाप्रदेशा 'धातोर्नामिन' इत्यादयः ।

द्वावपि टिसंज्ञकावित्यर्थः। तत्कार्यं तु 'डिति टेः' इत्यादि। यथा अचिन्त्यमहिमा। हरौ सखा ॥१८॥

( प्र० ) अन्त्यस्वरादिष्टिः। अन्त्यस्वर आदिः आदिभूतोऽवयवो यस्य स इति तद्गुणसंविज्ञानेन तत्सहितो वर्णष्टिसंज्ञः। अन्त्यस्वरमात्र एव आद्यन्तवदेकस्मिन्निति स एवादिरन्तश्च अन्त्यादिरिति। "सामीप्ये च व्यवस्थायां प्रकारेऽवयवेऽपि च ॥ आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु लक्षयेत्" ॥ १८ ॥

**अन्त्यात्पूर्व उपधा ॥** अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञो भवति(क) ॥ १९ ॥

( च० ) अथोपधासंज्ञामाह—सूत्रम्। अन्त्यादिति पञ्चम्येकवचनान्तम्। 'ङसिरत्' 'सवर्णे०'। पूर्वः प्रथमैकवचनान्तम्। 'सोर्विसर्गः' ॥ उपधा प्रथमैकवचनान्तम्। 'आप' त्रिपदम्। अन्त्याद्वर्णमात्रात्केवलादक्षरात्पूर्वो वर्णः स उपधासंज्ञको भवति। तत्कार्याणि 'नोपधायाः' 'अत उपधायाः इत्यादीनि राजन्शब्दवत्। १९ ॥

( प्र० ) अन्त्यादिति सामान्यनिर्देशाद्वर्णमात्रादित्युक्तम् ॥ १९ ॥

**असंयोगादिपरो ह्रस्वो लघुः ॥ विसर्गानुस्वारसंयोगपरो दीर्घश्च गुरुः ॥ मुखनासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः ॥ मुखेनोच्चार्यमाणोऽननुनासिकः ॥ अः इति विसर्जनीयः ॥ वर्णशिरोबिन्दुरनुस्वारः ॥** कस्य पुनः किं स्थानमित्यपेक्षायां अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य। ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः। ≍प≍फ इति पफाभ्यां प्रागर्धविसर्ग

---

( क ) अन्त्यस्वरादिष्टिः। अन्ते जातोऽन्त्यः। यः। अन्त्यश्चासौ स्वरश्चेति स आदिर्यस्य स अन्त्यस्वरादिः। स्वराणां मध्येऽन्त्यस्वर आदिर्यस्य समुदायस्य स टिसञ्ज्ञो भवति। यत्र तु तदादिरन्यो वर्णो नास्ति तत्र स्वरस्यैवान्त्यादित्वं व्यपदेशिवद्भावेन भवति। यत्र चैक एव स्वरस्तत्रापि व्यपदेशिवद्भावादन्त्यत्वमस्ति। यथा त्यादिषु। व्यपदेशिवद्भावो न्यायो लौकिकः। यथा यस्य बहवः पुत्रास्तस्य तस्मिन् तस्मिन् ज्येष्ठमध्यमकनिष्ठव्यपदेशोऽस्ति। यस्य त्वेकः पुत्रस्तस्य ज्येष्ठादिव्यपदेशस्तस्मिन्नेवेति। सञ्ज्ञाप्रदेशास्तु 'पथो टेः' इत्यादयः।

अन्त्यात्पूर्वउपधा। अन्ते भवोऽन्त्यस्तस्मात्। अन्त्याद्वर्णात्पूर्वोवर्ण उपधासञ्ज्ञो भवति। ननु वर्णादिति सूत्रेऽनुक्तम्। तत्कस्माल्लब्धमिति चेन्न। पराण्यादिति ज्ञापकाद्गृहाण। अन्त्यादुपधेत्युक्तेऽपि पूर्वशब्दस्याक्षेपः सम्भवतीति वाच्यमन्त्यत्वभङ्गप्रसङ्गात्। न हि परस्मिन् वर्णे सति पूर्वस्यान्त्यत्वं सम्भवति एवं सिद्धे यत्पूर्वग्रहणं तदव्यवहितपूर्वस्यैव ग्रहणार्थम्।

सदृश उपध्मानीयः। शषसहा ऊष्माणः। कादयो मावसानाः स्पर्शाः। यरलवाः अन्तस्थाः (क) ॥ २५ ॥

( च० ) अथ लघुसंज्ञामाह—असंयोगादीति। असंयोगादयः संयोगविसर्गानुस्वाराः परे अग्रस्था यस्मात्स संयोगादिपरः न संयोगादिपरः असंयोगादिपरः एवम्भूतो ह्रस्वो वर्णो लघुरुच्यते। तथा चोक्तं प्राकृतच्छन्दोग्रन्थे—'पिछुडी लघुअ कुंडउ केवल वन्नउ जोय। ए तीनउ लघु जाणिये अवर सवे गुरु होय'। यथा। ककिकुकृतथा अइउऋऌ एतेषामग्रे विसर्गानुस्वार संयोगा न भवन्ति तदैतेषां लघुसंज्ञा। अथ गुरुसंज्ञामाह—विसर्गानुस्वार इति। विसर्गानुस्वारसंयोगाः परे अग्रे वर्तमाना यस्मात्स विसर्गानुस्वारसंयोगपरः। विसर्गपरो यथा अः। अनुस्वारपरो यथा अं। संयोगपरो यथा अल्प। एवम्भूतो ह्रस्वोऽपि गुरुः। पुनर्दीर्घश्च। आ ई ऊ का की कू रूपः स्वभावादेव गुरुरुच्यते ॥ मुखनासिकाभ्यामिति रूढिपदम्। अन्यथा द्विवचनं न सम्भवति। यथोक्तं प्रक्रियाकौमुद्याम्—'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्'। एषां द्वन्द्व एकवत्स्यात्। एकवचनान्तो भवतीत्यर्थः। प्राण्यङ्गे दन्तौष्ठं मुखनासिकम्, तूर्याङ्गे मार्दङ्गिकपाणविकम्। सेनाङ्गे रथिकाश्वारोहमिति वचनात् ॥ मुखनासिकाभ्यां द्वाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकसंज्ञ उच्यते। 'ञमङणनम अनुनासिका' इति। मुखादनुपश्चान्नासिकां स्पृशन्तीत्यनुनासिकाः ॥ चतुर्दश स्वराः, त्रयस्त्रिंशद्व्यञ्जनानि, अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः, प्लुतश्च एवं द्विपञ्चाशदक्षराणि। एतेषामष्टौ स्थानानि सन्ति। तान्याह—अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। जिह्वा-

---

( क ) मुखनासिकावचनोऽनुनासिकः। मुखसहिता नासिका मुखनासिका शाकपार्थिवादित्वान्मध्यमपदलोपः। अन्यथा मुखश्च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यात्। वस्तुतस्तु एकवद्भावेऽपि न क्षतिः। आङः प्रश्लेषेण तथा सिद्धेः। मुखनासिकावचनमस्यास्ति इति सः तथा। 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः।

अथ प्रक्षिप्तानि संगृह्यन्ते—कादयो मावसानाः स्पर्शाः। कादयः पञ्चविंशतिवर्णाः स्पर्शसञ्ज्ञकाः सन्ति ॥ ञमङणना अनुनासिकाः। एते पञ्च वर्णा अनुनासिकसञ्ज्ञकाः सन्ति। यरलवा अन्तस्थाः। एते चत्वारो वर्णाः अन्तस्थसञ्ज्ञकाः सन्ति ॥ शषसहा ऊष्माणः। एते चत्वारो वर्णाः ऊष्मसञ्ज्ञकाः सन्ति ॥ ≍क≍ख इति कखाभ्यां प्रागर्द्धविसर्गसदृशो जिह्वामूलीयः ॥ ≍प≍फ इति पफाभ्यां प्रागर्द्धविसर्गसदृश उपध्मानीयः।

अं इति अः इति। स्वरात्परावनुस्वारविसर्गौ। अकुहविसर्जनीयानां कण्ठः। एषामष्टानामुत्पत्तेः स्थानं कण्ठोऽस्ति ॥ इचुयशानां तालु। एषामष्टानामुत्पत्तेः स्थानं तालु भवति। उपूपध्मानीयानामोष्ठौ। एषां सप्तानामुत्पत्तेः स्थानमोष्ठौ भवतः ॥ ऋटुरषाणां मूर्द्धा ॥ एषामष्टानामुत्पत्तेः स्थानं मूर्द्धास्ति ॥ ऌतुलसानां दन्ताः। एषामष्टानामुत्पत्तेः स्थानं दन्ताः सन्ति ॥ एदैतोः कण्ठतालु। एकारैकारयोरुत्पत्तेः स्थानं कण्ठतालु भवति। ओदौतोः कण्ठोष्ठम्। ओकारौकारयोरुत्पत्तेः स्थानं कण्ठोष्ठमस्ति ॥ वकारस्य दन्तोष्ठम्। वस्योत्पत्तेः स्थानं दन्तोष्ठमस्ति ॥ जिह्वामूलीयस्य जिह्वामूलम्। जिह्वामूलीयवर्णस्य जिह्वाया मूलमुत्पत्तेः स्थानमस्ति ॥ नासिकानुस्वारस्य। अनुस्वारस्योत्पत्तेः स्थानं नासिकास्ति ॥

हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥

तं हकारम् उरस्यम् उरसि भवं विजानीयाद्विशेषेण जानीयात् त्वमिति शेषः। किम्भूतम्। पञ्चमै-

मूलीयस्य जिह्वामूलम् । अनुस्वारस्य नासिका । एदैतोः कण्ठतालु । ओदौतोः कण्ठौष्ठम् । वकारस्य दन्तौष्ठम् । आ ई ऊ ऋ ऌ प्लुताश्च । एते एतेषां सवर्णग्रहणेनैव गृह्यन्ते । यवरलैर्ङणनमैश्च संयुक्तस्य हस्योरःस्थानम् । यतः—

"हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
औरस्यं तद्विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥
गजकुम्भाकृतिर्वर्ण ऋवर्णः स प्रकीर्तितः ।
एवं वर्णा द्विपञ्चाशन्मातृकायामुदाहृताः" ॥ २५ ॥

( प्र० ) असंयोगादीति । न संयोगादिः संयोगविसर्गानुस्वाराः परे यस्य स तथा विसर्गादिपरस्य ह्रस्वस्यापि गुरुत्वम् । तदुक्तम्—"संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् । विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इति ॥

मुखनासिकाभ्यामिति । नासिकामनुगतोऽनुनासिको वर्णधर्मस्तदभेदोपचाराद्वर्णोऽपि । यद्यपि द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामित्येकवद्भावविधेर्मुखनासिकाभ्यामित्ययुक्तं तथाप्यत्र नासिकाशब्देन लक्षणयोच्चारणस्थानयोर्नासाविवरयोरभिधानात् मुखेन युक्ता नासिकेति तत्पुरुषाश्रयणात्साधुत्वम् । यद्वा लक्षणहेत्वोरिति सूत्रे मुखनासिकाभ्यामिति भाष्ये च प्रयोगाज्ज्ञापकादेकवद्भावाऽनित्यत्वम् । अत एव—"ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते" । "पातितै रथनागाश्वैः" इत्यादि प्रयोगाः । रक्षिते तु दधिपयआदेराकृतिगणत्वादेकवद्भावाभाव उक्तः ॥ २६ ॥

इति लघ्व्युपयोगिनी संज्ञाप्रक्रिया ॥ १ ॥

---

वर्णग्रहणे सवर्णग्रहणम् । कारग्रहणे केवलग्रहणम् । तपरकरणं तावन्मात्रार्थम् ॥ इति संज्ञाप्रक्रिया ॥ १ ॥

( च० ) वर्णग्रहणे सवर्णग्रहणं, कारग्रहणे केवलग्रहणं, तपरग्रहणे तावन्मात्रग्रहणमिति शिष्टसङ्केतः ॥

इति संज्ञाप्रक्रिया संज्ञाधिकारः ॥ 'प्रक्रियात्वधिकारोऽथ' इति हेमसूरिः । अथवा—
'प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः' ॥ १ ॥

---

ञमङणनैर्युक्तम् । पुनः किंभूतम्—अन्तस्थाभिर्यरलवैः संयुतं मिलितम् । [ एवमपि ] पञ्चमैरसंयुतमन्तस्थाभिश्चासंयुक्तं हकारमाचार्याः कण्ठ्यं कण्ठोद्भवमाहुर्ब्रुवन्ति ॥ वर्णानामुत्पत्तेरष्टौ स्थानानि सन्ति । तथा—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥

मातृकायामेवानेन प्रकारेण द्विपञ्चाशद्वर्णा आचार्येणोदाहृताः । तद्यथा—

व्यञ्जनानि त्रयस्त्रिंशत् स्वराश्चैव चतुर्दश । अनुस्वारो विसर्गश्च जिह्वामूलीय एव च ॥
गजकुम्भाकृतिर्वर्णः प्लुतश्च परिकीर्तितः । एवं वर्णा द्विपञ्चाशन् मातृकायामुदाहृताः ॥ इति

इति स्थानानि । अथ प्रयत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आभ्यन्तरः पञ्चधा । स यथा—स्पर्शानां स्पृष्टं प्रयतनम् । अन्तस्थानामीषत्स्पृष्टं प्रयतनम् । स्वराणां विवृतं प्रयतनम् । ऊष्माणामीषद्विवृतं प्रयतनम् । ह्रस्वस्याकारस्य संवृतं प्रयतनम् । बाह्यस्त्वष्टधा । ✕क✕पविसर्गशषसानां विवारः श्वासोऽघोषश्च प्रयत्नः । हवानां संवारो नादो घोषश्च प्रयत्नः । वर्गाणां प्रथमतृतीयपञ्चमानामन्तस्थानां चाल्पप्राणः प्रयत्नः । वर्गाणां द्वितीयचतुर्थानामूष्माणां महाप्राणः प्रयत्नः । इति प्रयत्नः ।

इति श्री यास्कवंशसम्भूतबिम्बाधरकरचरणसेवक—श्रीनवकिशोरकर-
वेदान्तशास्त्रिप्रपूरिता सञ्ज्ञाप्रकरणीया मनोरमा वृत्तिः समाप्ता ।

## ❋ अथ परिभाषाप्रकरणम् ।२। ❋

**( षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः )** स्थानषष्ठ्या निर्दिष्टस्य शब्दस्य य आदेश उच्यते स आदेशोऽन्त्यस्य वर्णस्य स्थाने भवतीत्यर्थः । ऐसख्युरित्यैकारः सखिशब्दस्यान्तस्यैकारस्य भवति । स्थानषष्ठीति किम् । कृत इति इडागमस्तृप्रत्ययस्य अवर्णात्पूर्वो माभूदिति । जश्शसोः शिरित्यादीनां शित्त्वं परिभाषां ज्ञापयति । तद्यथा—तत्र हि शित्त्वमन्त्यादेशं बाधित्वा सर्वादेशो यथा स्यादित्येतदर्थं कृतम् । यदि षष्ठीनिर्दिष्टस्यादेशोऽन्त्यस्य न स्यात्तर्हि अन्तरेणापि शित्त्वं सर्वादेशः सिद्धः किं तेनेति व्यर्थेन सता शित्त्वेन ज्ञापयति ।

**( ङिदन्तस्य वक्तव्यः )** ङिदादेशोऽप्यन्तस्य भवति । त्रयाणाम् । अनुङ्ङादीनां ङित्त्वेन ज्ञापितेयम् । ङित्त्वस्य फलान्तरादर्शनात् ।

**( गुरुः शिच्च सर्वस्य )** अनेकवर्ण आदेशः शिदादेशश्च सर्वस्य स्यात् । षष्ठीनिर्दिष्टस्येत्यस्यापवादोऽयम् । अनटौसोरित्यनादेशस्त्रिवर्णात्मको गुरुरस्ति । स सर्वस्येदमः स्थाने भवति । यथा अनेनेति । जश्शसोः शिरिति शिदादेशः सर्वस्य जसः शसश्च स्थाने भवति । यथा वारीणीति । उच्चारितप्रध्वंसिनोऽनुबन्धाः स्मर्य्यमाणाः सन्त एव कार्य्यं निर्वाहयन्तीति ॥ ततः—

**( अनुबन्धकृतमनेकवर्णत्वं न स्वीक्रियते )** अत्र संप्रसारणानि पराणीत्यादिनिर्देशेन शिदंशे ज्ञाप्यते इयं परिभाषा । तथाहि—जश्शसोः शिश्चेत् सर्वस्य न स्यात्तदोक्तनिर्देशोऽनुपपन्नः स्यात् । इति ॥ 'साधनाधिकरणयोर्ल्युट्' कारकाक्रियायुक्ते' इत्यादिनिर्देशेनानेकवर्णांशे ज्ञाप्यते इयम् ।

**( टित्किताद्यन्तयोर्वक्तव्यौ )** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ भवतः । अभविष्टेति । दातो औ पुगिति पुक्, आत इत्यस्यान्तावयवो भवति । यापयतीति । अन्यार्थटित्कित्स्वियं परिभाषा न प्रवर्त्तते । यथा । अट चिति टकारस्य टुत्वेन इतीप्रयोजनमस्ति कुरुचरीति । यक्चतुर्ष्विति ककारस्य गुणाप्रवृत्तिः प्रयोजनमस्ति । भूयते इति । प्रत्ययविधौ नेयं प्रवर्त्तते इति वा । टिदंशे तस्मादिर्यप्रात इति स्मट् । रः संख्याया इत्यत्र यट् । नवानामित्यत्र नुट् । किदंशे तु कार्यायेत्यत्र 'ङेः अक्' इत्यक् । ऐसख्युरित्यत्र 'कुकूड्' इत्युक् । वर्त्तमाने इत्यत्र मुगानेन इति मुगिमां परिभाषां ज्ञापयति ।

**( मिदन्त्यात्स्वरात्परो वक्तव्यः )** स्वराणां मध्ये योऽन्त्यस्वरस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । 'नुमयम' इति नुमः पूर्वान्तत्वान्नोपधाया इति दीर्घः सिध्यति । कुलानि, यशांसीति । नुमः परादित्वे तु नोपधाया इति दीर्घो न स्यात् । वारिणे इत्यादौ ङितीत्यैकारश्च स्यादिति अस्याः संप्रसारणीति निर्देशो ज्ञापकः ।

**( सप्तमीनिर्देशेन विधीयमानं कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्यैव वक्तव्यम् )** नियमार्थेयम् । 'इ यं स्वरे' इत्यत्र स्वरे इति भावे सप्तमी । अश्रूयमाणक्रियत्वाच्चान्तरङ्गस्यास्त्यर्थस्य लाभो भवति । तेन स्वरे सति यकारो भवतीत्यर्थः । व्यवहितेऽव्यवहिते च प्राप्तमव्यवहिते एवेति पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते । पूर्वस्येति किम् । ननु इदमेकारस्य माभूत् । अव्यवहितस्येति किम् । अग्निचिदित्यत्र सान्तरस्य माभूत् । अस्याः ण्वादेः नुगः लिट्पुषादेः सखिपत्योरित्यादिनिर्देशो ज्ञापकः ।

**( पञ्चमीनिर्देशेन क्रियमाणं कार्यमव्यवहितस्य परस्य वक्तव्यम् )** उदः स्थास्तम्भोः सलोपः

इत्यत्रोद इति पञ्चमीनिर्देशेन क्रियमाणो लोपः सोऽन्यवहितस्य परस्य स्थास्तम्भोः सकारस्य भवति। उत्थानम्, उत्तम्भनमिति। अव्यवहितस्येति किम्। उत्संस्थानम् उत्संस्तम्भनम्। इत्यादौ माभूत्। परस्येति किम्। अस्था उदासने स्तम्भ उद्गच्छत्यत्र माभूत्। अस्याः ज्ञापकः स नपुंसकं स धातुरित्यादिनिर्देशः। तत्र हि सैषादिति विसर्गलोपः कृतोऽतो ज्ञाप्यते।

( ह्रस्वदीर्घप्लुतशब्दैर्यत्र स्वरो विधीयते तत्र स्वरेति षष्ठयन्तं पदमुपतिष्ठते ) षष्ठीनिर्दिष्टस्येत्यस्य नायमपवादः किन्तु तच्छेष एव। स्वरस्येति षष्ठयन्तं पदं सति सम्भवे सामानाधिकरण्येनैव सम्बध्यते न वैयधिकरण्येन। तेन नपुंसकस्येत्यत्र स्वरान्तस्यैव नाम्नो ह्रस्वो भवति। सोमपामिति। नेह सुवाक् ब्राह्मणकुलम्। स्वरान्तत्वाभावान्न ह्रस्व इत्यर्थः। शमां दीर्घ इत्यत्र तु सामानाधिकरण्यस्यासम्भवात् शमादीनां स्वरस्येति सम्बध्यते। तेन शाम्यतीत्यादि सिद्धम्। से दीर्घ इत्यत्र स्वरान्तस्य धातोर्दीर्घः। सञ्जिगीषतीति। नेह। बिभित्सतीति। दूराद्धाने टेः प्लुत इत्यत्र सामानाधिकरण्यस्य सम्भवेऽपि टिग्रहणसामर्थ्यात् टेरवयवस्य स्वरस्य प्लुतो भवति। आयुष्मन् एधि इन्द्रवर्मन्। ज्ञापकसिद्धेयम्। तथा हि—यजां यवराणां रुदादेश्चतुर्णामित्यत्र नामीनि दीर्घस्य प्रवृत्त्यप्रवृत्तिभ्यां स्वरान्तेषु नामीति दीर्घो भवति न हसान्तेषु इति ज्ञापितम्। एकदेशानुमितिद्वारा ह्रस्वप्लुतयोरप्येवम्।

( वर्णानां प्रसङ्गे सति सदृशतम आदेशो वक्तव्यः ) सादृश्यं चतुर्विधमस्ति। स्थानार्थगुणप्रमाणभेदात्ः स्थानतो यथा—दध्यानयेत्यत्र तालुस्थानस्येकारस्य तालुस्थानो यकारः। अर्थतो यथा—रूपवती भार्या यस्य स इत्यत्र पुंवद्वेत्यनेन पूर्वपदस्य स्थानेऽतिदिश्यमानः पुंशब्दो रूपवत्स्ववाचिनो रूपवतीशब्दस्य स्थाने तदर्थवाची एव रूपवच्छब्दो भवतीत्यर्थः। गुणतो यथा—वाग्घरित्यत्र घोषवतो नादवतो महाप्राणस्य संवारवतो हस्य तादृशो वर्गचतुर्थो घकारो भवतीत्यर्थः। प्रमाणतो यथा—अमुम्, अमू, अमून् इत्यत्र मादू इत्यनेन पूर्वपदस्य स्थाने ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उवर्णो भवतीत्यर्थः। न्यायसिद्धेयम्। तथाहि सभायामास्यतामित्युक्ते हि पण्डिताः पण्डितैः सहासते। शूराः शूरैः सहासते। कवयः कविभिः। न तु संकरेण। किं च गवां संघं प्रति गौर्धावति, अश्वोऽश्वानामित्यादिव्यवस्था तिर्यक्ष्वपि दृश्यते।

( लोपाशि पुनर्न संधिर्वक्तव्यः ) लोपाशि कृते सति संधिर्न भवति। यथा त आगताः।

( नस्य लोपशि तु संधिर्वक्तव्यः ) स्वादेरिति निर्देशात्। यथा राजाश्वः।

( नस्य लोपाशि न विभक्तिकार्यम्) पञ्चस्विति निर्देशात्। क्लिलात्वः स इति षत्वं तु भवत्येव तस्य वर्णमात्राश्रितत्वात्। यथा पथिषु। अस्याः ज्ञापकः 'आचारउपमानात्' 'अत उपधायाः इत्यादिनिर्देशः।

( विशेषणं तदन्तस्य स्वस्य च रूपस्योपस्थापकं वक्तव्यम्) अप्रधानमप्यस्मान्तस्य रूपस्य ग्राहकं भवति। स्वस्य रूपस्य चेत्यर्थः। स्वराद इत्यत्र धातोरिति विशेष्यं स्वरादिति विशेषणं तदन्तग्राहकं भवति। स्वरान्ताद्धातोरप्रत्ययो भवतीति। स्वस्य रूपस्य च ग्राहकं स्वररूपाद्धातोश्चाप्रत्यय इति। चयः, अयः। अस्याः ज्ञापकोऽतिशये हसादेः अन्वये नाम्नामित्यादिनिर्देशः। न ह्यत्र तदन्तविधिं विना स्वराद इति विधीयमानोऽप्रत्ययः शीङो भवेत्। स्वरग्रहणं विना च इधातोरप्रत्ययो न लभ्यतेति इयं परिभाषा।

( यदादेशस्तद्वद्भवति ) न तु वर्णमात्रविधौ आदेशे कृते स्वरूपभेदात्। स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते। आदेशः स्थानिवद्भवति। यथा लक्ष्म्यामित्यत्र ङेरामादेशे कृते तस्यामो ङित्त्वात् ङितामाडित्यट् भवति। वर्णमात्रविधौ स्थानिवद्भावो न भवति। वर्णश्च स्थान्यवयव एवात्र गृह्यते। यत्र वर्णमात्रेण विधिः यत्र वर्णमात्रात् परस्य विधिर्यत्र वर्णमात्रं स विधिर्यस्य वर्णमात्रे विधिस्तत्र माभूत्। तत्र वर्णमात्रेण विधौ यथा—व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वेन विसर्गत्वमाश्रित्यावकुप्वन्तरेऽपीति णत्वं प्राप्तमिति तन्न भवति। वर्णमात्रात्परस्य यथा—द्यौरित्यत्र दिव औरित्यौकारस्य स्थानिवत्त्वेन पन्था इत्यत्र असावित्याकारस्य स्थानिवत्त्वेन च हसत्वमाश्रित्य 'हसेप' इति सिलोपो न भवतीति। वर्णमात्रस्य विधौ यथा—द्युकाम इत्यत्र उ रवे इत्युकारस्य स्थानिवत्त्वेन यवयोर्वसं हकारे च लोपो न भवतीति। वर्णमात्रे विधौ यथा—क इष्ट इत्यत्र यजदेव पूजादौ इति धातोः क्तप्रत्यये परतः सम्प्रसारणस्य स्थानिवत्त्वेन यकारमाश्रित्य 'ह्वे' इत्युकरो न भवतीति। क्रियायां क्रियामित्यादिनिर्देशो ज्ञापकः।

इति श्रीनवकिशोरकरवेदान्तशास्त्रिप्रपूरिता सदानन्दकृता परिभाषा समाप्ता।

## * अथ स्वरसंधिः । ३ । *

अथाधुना स्वरसंधिरभिधीयते ॥ दधि आनय इति स्थिते(क) ॥

(च०) अधुनेति । संज्ञाकथनानन्तरं स्वरसन्धिरभिधीयते कथ्यते । अक्षराणामन्योन्यं सन्धानं मेलनं सन्धिः । तत्राप्यादौ स्वरसन्धिः । स्वराणां सन्धिः स्वरसन्धिः ॥ ननु सति अकारे इकारसन्धिरादावेव कथं प्रतिपादितः ? तत्रोच्यते—इकारः सावित्रीरूपः शक्तिरूपः । सा च सर्वजगत्सृष्टिकर्त्री । तस्मात्पूर्वं प्रतिपादितः ॥ १ ॥

( प्र० ) उपोद्घातसङ्गत्या संज्ञां निरूप्य सन्धिसूत्रोपजीवकत्वाच्छब्दनिरूपणात्प्राक् सन्धिनिरूपणं प्रतिजानीते । अधुनेति । सन्धित्वं च पूर्वोत्तरान्योन्यमिलितत्वं कार्यत्वम् ॥ १ ॥

इ यं स्वरे ॥ इवर्णो यत्वमापद्यते स्वरे परे ॥ १ ॥ दध् य् आनय इति तावद्भवति(ख) ॥

( च० ) सूत्रम्—'इ यं स्वरे' इ प्रथमैकवचनान्तम् । सांकेतिकम् । यम् द्वितीयैकवचनान्तम् । 'अमृशसो०' 'मोऽनुस्वारः' । स्वरे सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् ॥ यद्वा इश्च ईश्च इ प्रथमैकवचनान्तम् । 'नपुंसकस्य' इति ह्रस्वः । 'नपुंसकात्स्यमोर्लुक्' 'वर्णग्रहणे सवर्णग्रहणम्' इति वचनात् इवर्णं इकार-ईकाररूपो यत्वं यकारमापद्यते प्राप्नोति स्वरे परे । 'ह्रस्वदीर्घप्लुतभेदा' इति अकारस्य स्वरत्वे आकारस्यापि स्वरत्वं सिद्धमेव । दधि अग्रे आनय । 'इ यं स्वरे' अनेन सूत्रेण इकारस्य यकारः । दध्य् आनय

---

( क ) उपोद्घातसङ्गत्या सन्ध्युपयोगिसंज्ञां निरूप्य सन्धिसूत्रोपजीवकत्वाच्छब्दनिरूपणात्प्राक् सन्धिनिरूपणं प्रतिजानीते—अधुनेति । ननु किं नाम सन्धित्वम् । उच्यते । पूर्वोत्तरान्योन्यमिलितत्वं कार्यत्वमिति ।

( ख ) इ यं स्वरे । अत्र पदत्रयमस्ति । इश्च ईश्चेति समाहारद्वन्द्वे एकवद्भावे नपुंसकत्वे च 'इ' इति । इ इति प्रथमान्तं कर्तृपदं यमिति भावप्रधानं कर्मपदं स्वरे इति भावे सप्तमी । अथवा यमिति प्रथमान्तं कर्तृपदम् । अकार उच्चारणार्थः । योग्यत्वाद् भवतेरध्याहारः, यत्तु प्रसादकृता साङ्केतिकमिदमित्युक्तं तच्चिन्त्यम्, ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रमार्गेण प्रदर्शनायोगात् । ननु इ यं स्वरे इत्यत्र इकारग्रहणं किमर्थमिति । उकारादीनां यत्ववारणायेति चेत्, न, उवमित्यादिसूत्रप्राबल्यात् । न च षडत्रेत्यादौ टकारादीनां यत्वनिषेधार्थं तदिति चेत् तत्रापि पूर्ववत् 'चपा अबे जबाः' इत्यादिसूत्रप्राबल्यात् । अथ पचतीत्यत्र चकारस्य तद्वारणायेति चेत् 'ङ्णनो ह्रस्वात्' 'दीर्घात्' इति सूत्राभ्यां ह्रस्वदीर्घग्रहणमनुवर्त्य ह्रस्वदीर्घयोरेव यत्वविधानात् इति चेत्सत्यम्, चितुअत्रेत्यादौ प्लुतस्यापि पक्षे यत्वविधानार्थमिग्रहणस्यावश्यकत्वात् । स्वरे किम्, दधि पश्य । स्थानी आदेशो निमित्तं चेति त्रयं सर्वत्र बोध्यम् । किञ्च अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया अस्यापत्यमिः स्त्री च ई इत्यत्रैव यकारः स्यात् न तु दध्यानयेत्यादौ । उच्यते । स्यादावित्यादिनिर्देशेन, तस्यानित्यत्वज्ञापनान्न निषेधः । दध्यानयेत्यत्र स्यादिस्वरत्वाभावात् 'नामिनः स्वरे' इति नुमागमो न । तद्धितस्वरत्वाभावात् । यस्य लोप इति यस्य लोपोऽपि न । नन्वत्र 'संयोगान्तस्य लोपः' इत्यनेन यलोपः कथं न स्यादिति चेत्सत्यम् । असिद्धं बहिरङ्गमन्तरङ्गे इति न्यायेनान्तरङ्गं लोपं प्रति बहिरङ्गस्य यादेशस्यासिद्धत्वादिति गृहाण । ननु "अकारादिसकारान्ता वर्णाश्च ब्रह्मरूपिणः, इकारस्य यकारत्वं ब्रह्मनाशाय कल्पते" । इत्यनेन इकारस्य यकारकरणे ब्रह्मवधः स्यादिति चेन्न, इकारस्तु परं ब्रह्म स्वररूपाक्षरे परे । स्वस्वरूपं परित्यज्य यत्वमेति नटो यथा । इत्युक्तत्वात् ।

इति जातम् । ननु दधि आनयेत्यत्र 'नामिनः स्वरे' इति नुमागमः कथं न क्रियते ? तत्राह—'नामिनः स्वरे' इति तु स्यादिविभक्तिसप्तकस्वरे परे भवति न त्वन्यत्र । तर्हि 'यस्य लोपः' कथं न क्रियते ? तत्राह—'यस्य लोपः' इति तु ईपि, तद्धिते ( कृते ) स्वो यकारे च परे सति भवति न त्वन्यत्र । दध्य् आनयेत्यत्र 'संयोगान्तस्य लोपः' इत्यस्य प्राप्तौ । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति यलोपनिषेधः । यद्वा—'संयोगान्तस्य लोपः' इति स्वाभाविकसंयोगान्तविषयः ॥ प्रक्रियायां तु 'संयोगान्तस्य०' इति लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' ॥ १ ॥

( प्र० ) स्वराणां प्रथमोद्दिष्टत्वेन स्वरसन्धिमभिधास्यन् अवर्णस्य च तत्त्वेन सन्ध्यभावात्सवर्णेदीर्घः सहेत्यादेश्च परत्वेन बलवत्त्वार्थेन तत्परित्यागेन इवर्णादिक्रमेण सन्धिमाह । इ यमिति । सांकेतिकं प्रथमैकवचनान्तम् । तदुक्तम् । "सूत्रे विभक्तिर्नैवास्ति वृत्तौ सा यत्र दृश्यते ॥ एकद्विबहुवाक्येषु तत्सांकेतिकमुच्यते" इति ॥ वस्तुतस्तु अनुभूतार्थयोगित्वं सांकेतिकत्वम् । यत्वमिति भावनिर्देशः सस्वरयकारादेशः सन्देहोभावार्थः । व०प्रहणेन सवर्णग्रहणाद्दीर्घेकारस्यापि ग्रहणम् ॥ १ ॥

**हसेऽर्हहसः** ॥ स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति ॥ २ ॥ इति धकारस्य द्वित्वम्(क) ॥

( च० ) कृत्यान्तरमाह—सूत्रम्—'हसेऽर्ह्हसः' ॥ हसे सप्तम्येकवचनान्तम् । 'अ इ ए' र् च ह च र्ह् न र्ह् यत्र स अर्ह् प्रथमैकवचनान्तम् 'हसेपः सेर्लोपः' । हसः प्रथमैकवचनान्तम् । स् । 'स्रोर्विसर्गः' । हसे अर्ह् । 'एदोतोतः' अकारलोपः । 'स्वरहीनं०' सिद्धम् । स्वरात् ह्रस्वस्वरात्परोऽग्रे वर्तमानो रेफहकारवर्जितोऽन्यो हसो हसप्रत्याहारसम्बन्धी वर्णो हसे परे सति द्विर्भवति । द्वयोर्भावो द्वित्वम् । एकस्य द्वौ भवत इत्यर्थः । इति धकारस्य द्वित्वम् । द्वित्वे कृते पुनर्द्वित्वं न भवति । अनवस्थादोषप्रसङ्गात् । द्वित्वविधानात् द्वावेव शिष्येते इति दध्ध्य् आनयेति जातम् ॥ २ ॥

---

( क ) हसेऽर्ह्हसः । अत्र सिंहावलोकिताधिकारात् 'ङ्णनो ह्रस्वाद्‌द्विः स्वरे' इति पूर्वसूत्राद् ह्रस्वादित्यस्यानुवृत्तस्य च लक्षणया स्वरपरत्वं बोध्यम् । तत एव च सूत्राद् स्वर इति द्विरिति चानुवृत्तम् । केचिदत्र 'य्वोर्लोपश् वा पदान्ते' इत्यतो वाकारस्यानुवृत्तिं मन्यन्ते । ततो ह्रस्वात्स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्वा भवतीत्यर्थः । तेन पक्षे दध्यानय । यत्तु दात्रं पात्रमित्यादौ दीर्घाद्द्वित्वनिवृत्त्यर्थं ह्रस्वादित्येव वक्तुं युक्तमिति तन्न, तत्र विकल्पेनैव तद्वारणसम्भवात् । ये तु विकल्पं न मन्यन्ते, तन्मते तु तद्वक्तुं स्थाने । अत्र संयोगान्तस्येति हलोपो न, सभिन्नस्येति निषेधात् । रात्सस्यैव लोप इति नियमात् । अस्वरेऽर्ह् हस इति तु सुवचम् । 'ननु 'हसेऽर्ह्हसः' इति सूत्रेण 'दध्ध्य्' इत्यादौ द्वित्वे सति पुनरपि तेनैव द्वित्वप्राप्तिरस्ति । सत्यम् । पुनरत्र द्वित्वं तु जातिपदार्थाश्रयणान्न भवति । जातौ पदार्थे सकृदेव लक्षणप्रवृत्तिर्न पुनः । न च 'दध्ध्य्' इत्यत्र यकारस्य स्थानिवद्भावेन स्वरत्वमाश्रित्य 'हसेऽर्ह्हसः' इति, द्वित्वनिषेधो भाव्यः । न तु वर्णमात्रविधाविति स्थानिवद्भावनिषेधात् । 'नादिन्याक्रोशे पुत्रस्य' । पुत्रशब्दस्य न द्वेस्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । आक्रोशे किम्, तत्त्वकथने द्विर्वचनं भवत्येव । पुत्रादिनी सर्पिणी । तत्परे च । न द्वित्वमित्यर्थः । पुत्रपुत्रादिनी त्वमसि पापे । 'वा हतजग्धयोः' । पुत्रहती—पुत्त्रहती, पुत्रजग्धी—पुत्त्रजग्धी । स्वरादिति किम् । तस्मिन् स्नातः । हसे किम्, भवानत्र । हसः किम्, तितउच्छत्रम् । अर्हिति किम्, हर्य्यनुभवः, नह्यस्ति ।

( प्र० ) ह्रसे इति । ह्रौ हसः र् च ह् च ह्रौ ताभ्यामन्योऽह्रः । रेफहकारवर्जित इति । रेफहकाराभ्यामन्यः रेफत्वहकारत्ववर्जित इति वा । स्वरादिति इङणो ह्रस्वाद्‌द्विः स्वरे इति पूर्वसूत्राद्‌ह्रस्वादित्यनुवृत्तेस्तस्य च स्वरभेदत्वात्। अत एव दात्रम्, पात्रमित्यादौ दीर्घात्परस्य न द्वित्वम् । जातिपदार्थाङ्गीकारात्स्वरे ह्रस्वस्यानुवृत्तेर्वा पुनर्द्वित्वाप्रसङ्गः ॥ २ ॥

झबे जबाः ॥ झसानां झबे परे जबा भवन्ति ।३। इति पूर्वधकारस्य दकारः सवर्णत्वात्, 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् । यथासंख्यं वा वक्तव्यम् (क) ॥ स्वरहीनं परेण संयोज्यम् ॥ दद्‌ध्यानय इति सिद्धम् ॥

"तक्रं न रोचतेऽस्माकं दुग्धं च मधुरायते ।
अन्नरोचनार्थाय दद्‌ध्यानय वरानने ॥ १ ॥
दधि न श्रूयते कर्णे घृतं स्वप्ने न दृश्यते ।
मुग्धे दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ २ ॥
कृतस्य करणं नास्ति मृतस्य मरणं न हि ।
पिष्टस्य पेषणं नास्ति द्वितये त्रितयं न हि" ॥ ३ ॥

(च०) सूत्रम्—'झबे जबाः' झबे सप्तम्येकवचनान्तम्। 'अ इ ए' । जबाः प्रथमाबहुवचनान्तम् 'सवर्णे' 'सोर्विसर्गः' । वृत्तिः सुगमा । अत्र सूत्रे झसानामिति पदं 'खसे चपा झसानाम्' इति सूत्रादनुवर्तते । अन्यत्राप्यनुवृत्तिः सरस्वतीदत्तसूत्रपाठक्रमादवगन्तव्या । अत्र तु मया न कथयिष्यते । अनेन सूत्रेण पूर्वधकारस्य दकारः । ननु झसाश्चयोविंशतिः जबाः पञ्चैव तेन यथासङ्ख्यमिति धकारस्य दकार एव कथं क्रियते? तत्राह—सवर्णत्वात् धकारस्य दकारो भवति । ननु धकारदकारयोः सावर्ण्यं कथमित्याह—वर्ग्यो वर्ग्येण सवर्ण इति । वर्गे भवो वर्ग्यो वर्णः वर्ग्येण स्ववर्गान्तर्वर्तिना अक्षरेण सह सवर्णो भवतीति । सवर्णत्वात् धस्य दः ॥ यद्वा—यथासङ्ख्यं झढध, जडदेत्यनेनापि धस्य दः । अत्र तु सवर्णत्वात् यथासंख्यमित्युभयत्रापि धस्य दकारो भवति । परम् अग्निमथ्भ्यामित्यत्र सवर्णत्वादेव थकारस्य दकारो भवति । न तु यथासंख्यम् । स्वरेण हीनं रहितं यदक्षरं तत्परेण अग्रस्थितेन स्वरेण वर्णेन सह संयोज्यम् । दद्‌ध्यानयेति सिद्धम् । एवम् स्वस्ति अस्तु स्वस्त्यस्तु । हरि अनुभवः । हर्यनुभवः ॥ ३ ॥

( प्र० ) झबे इति । केचित् झसे इति पठन्ति । तन्मन्दम् । झबे परत एव जबदर्शनाधिकरणप्रसङ्गतेः । भृज्जौ भृज्ज इत्यादावन्यत्र सौ ज इति सिद्धेः । गोमहिषीन्यायेन सवर्णस्य सवर्ण एव भवतीति भावः । यद्यपि झसानां बहुत्वाज्जबानां चाल्पत्वा-

---

( क ) झबे जबा । झसानां जबाः स्युर्झबे । झसानामिति किम् , गीर्भ्याम् । झबे किम् , खञ्जः । केचिद् झसे जबा इति पठन्ति । तच्चिन्त्यम् , भृज्जनं भृज्जतीत्यादौ चाव्याप्तेः ।

दत्र यथासङ्ख्यत्वासंभवस्तथापि पञ्चपञ्चवर्णसमुदायापेक्षया यथासङ्ख्यत्वं, प्रसङ्गादत्रोक्तेर्वा। अत एवाग्निमदित्यादौ यथासङ्ख्यत्वेनादेशाभावः । वक्तव्यस्य प्रयोगानुसारित्वाद्वा । तदुक्तम्—"सारस्वततन्त्रे तुल्येऽपि सूत्रवक्तव्ययोर्भिदः । प्रवृत्तिर्लक्षणात्सूत्रे व्यक्तये तु प्रयोगतः" इति ॥ अन्तरङ्गे संयोगान्तलोपे कर्तव्ये बहिरङ्गस्यादेशस्यासिद्धत्वात्तद्भावः स्यात ॥ ३ ॥

गौरी अत्र इति स्थिते । इ यं स्वरे । गौर् य् अत्र तावद्भवति । यत्वे कृते अर्ह इति विशेषणान्न रेफस्य द्वित्वं किन्तु ?—

**राद्यपो द्विः ॥** स्वरपूर्वाद्रेफात्परो यपो द्विर्भवति(क) ।४। इति यकारस्य द्वित्वम् । गौर् य् य् अत्र । जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् । स्वरहीनं परेण संयोज्यम् । गौर्य्यत्र ॥

(च०) इकारोदाहरणमाख्याय ईकारोदाहरणमाह—गौरी अग्रे अत्र 'इयं स्वरे' गार् य् अत्र इति जातम् । ततोऽर्ह इति सूत्रोक्तविशेषणात् रेफइकारयोर्द्वित्ववर्जनादत्र रेफस्य द्वित्वं न भवति । ततः किं कर्तव्यमित्याह—सूत्रम्—'राद्यपो द्विः' ॥ रादिति पञ्चम्येकवचनान्तम् । 'हसिरत्' 'सवर्णे०' ॥ यपः प्रथमैकवचनान्तम् । स्—'स्रोर्विसर्गः' । 'द्वित्रिभ्यां सुच्' 'स्रोर्विसर्गः' ॥ द्विस् प्रथमैकवचनान्तम् । 'अव्ययाद्विभक्तेर्लुक्' इति लोपः । 'चपा अबे जबाः' संधिः । यपः अग्रे द्विः । अत्र 'हवे' 'उ ओ' सिद्धम् । स्वरः पूर्वं आदौ यस्य स स्वरपूर्वः तस्मात् स्वरात्परस्माद्रेफात्परोऽग्रस्थो यपो द्विर्भवति इति यकारस्य द्वित्वम् ॥ 'जलतुम्बि०' यथा तुम्बी जलस्योपरि तिष्ठति तथा रेफोऽपि वर्णस्योपरि गच्छति नत्वधः ॥ 'स्वरहीनं०' गौर्य्यत्रेति सिद्धम् । केचित्तु दीर्घस्वराग्रस्थात् रेफात् परस्य द्वित्वं नेच्छन्ति तन्मते गौर्यत्रेति सिध्यति । एवं नदी एषा नद्येषा॥४॥

( प्र० ) अर्ह इत्यत्र संश्लिष्टत्वाद्धकारस्याप्युपलक्षणत्वाद्ब्रह्मस्तीत्यादौ हात्परस्यापि यपो द्वित्वम् । यद्यपि माठरकौण्डिन्यन्यायेन साक्षाच्छब्देन रेफस्य द्वित्वनिमित्तत्वेन द्वित्वकार्यित्वबाध एवेति विशेषणवैयर्थ्यं तथाप्यस्यैव प्रपञ्चार्थमेतदित्यवसेयम् । ङ्णनो ह्रस्वादित्यतो द्विरित्यनुवर्तमानेऽपि द्विरिति पूर्वस्यानित्यत्वज्ञापनार्थम् ।

---

( क ) रहाद्यपो द्विः । स्वरात्पराभ्यां रेफहकाराभ्यां परो यपो द्विर्भवति । केचिद् यपो वैकल्पिकं द्वित्वमिच्छन्ति । तेन पक्षे गौर्यत्र, ब्रह्मस्तीत्यादि सिध्यति । ननु मद्ध्रद इत्यत्र स्वरात्पराद्धकाराद्रेफस्यापि द्वित्वप्रसङ्गः स्यादिति चेन्नः सामान्यस्य विशेषेण बाधानुभवात् । विशेषे हि रस्य निमित्तत्वं सामान्ये तु कार्यित्वम् । माठरकौण्डिन्यन्यायेन । तद्यथा । ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामिति ब्राह्मणभोजने निमित्तीभूतयोस्तयोर्भोजनं बाध्यते । तद्वद्यपस्य द्विरुक्तौ निमित्तस्य द्वित्वं बाध्यते । एवमन्यत्रापि यत्र द्वित्वनिमित्तत्वं रेफस्य न यपान्तर्गतत्वेन द्वित्वकार्यित्वम् । केचित्तु—'न दीर्घादाचार्याणाम्' इति दीर्घस्वरस्थाद्रेफात्परस्य यपस्य द्वित्वं नेच्छन्ति । तन्मते गौर्यत्रेति सिध्यति । जलतुम्बिकेति । न्यायो यथा—तुम्बिकाशुष्ककाष्ठञ्च तैलं जलसमागमे, ऊर्ध्वस्थानं समायाति रेफाणामीदृशी गतिः । इति । अपि च—स्वरं दृष्ट्वा त्वधो याति हसस्योपरि गच्छति, अवसाने विसर्गः स्यान्निधा रेफस्य लक्षणम् । इति प्रमाणम् । व्यवस्थितविभाषया शषस्यापि द्वित्वम् । कुत्रचिद्भवति कुत्राचिन्न भवतीति व्यवस्थितविभाषा । तया—स्वरात्पराभ्यां रहाभ्यां परः शषो द्विः स्यादित्यर्थः । पार्श्र्वम्, बर्ष्षम्, इति ।

पाषाणपिण्डिकान्यायेन त्वधोगमनं कुतो न स्यात् । "अग्रे रेफस्त्वधो याति पश्चाद्रेफस्य चोर्ध्वता । तुम्बिका शुष्ककाष्ठं च तैलं जलसमागमे ॥ यथोर्ध्वस्थानमायाति रेफस्यापीदृशी गतिः । स्वरं दृष्ट्वा त्वधो याति हसस्योपरि गच्छति । अवसाने विसर्गः स्यात् त्रिधा रेफस्य लक्षणम्" ॥ इति प्रमाणात् । यत्तु गौर्व्यत्रेत्यत्र द्वित्वं दीर्घाद्दात्रार्याणामित्यनेन विरुद्धमिति । तदसत् । दीर्घाद्दाचार्याणामित्यनेन दात्रमित्यादौ दीर्घादचः परस्य यपो द्वित्वनिषेधात् व्याख्यानान्तरस्य च भ्रान्तिविजृम्भितत्वात् ॥ ४ ॥

स्वर इत्यनुवर्तते । एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदान्तरानुवृत्तिर्ज्ञातव्या ॥ ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ॥

(च०) इतोऽग्रे स्वरसंधिं यावत् सर्वेष्वपि सूत्रेषु 'स्वरे' इति पदमनुवर्तते अन्वागच्छति । अनुक्तमपि ज्ञेयमित्यर्थः । यथा 'इ यं स्वरे' इत्यत्र स्वरे इति पदम् । तथा तत्र 'उ वम्' इत्यादिष्वपि प्राग्वत् ज्ञेयम् । एवममुना प्रकारेण अन्यत्र योगेष्वपि यत्र केवलसूत्राक्षरैः कार्यसिद्धिर्न भवति तत्र योगे सूत्रान्तरादन्यसूत्रात्पदान्तरस्य अन्यपदस्यानुवृत्तिर्ज्ञेया ग्रन्थस्य शास्त्रस्य भूयस्त्वभयात् प्राचुर्यभयात् सूत्रे तत्पदमस्माभिर्न लिख्यते ॥ केचित्तु आभिः सरस्वतीभिर्न लिख्यते स्म इति व्याकुर्वन्ति ॥ शेषं सुगमम् ॥

(प्र०) नास्माभिरिति । अस्मात्सूत्रादेतत्पदमनुवर्तत इति अस्माभिर्न लिख्यत इत्यर्थः। यद्वा आभिः सरस्वतीभिः तत्सूत्रे तत्तत्पदं न आलिख्यते स्मेति व्यवहितान्वयः ॥

उ वम् ॥ उवर्णो वत्वमापद्यते स्वरे परे (क) ।५। [ हसेऽर्हंहसः । 'झबे जबाः' ] मधु+अत्र मद्ध्वत्र । [मधु+अरिः मद्ध्वरिः । वधू+आसनं वद्ध्वासनम् ] ॥

(च०) सूत्रम्—'उ वम्' ॥ उ प्रथमैकवचनान्तम् । सांकेतिकम् । यद्वा—उश्च ऊश्च ऊ प्रथमैकवचनम् । 'नपुंसकस्य' इति ह्रस्वः । 'नपुंसका०'॥ वम् इति द्वितीयैकवचनान्तम्। 'अमूशसोः०' 'मोऽनुस्वारः' ॥ तपरकरणं विना कारग्रहणं च विना वर्ण एव गृह्यते । तेन उ इत्युक्ते उवर्णः उकार-ऊकाररूपो वत्वं वकारं प्राप्नोति स्वरे परे ॥ 'मधु अत्र अत्र' अत्र 'उ वम्' इति उकारस्य वकारः । 'हसेऽर्हंहसः' इति धकारस्य द्वित्वम् । 'झबे जबाः' इति पूर्वधकारस्य दकारः । 'स्वरहीनं०' मद्ध्वत्रेति सिद्धम् । मधु क्षौद्रमत्र वर्तते । एवं वधू आसनं वद्ध्वासनम् ॥ ५ ॥

ऋ रम् ॥ ऋवर्णो रत्वमापद्यते स्वरे परे ।६। पितृ+अर्थः पित्रर्थः(ख) । [ मातृ+अर्थः मात्रर्थः ] ॥

---

(क) उ वम् । स्वरे इति अनुवर्त्तते । उवर्णो वत्वमापद्यते स्वरे इति पूर्ववत् । उवर्ण इति किम् । कुम्भौ । स्वरे इति किम् । मधु हरति । मध्वत्र पृथग्योगः सुखप्रतिपत्त्यर्थः ।

(ख) ऋ रम् । स्वर इत्यनुवर्त्तते । ऋवर्णो रत्वमापद्यते स्वरे परे इत्यर्थः । पित्रर्थः । ऋ इति किम् । सुगाणौ । स्वरे इति किम् , कर्तृ पश्यन् ।

(च०) सूत्रम्—'ॠ रम्' ॥ ॠ प्रथमैकवचनान्तम् । सांकेतिकत्वात् सिलोपः । रं द्वितीयैकवचनान्तम् । 'अमूशसो०' 'मोऽनुस्वारः' ॥ ॠवर्णस्य रकारो भवति स्वरे परे । पितृ अग्रे अर्थः । 'ॠ रम्' 'हसेऽर्हसः' 'स्वरहीनं०' पित्रर्थः ॥ ६ ॥

**ॡ लम् ॥ ॡवर्णो लत्वमापद्यते स्वरे परे(क) ।७। ल+अनुबन्धः लनुबन्धः । [ ल+आकृतिः लाकृतिः ]॥**

(च०) सूत्रम्—'ॡ लम्' ॥ ॡ प्रथमैकवचनान्तम् । साङ्केतिकत्वात् ॥ लं द्वितीयैकवचनान्तम् । 'अमूशसो:०' 'मोऽनुस्वारः' ॥ ॡवर्णस्य लकारो भवति स्वरे परे ॥ ॡ अग्रे अनुबन्धः । 'ॡ लम्' 'स्वरहीनं०' लनुबन्धः ॥ ॡ ॡकार अनुबन्धः इत्संज्ञो यस्य धातोः स लनुबन्ध उच्यते । एवं ॡ अग्रे आकृतिः लाकृतिः । ॡ इत् ॡित् ॥ ७ ॥

( प्र० ) ॡ अनुबन्धो यस्य स लनुबन्धः । गम्ॡ गतावित्यादिः ॥ ७ ॥

**ए अय् ॥ एकारो अय् भवति स्वरे परे(ख) ।८। ने अनं नयनम् ॥**

(च०) सूत्रम्—'ए अय्' ॥ ए प्रथमैकवचनान्तम् । सांकेतिकम् । अय् प्रथमैकवचनान्तम् । 'हसे पः०' एकारस्य अय् भवति स्वरे परे । णीञ् प्रापणे णी । 'आदेः ष्णः स्नः' नी 'भावे युट्' 'युवोरनाकौ' इति युस्थाने अनः । गुणः । ने अनम् 'ए अय्' अनेन एकारस्य अय् भवति । 'स्वरहीनं०' 'अतोऽम्' 'अमूशसो:०' 'मोऽनुस्वारः' नयनमिति सिद्धम् ॥ ८ ॥

**ओ अव् ॥ ओकारो अव् भवति स्वरे परे(ग) ।९। भो अति भवति**

(च०) सूत्रम्—'ओ अव्' ॥ ओ प्रथमैकवचनान्तम् । सांकेतिकम् । अव् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ व्याख्या सुगमा । भो अग्रे अति । 'ओ अव्' भवति इति सिद्धम् ॥ ९ ॥

**क्वचित्स्वरवद्यकारः । यथाध्वपरिमाणे गो यूतिः गव्यूतिः ॥१०॥ अन्यत्र गवां मिश्रीभावो गोयूतिः(घ) ॥**

(च०) क्वचित्प्रयोगान्तरे यकारः स्वरवदवसेयः । स्वरेण तुल्यः स्वरवत् । स्वरे परे सति यत्कार्यं भवति तत् यकारे परेऽपि भवतीत्यर्थः । यथा अध्वपरिमाणे मार्गपरिमाणे वाच्ये सति गो अग्रे यूतिः अत्र यकारस्य स्वरत्वात् 'ओ अव्' 'स्वरहीनं०' गव्यूतिः क्रोशद्वयम् । अन्यत्र तु मार्गप्रमाणाभावे गवां मिश्रीभावः एकीभावे समूहीभावे गोयूतिरित्येव तिष्ठति सिद्धम् । एवं पितृ अग्रे यं पित्र्यमित्यपि ज्ञेयम् ॥ १० ॥

(प्र०) प्रसङ्गादाह—क्वचिदिति । गव्यूतिः स्यात्क्रोशयुगमित्यभिधानात् । क्वचिदि-

---

( क ) ॡ लम् । स्वरे इत्यनुवर्तते । ॡवर्णो लत्वमापद्यते स्वरे परे इत्यर्थः । लनुबन्धः । स्वरे किम् , ॡकारः । ॡ इति किम् , मरुतौ ।

( ख ) ए अय् । ए प्रथमान्तम् । स्वरइत्यनुवर्तते । स्वरे किम् , नेता । ऐ किम् , रयै ।

( ग ) ओ अव् । विभक्ती पूर्ववत् । स्वरइत्यनुवर्तते । स्वरे किम् , भोक्ता । ओ किम् , लावौ ।

( घ ) क्वचित्स्वरवद्यकारः । स्वरे परे यत्कार्यं भवति तद्यकारे परेऽपीत्यर्थः । गव्यूतिरित्यध्वनः परि-

त्युत्पत्तेर्गवां मिश्रीभावे गोयूतिरित्येव । अत एव शक्यार्थे क्षय्यः जय्यः अन्यत्र क्षेयं जेयं मनः तथा क्रयार्थं प्रसारितः क्रय्यः क्रयोऽन्यः। एवं गव्यनाव्यादयः प्रयोगतो ज्ञेयाः । नन्वनेनैव लव्यादिसिद्धावोदौतोर्यः स्वरवदित्यनारम्भणीयमिति चेत्सत्यम् । सिद्धे सत्यारभ्यमाणो विधिर्नियमायेति यादिनिमित्तयोरेवोदौतोरिति नियमार्थत्वात् । अत एव आ उयते ओ· यते इत्यादौ तदभावः ॥ १० ॥

ऐ आय् ॥ ऐकार आय् भवति स्वरे परे(क) ।११। नै अकः नायकः ॥

(च०) सूत्रम्—'ऐ आय्' ॥ ऐ प्रथमैकवचनान्तम् । सांकेतिकम् । आय् प्रथमैक· वचनान्तम् । 'हसे पः०' ॥ ऐकारः आय् भवति स्वरे परे । नै अग्रे अकः । 'ऐ आय्' 'स्वरहीनं०' नायकः ॥ ११ ॥

औ आव् ॥ औकार आव् भवति स्वरे परे(ख) ।१२। तौ इह ताविह ॥

(च०) सूत्रम्—'औ आव्' ॥ औ प्रथमैकवचनान्तम् । सांकेतिकम् । आव् प्रथ- मैकवचनान्तम् । 'हसे पः०' ॥ औकारः आव् भवति स्वरे परे । तौ अग्रे इह । 'औ आव्' 'स्वरहीनं०' ताविहेति सिद्धम् ॥ १२ ॥

यवोर्लोपश्च् वा पदान्ते ॥ पदान्ते स्थितानामयादीनां यकारव· कारयोर्लोपश् वा भवति (ग) ।१३। ते आगताः त आगताः तयागताः । तस्मै एतत् तस्मा एतत् तस्मायेतत् । पटो इह पट इह पटविह । तौ इमौ ता इमौ ताविमौ । तस्मै आसनं तस्मा आसनम् तस्मायासनम् । असौ

---

मःणे एवायम् । 'गव्यूतिः स्त्री क्रोशयुगमि'त्यमरः अध्वपरिमाणाभावे गोयूतिरित्येव । गवां मिश्रीभाव इत्यर्थः । ननु गव्यूतिरित्यत्र यवोर्लोपश्चित्यनेन वकारस्य लोपश्च कस्मान्न । उच्यते । व्यवस्थितविभाषाश्रयणात् संज्ञापूर्वकविधेरनित्यत्वाद्वा । क्वचिदित्युक्तेः शक्यार्थे क्षय्यः जय्यः, अन्यत्र क्षेयं जेयं मनः । तथा क्रयार्थं प्रसारितः क्रय्यः, क्रयोऽन्यः । एवं गव्यनाव्यादयः प्रयोगतो ज्ञेयाः। ननु क्वचित्स्वरवयकार इत्यनेनैव लव्या- दिसिद्धावोदौतोर्यः स्वरवदित्यनारम्भणीयामिति चेत्, सत्यम्, सिद्धे सत्यारभ्यमाणो विधिर्नियमायेति यादिनिमि त्तयोरेवोदौतोरिति नियमार्थत्वात् । अत एव आ उयते इत्यादौ तदभावः ।

( क ) ऐ आय् । स्वरइत्यनुवर्त्तते । स्वरे किम् , रैभारः । ऐ किम् , नयनम् ।

( ख ) औ आव् । स्वर इत्यनुवर्त्तते । स्वरे किम् , नौका । औ किम् , भवनम् । अत्राह वृत्तिकृ- त—ए ओ ऐ औ अयवायाव इति वक्तव्ये यत्पृथग्योगकरणं तत्क्वचित् स्वरतोऽन्यत्रापि विधानार्थम् । तेन क्वचित्स्वरवयकार इति ज्ञापितम् ।

( ग ) यवोर्लोपश्च् वा पदान्ते । अत्र पदान्त इत्येव च्छेदः । न स्वपदान्त इति । अन्यथा आग्रिम- सूत्रेऽप्यपदान्त इत्यनुवृत्तौ हरेर्भानोरित्यादिसिद्धौ कस्येति सूत्रस्य व्यर्थत्वापत्तेः । पदस्य चरमावयवः पदान्त इति । अन्तशब्दोऽवयववाची । पदं तु विभक्त्यन्तमेव, पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेः । अनन्तरोक्तत्वाद- यादीनामेव यकारवकारौ गृह्यते इत्याशयेनाह—अयादीनामिति । पूर्वसूत्रेभ्योऽय् अव् आय् आव् इत्यनु- वृत्तानुवृत्तं च षष्ठ्या विपरिणम्यते। अयादयश्चैतत्सूत्रभाविता एव गृह्यन्ते । तेन वृक्षं व्रश्चतीति वेतीति वा वृक्ष- वाः वृक्षवीः । वागतिगन्धनयोः, वीगतिव्याप्तिप्रजननादौ । आभ्यां क्विप् । वृक्षवी वृक्षव्यं वा करोतीति णिङ्- करणे इति णिः । टिलोपे च सति स धातुरिति धातुत्वं ततः क्विपि णिलोपे च वृक्षव् इति भवति । वृक्षविहे यत्र लोपाभावः । त आगता इत्यादौ लोपश्चि सति पुनः सन्धिमाशंक्य वारयति—

इन्दुः असा इन्दुः असाविन्दुः ॥ लोपाशि पुनर्न संधिः(क) ॥ छन्दसि तु भवति । हे सखे इवि हे सखेति हे सखयिति ॥

(च०) सूत्रम्—'य्वोर्लोपश् वा पदान्ते' ॥ य् च व् च य्वौ तयोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'सोर्विसर्गः' । लोपश् प्रथमैकवचनान्तम् । 'हसे पः०' । वा तृतीयैकवचनान्तम् । 'अव्यया०' ॥ पदान्ते सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम्—पदान्ते ॥ आदिशब्दात् 'ए अय्' 'ऐ आय्' 'ओ अव्' 'औ आव्' एभिः सूत्रैर्जातानामयादीनां संबन्धिनोर्यकारवकारयोर्वा लोपश् भवति । ते अग्रे आगताः । उभयत्रापि 'ए अय्' एकत्र यकारलोपः । अन्यत्र 'स्वरहीनं०' । ते आगताः तयागताः त आगताः ॥ पटो इह पटविह पट इह । 'ओ अव्' शेषं प्राग्वत् ॥ एवं तस्मै आसनं तस्मायासनं तस्मा आसनं । तस्मै इदं तस्मायिदं तस्मा इदम् ॥ असौ इन्दुः असाविन्दुः असा इन्दुः । तौ इमौ ताविमौ ता इमौ ॥ ननु 'त आगताः' अत्र 'सवर्णे०' तथा 'पट इहे'त्यत्र 'अ इ ए' इति संधिः कथं न क्रियते ? तत्राह—लोपशीति । लोपशि कृते पुनः पूर्वापरवर्णयोर्मिथो घटनस्वरूपः संधिः कार्यान्तरसाधनं च न भवति । यथा त आगताः । राजभ्यामत्र 'अझि' इति आ न भवति । नन्युक्तमनित्यमिति क्वापि लोपशि कृतेऽपि संधिर्भवति । यद्वा 'छन्दसि तु भवती'ति तुशब्ददर्शनात् कुत्रचिल्लौकिकोदाहरणेऽपि लोपशि कृते संधिर्भवति । यथा दामोदरः, राजाश्वः पद्माग्निः, दण्डिवु, इत्यादिषु कार्यान्तरसंघातरूपश्च संधिर्भवति ॥ पुनर्विशेषमाह—छन्दसि वेदे लोपशि कृतेऽपि संधिर्भवति । यथा हे सखे अग्रे इति । 'ए अय्' 'य्वोर्लोपश् वा०' इति यकारलोपः । छान्दसिकत्वान्न संधिनिषेधः । तेन 'अ इ ए' ॥ १३ ॥

( प्र० ) य्वोः । पूर्वसूत्रेभ्योऽयादीननुवर्त्य व्याचष्टे अयादीनामिति । ततश्चैतद्भावितानामित्यर्थात् वृक्षं वृश्चतीति वृक्षव्रट् तमाचष्टे इत्यर्थे णिचि टिलोपे वृक्षयति ततः क्विपि णिलोपे वृक्षव् इहेत्यादौ लोपाभावः।लोपशीति न पूर्वकार्यमित्यर्थः । दण्डिश्वित्यादावुत्तरकार्यं भवत्येव । यद्यपि राजभिरित्यत्रोत्तरकार्यं तथापि तस्मिन्सति पूर्वकार्यस्य भावित्वात्तदभावः । वक्तव्यत्वात्पुनरित्यधिकोपादानस्याधिकार्यत्वाद्वा राजाश्व इत्यादौ सन्धिः । यत्तु सन्धिग्रहणात्सन्धिसूत्रेणैव लोपशि सन्धिप्रतिषेधाद्राजाश्व इत्यादौ तदभावात्सन्धिर्भवत्येवेति । तदसत् । राजभिरित्यादौ तत्प्रसङ्गात् । वस्तुतस्तु पुनःपदोपादानाद् यन्निमित्तकः सन्धिर्वृत्तस्तन्निमित्तकः पुनः सन्धिर्नेत्यर्थः ॥ १३ ॥

एदोतोऽतः ॥ पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति(ख) ।१४। ते अत्र तेऽत्र । पटो अत्र पटोऽत्र ॥

---

( क ) लोपशि पुनर्न सन्धिरिति । छन्दसि तु भवतीति तु शब्दात्कुत्रचिल्लोकेऽपि लोपशि कृते सन्धिर्भवति । यथा दामोदरः, राजाश्व पद्माग्निरिति । चन्द्रिकायां तु 'लोपशि पुनर्नसन्धिः, न लोपशि तु भवति, इयादेरिति निर्देशात् तेन दामोदरः राजाश्व' इत्यादेः सिद्धिमाह । गीतायामप्याह—'हे कृष्ण हे यादव हसखेति इति । पदान्ते किम् , नयनम् अयादीनां किम् , दध्यानय, मध्वत्र ।

( ख ) एदोतोऽतः । अत्राह वृत्तिकृत्—एदोतोऽत इति तपरकरणं दीर्घव्यक्तेरेव निर्देशार्थम् , तेन

(च०) सूत्रम्—'एदोतोऽतः' ॥ एच ओच एदोत् पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । एदोतः अग्रे अतः । मध्ये—'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' इत्यकारलोपः । अतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' 'एदोतोऽतः' ॥ तपरकरणमसंदेहोच्चारणार्थम् । अत इत्यत्र तपरकरणं तावन्मात्रग्रहणार्थम् । पदान्ते स्थितादेकारात् ओकारात् परस्याकारस्य लोपो भवति । ते अग्रे अत्र । पदान्ते स्थितौ यावेकारौकारौ ताभ्यां परस्याकारस्य लोपो भवति । चम्पकपटवासन्यायादवग्रहाकारस्तिष्ठति । तेऽत्र। एवं पटो अत्र पटोऽत्र [ वर्तते ] इति सिद्धम् । 'ए अय्' 'ओ अव्' इति तु पदमध्ये भवति । अत्र 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति न्यायोऽङ्गीकर्तव्यस्तेन 'ए अय्' 'ओ अव्' इति न भवति ॥ १४ ॥

( प्र० ) एदोतोऽत इति । तपरकरणं सुखोच्चारणार्थम्, अत इत्यत्र तु तावन्मात्रार्थम् । वक्ष्यमाणसामान्यविशेषन्यायेनास्य विशेषत्वात्परत्वान्नित्यत्वाच्च नायवौ ॥१४॥

**सवर्णे दीर्घः सह** ॥ सवर्णस्य सवर्णे परे सह दीर्घो भवति(क)॥ १५॥ श्रद्धा अत्र श्रद्धात्र । दधि इह दधीह । मधु उदकं मधूदकम् । भानु उदयः भानूदयः । पितृ ऋणं पितॄणम् ॥

( च० ) सूत्रम्—'सवर्णे दीर्घः०' ॥ सवर्णे इति सप्तम्यन्तम् । 'अ इ ए' सदृशो वर्णः सवर्णः दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्वि०' । सह प्रथमैकवचनान्तम् । सू । 'अव्यया०' ॥ पूर्वापरयोः सदृशस्वरयोर्मिलनेनाद्यो दीर्घो भवति । श्रद्धा अत्र श्रद्धात्र ॥ यदुक्तम्—

'क्रमेण वैपरीत्येन गुरूणां गुरुभिः सह ।
लघूनां लघुभिः सार्धं गुरूणां लघुभिः सह ॥
लघूनां गुरुभिः सार्धं चतुर्धेति सवर्णता' ॥ १ ॥
अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ।
पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥ २ ॥

---

आगच्छाग्रे ३ अत्र तिष्ठेत्यादौ न स्पष्टार्थं वा पूर्वत्र 'प्लुतः' इत्यनेन सन्धिनिषेधात् । माधवस्तु क्वचित् प्लुतस्यापि संधिर्भवतीति ज्ञापनार्थं तत् । तेन सुश्लोक ३ इति सुश्लोकेतीत्यादिसिद्धिमित्याह । पदान्ते किम्, नयनम्, भवनम् ।एदोतः किम् , तस्मै अन्नं, तौ अत्र। अतः किम्, ते आगताः। अत्र वेत्यनुवर्तते स च व्यवस्थितविकल्पः । तेन पदान्ते गोरतो वा लोपश्च । गो अग्रम्, गोऽग्रम् । नहि देवदत्तस्य हंतरि हते पुनर्देवदत्तस्योज्जीवनं भवतीति न्यायादवादेशस्य लोपश्च। बाधे लोपशोऽप्यनेन बाधे पुनरवादेशाप्रवृत्तिः । गो अग्रमिति । एदोतोत इत्यत्रोत्तरदले दकारानिर्देशः प्रत्ययलक्षणेन पूर्वभागस्य पदत्वं नाचरस्येति ज्ञापनार्थं तेन परमदण्डिनौ परमगोदुहौ परमवाचावित्यादौ द्वित्वकत्वाद्यभावः सिद्धः ।

( क ) सवर्णे दीर्घः सह । सवर्णशब्दस्य ससंबन्धिकत्वात्सवर्णादित्यस्य लाभः । सवर्णात्सवर्णे परे सह दीर्घो भवति इत्यर्थः । वेत्यस्यानुवृत्तेः समानानामिव, तेन हरये हरे एहीत्यादौ न । ननु विना सहेत्यनेन सहशब्दयोगे तृतीया किं न स्यात ? उच्यते । उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्युक्तत्वात सहशब्दयोगे विधीयमाना तृतीयोपपदविभक्तिः सवर्णे इति सप्तमी तु भावे सामीपिकाधारे वा विहिता कारकविभक्तिः क्रियान्वयित्वात क्रियापदं पर्य्याहृतं भवति नायोगे। दीर्घ इत्यत्राप्युक्ते इत्यनेन प्रथमापि कारकविभक्तिः । सवर्णे किम्, मध्वत्र, दधीह, भानूदयः, इत्यादौ इकारोकारादेर्यकारवकारप्राप्तिः सवर्णे दीर्घ इत्यस्य प्राप्तिश्चास्ति । तयोः कतरस्य भाव्यमित्यत आह—सामान्य शास्त्रत इति । बहुव्यापकं सामा-

दधि अग्रे इह दधीह । भानु अग्रे उदयः भानूदयः । पितृ अग्रे ऋणं पितॄणम् । दण्ड अग्रे अग्रं दण्डाग्रम् ॥ १९ ॥

( प्र० ) सवर्णे इति । सवर्णस्यैव सवर्णपरत्वमिति सवर्णस्येत्युक्तम् । सहेति पूर्वपरयोरेकादेशसम्पादनार्थम् । दधीहेत्यादौ यत्वस्यापि प्राप्तावाह— ॥ १९ ॥

सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ १ ॥

( च० ) ननु दधि इह अत्र कथम् 'इ यं स्वरे' इति यत्वं न भवतीत्याह—सामान्येति । नूनं निश्चितं सामान्यशास्त्रतः सामान्यसूत्रात् विशेषो विशेषशास्त्रं विशेषसूत्रं बलवान् भवेत् । तत्र बहुव्यापकं सामान्यम् । अल्पव्यापको विशेषः । दधि इह इत्यत्र 'इ यं स्वरे' इति सामान्यसूत्रं स्वराणां बहुत्वात् । 'सवर्णे दीर्घः' इति विशेषसूत्रं तस्य सवर्णस्यैकत्वात् । पक्षान्तरमाह—परेणेत्यादि । वा अथवा इह व्याकरणे प्रायशो बाहुल्येन बहुषु स्थानेषु परेण अग्रेतनसूत्रेण पूर्वसूत्रस्य बाधो निषेधो दृश्यताम् । यथा 'इ यं स्वरे' इति सूत्रं प्राक् प्रतिपादितं तस्य हि 'सवर्णे दीर्घः०' इति सूत्रेण बाधः । तदेवाह—प्रायशो बाहुल्येनेह व्याकरणे एवं दृश्यताम् इति । अनेनोत्सर्गापवादावुक्तौ । ततः उत्सर्गापवादयोरपवादविधिर्बलवानिति न्यायो दर्शितः । एकस्मिन्नेवोदाहरणे सूत्रद्वयसम्भवे सामान्यविशेषयोर्यद्विशेषसूत्रं तल्लगति । पूर्वोक्तपरोक्तयोः सूत्रयोर्यत्परोक्तं सूत्रं तत्प्राप्नोति न तु पूर्वोक्तमिति भावः । एवं भानु उदयः अत्र 'उ वम्' इति सामान्यम्, 'सवर्णे दीर्घः०' इति विशेषः । एवमन्यत्रापि ॥ श्लोकार्थोऽयम् ॥ १ ॥

( प्र० ) सामान्येति । बहुव्यापकं सामान्यमल्पव्यापको विशेषः। शासनात् शास्त्रं सूत्रम्। उत्सर्गापवादयोरपवादो बलवानित्यर्थः । व्यक्तिपदार्थाङ्गीकारे प्रत्येकवाक्यपरिसमाप्तेर्विशेषत्वाविशेषात्पक्षान्तरम् । परेण पूर्वबाधो वेति परिहृत्यापवादविषयं तत उत्सर्गः प्रवर्तत इति न्यायेन क्षत्रिसार्द्धनिषेधवत्तत्र वाक्ये कल्पनैव नेति भावः । सौत्रक्रमात्पौर्वापर्यम् । प्रायश इति । परशब्दस्येष्टवाचित्वात्पूर्वेणापि क्वचित्परबाध इति द्योत्यते । च्योर्लोपश्चेत्यतो मण्डूकप्लुत्या वानुवृत्तेस्तस्य च निपातत्वेनानेकार्थत्वाद्धोतृ ऋकार इत्यादौ ऋकारस्य ऋकारे ऋकारो वा, पक्षे प्रकृतिभावोऽपि, वापक्षे दीर्घश्चेति रूपत्रयम् । होतृ ऌकार इत्यादौ ऋकारऌकारयोर्वा । ऌपक्षे ऋऌवर्णयोः सवर्णत्वात् दीर्घॡकाराभावादिमते दीर्घऋ इत्यादि ॥ १ ॥

अ इ ए ॥ अवर्णे इवर्णे परे सह ए भवति ॥१६॥ तव इदं तवेदम् । मम इदं ममेदम् ॥

( च० ) सूत्रम्—'अ इ ए' ॥ अ प्रथमैकवचनान्तम् । सांकेतिकम् । इ सप्तम्येकवचनान्तम् । सांकेतिकम् । ए प्रथमैकवचनान्तम् । सांकेतिकम् । तव अग्रे इदम् 'अ इ ए' अवर्णे इवर्णे परे सह उभयोर्योगेन ए भवति । तव इदं तवेदम् इत्युदाहरणम् । गङ्गा इयं गङ्गेयम् ॥ १६ ॥

---

न्य मल्पव्यापको विशेषः । श्रद्धाऽनेत्यत्र पर्यन्यवल्लक्षणप्रवृत्तिरिति दीर्घस्यापि दीर्घः । अत्राह-लोकेशकरः । 'यत्तु—'अदीर्घो दीर्घतां याति' इत्यादि कलापानुसारिभिरुक्तं तद्भाष्यविरोधादुपेक्ष्यमिति ।

[ सर्वविधिभ्यो लोपविधिर्बलवान् ॥ ]

**हलादेरीषादौ टेर्लोपो वक्तव्यः(क) ॥१७॥** हल ईषा हलीषा । लाङ्गल ईषा लाङ्गलीषा । मनस् ईषा मनीषा । शक अन्धु शकन्धुः । कर्क अन्धुः कर्कन्धुः । कुल अटा कुलटा । सीमन् अन्त सीमन्तः केशवेशे । अन्यत्र सीमान्तः । पतत् अञ्जलिः पतञ्जलिः । सार अङ्गः सारङ्गः पशुपक्षिणोः । अन्यत्र साराङ्गः । अद्य ओम् अद्योम् । शिव आ इहि शिवेहि ॥

'हलीषा लाङ्गलीषा च मनीषाद्यों तथैव च ।
शकन्धुरथ कर्कन्धुः सीमन्तः कुलटा तथा ॥
पतञ्जलिश्च सारङ्ग एते प्रोक्ता हलादयः ॥' १ ॥

( च० ) अत्रापि विशेषमाह—हलादे० । अत्र हल आदिर्यस्य स हलादिः तस्य हलादेः षष्ठ्येकवचनान्तम् । ङिति 'ङसिङसोरस्य' इत्यकारलोपः 'स्रोर्विसर्गः' । ईषा आदिर्यस्य स ईषादिः तस्मिन् ईषादौ । सप्तम्येकवचनान्तम् । ङि 'ङे रौ ङित्' औ ङित्त्वाट्टिलोपः । 'स्वरहीनं०' । टेः षष्ठ्येकवचनान्तम् । अस् । 'ङिति' 'ङसिङसोः०' 'स्रोर्विसर्गः' 'नामिनो रः' 'राद्यपो द्विः' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः । वक्तव्यः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ हलादेः शब्दगणस्य ईषादौ गणे परे टेः 'अन्त्यस्वरादिष्टिः' इति टेर्लोपो वक्तव्यः । हल अग्रे ईषा अनेन टेर्लोपः । 'स्वरहीनं०' हलीषा । आदिशब्दान्मनस् ईषा । मनीषा । लाङ्गल ईषा लाङ्गलीषा । अद्य अग्रे ओम् अद्योम् । शकः अन्धुः शकन्धुः । कुल अटा कुलटा । सीमन् अन्तः सीमन्तः । पतत् अञ्जलिः पतञ्जलिः । सार अङ्गः सारङ्गः । इत्यादयोऽपि तथैव ज्ञेयाः ॥ १७ ॥

( प्र० ) हलादेरिति । वक्तव्यत्वात्क्वचिद्विकल्पे क्वचिच्च नित्यमिति ततश्चावर्णान्तोपसर्गस्यैङादौ धातौ टिलोपात्प्रेजते प्रोषतीत्यादि । एङादौ सुब्धातौ वेति । उपेडकीयति, उपैडकीयति, प्रोघीयति, प्रौघीयतीत्यादि । शकन्धुः । कर्कन्धुः । कुलटा । सीमन्तश्च केश-

---

(क) हलादेरीषादौ टेर्लोपो वक्तव्यः । हलादेर्टेर्लोपः स्यादीषादौ परे । हलादेरीषादेश्च आकृतिगणत्वं बोध्यम् । हलस्य ईषा । हलीषा । ईषा लाङ्गलदण्डः स्यादित्यमरः । लाङ्गलस्य ईषा, लाङ्गलीषा । मनसः ईषा, मनीषा । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । शकानां देशविशेषाणामन्धुः कूपः शकन्धुः । कर्काणां राज्ञामन्धुः, कर्कन्धुः । अटतीति अटा पचादित्वादः । कुलस्याटा, कुलटा । यदा तु कुलमटतीति विग्रहः, तदा कर्मण्यणित्यण् प्रत्यय ईपि च कुलटीति स्यात् । केशवेशेऽर्थे सीमन्तः अन्यत्र सीमान्तः । पूर्वत्र विग्रहस्थले सवर्णे दीर्घः । उत्तरतः नाम्नो नां लोपशिति नलोपेकृते दीर्घश्च । पशुपक्षिणोः सारङ्गः । अन्यस्मिन् अर्थे साराणि प्रधानान्यङ्गानि यस्य स साराङ्गः । टिलोपोन । वक्तव्यत्वात् क्वाचिदविकल्पेन क्वचिच्च नित्यमिति । ततश्च 'एदोदादौ धातौ' अवर्णान्तोपसर्गस्य लोप इति । तेन प्रेजते । उपोषति । इत्यादि । एवञ्च एदोदादौ नामधातौ वा लोपः । तेन उपेडकीयति, उपैडकीयति । प्रोघीयति,—प्रौघीयति इत्यादि । तत्रापवादमाह—एत्येधत्योर्न । उपैति । उपैधते । प्रस्यैष्यैषयोर्न । एषः–एष्यः । प्रैषः–प्रष्यः । प्रस्य किम्, अपेषः । 'एवेऽनवधारणे' अयेव । अवधारणे त्वपैवेति ।

चेन्न एव । अन्यत्र सीमान्तः । पतञ्जलिः सारङ्ग इत्यादौ नित्यमेव । अद्येत्यादावनवधारणार्थे एव । अवधारणे तु अद्यैव गच्छत्वथ ॥

ओमिति । शिवायों नमः । शिव आ इहीत्यत्र धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वादादावेकारे कृते 'यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरव्यपदेशम्' इत्याद्यनाङेकादेशस्यान्तवद्भावादव्ययवर्णान्तस्य टिलोपाच्छिवेहीत्यादि तथापठत् इतीत्यादावद्विरुक्तस्यानेकस्वरस्याव्यक्तानुकरणस्यादन्तस्य इतष्टिलोपात्पटितीत्यादि । द्विरुक्तस्य त्वस्य पृषोदरादिवद्विकल्पेन वर्णनाशात्पटत्पटेति—पटत्पटदितीत्यादि । एवमन्यत्रापि प्रयोगतो ज्ञेयम् ॥ १७ ॥

उ ओ ॥ अवर्ण उवर्णे परे सह ओ भवति(क) ॥१८॥ तव उदकम् तवोदकम् । गङ्गा उदकं गङ्गोदकम् ॥

( च० ) सूत्रम्—'उ ओ' ॥ उ सप्तम्येकवचनान्तम् । साङ्केतिकम् । ओ प्रथमैकवचनान्तम् । वृत्तिः स्पष्टा । तव उदकं तवोदकम् । गङ्गा उदकं गङ्गोदकम् ॥ १८ ॥

ऋ अर् ॥ अवर्ण ऋवर्णे परे सह अर् भवति(ख) । तव ऋद्धिः । तवर्द्धिः । 'राद्यपो द्विः' ॥ १९ ॥

( च० ) सूत्रम्—'ऋ अर्' ॥ ऋ सप्तम्येकवचनान्तम् । सांकेतिकम् । अर् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ अर्थो वृत्तितो ज्ञेयः । तव अग्रे ऋद्धिः । 'ऋ अर्' 'जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम्' । तवर्द्धिः इति सिद्धम् ॥ १९ ॥

क्वचिदार् ॥ अवर्ण ऋवर्णे परे सह क्वचिदार् भवति(ग) । ऋण ऋणं ऋणार्णम् ॥ ऋते च तृतीयासमासे एवाऽऽर् ॥२०॥ शीतेन ऋतः शीत ऋतः शीतार्तः ॥ अन्यत्र परम ऋतः परमर्तः ॥

( च० ) सूत्रम्—'क्वचिदार्' ॥ क्वचित् सप्तम्येकवचनान्तम् । 'अव्यया०' । आर् प्रथमैकवचनान्तम् । 'हसे पः०' 'चपा अबे०' ॥ वृत्तेरर्थो ज्ञेयः । तृतीयासमासान्ते पदे इत्यर्थः ॥ क्वचित्प्रयोगान्तरे अवर्ण ऋवर्णे परे सति सह उभयोर्योगेन आर् भवति । ऋण ऋणम् । 'क्वचिदार्' 'राद्यपो द्विः' 'स्वरहीनं०' 'जलतुम्बिका०' ऋणार्णम् । एवं शीता-

---

( क ) उ ओ । गङ्गोदकमिति । षष्ठीतत्पुरुषे पूर्वपरयोरोकारः ।

( ख ) ऋ अर् । तवर्द्धिरिति । अकार ऋकारयोरर् । रामाश्रमस्तु-हसात्परस्य झसस्य लोपो वा सवर्णे झसे इति सूत्रं कृत्वा पक्षे तवर्धिरित्युदाहरति ।

( ग ) क्वचिदार । क्वचित् शिष्टप्रयोगे अवर्ण ऋवर्णे परे सह आर् भवतीत्यर्थः । तथाहि—प्र वत्सतर, कम्बल, वसन, ऋण, दशन , एषामृणे परे सहाऽर् भवति । तेन प्रार्णम् । वत्सतरार्णम् , कम्बलार्णम् , वसनार्णम् , ऋणार्णम्, दशार्णमित्यादि । वत्सार्णमिति केचित्पठन्ति । परन्तु वत्सशब्दो भाष्ये नोक्तः । एवमवर्णान्तोपसर्गस्य ऋकारादौ धातौ परे आर् भवति । तेन-प्रार्छति, उपार्छति, इत्यादि । तथा तृतीयासमासे वाच्ये ऋते परे सह चार् भवति । तेन—शीतार्तः, दुःखार्तः इत्यादि । तृतीयासमासे किम्, परमर्तः । किंच—ऋदादौ नामधातौ वार् भवति । तेन-प्रार्षभीयति, प्रर्षभीयति । लृकारादावपि सावर्ण्यात् प्राल्कारीयति-प्रल्कारीयतीत्यादि सिध्यति ।

र्त्तः । दुःखार्त्तः । वसनार्णम् । कम्बलार्णम् । दशार्णम् । वत्सतरार्णम् । प्रार्णम् ॥२०॥

( प्र० ) क्वचिदिति । सुखार्त इत्यादौ तृतीयासमासे वाच्ये ऋते परे तथा प्रार्णमित्यादौ प्र वत्सतर कम्बल वसन ऋण दशन् एषामृणे परे एवमुपार्च्छति प्रार्च्छतीत्यादौ ऋकारादौ धातावर्णान्तोपसर्गस्य तस्मिन्छधातौ स्वस्य वेति । उपर्षभीयति–उपार्षभीयति । तथा ऌकारादावपि सावर्ण्याद्वाल् । प्राल्कारीयति प्रल्कारीयति । इत्यादि ज्ञेयम् ॥ २० ॥

**ऌ अल् ॥ अवर्ण ऌवर्णे परे सह अल् भवति(क) ॥ २१ ॥ तव ऌकारः तवल्कारः ॥ रलयोः सावर्ण्यं वा वक्तव्यम् । परि अङ्कः । पर्य्यङ्कः । पल्य्यङ्कः ॥**

( च० ) सूत्रम्—'ऌ अल्' ॥ ऌ सप्तम्येकवचनान्तम् । सांकेतिकम् । अल् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ वृत्तेरर्थो ज्ञेयः । तव अग्रे ऌकारः 'ऌ अल्' 'राचपो द्विः' स्वरहीनं०' तवल्कारः ॥ नन्वत्र लकारोऽस्ति रकारो नास्ति 'राचपो०' इति कथं लगति तत्राह–रलयोरिति । रकारलकारयोः सावर्ण्यं सदृशत्वं वक्तव्यम् । तेन 'राचपो द्विः' इति ककारस्य द्वित्वे तवल्कार इति सिद्धम् । रकारलकारयोः उपचाराद्वा ग्रहणाद्वा वेदे ऋकाऌकारयोरपि सावर्ण्यं वक्तव्यम् । होत्ऌकारः । सवर्णे होतॄकारः । अत्र ऋऌवर्णयोरसवर्णत्वेऽपि 'रलयोर्—'इत्यनेन सावर्ण्यम्। 'ऋऌवर्णस्थानिनोः प्रायः सावर्ण्यं रलयोर्भवेत्। तथा वेदे सवर्णत्वं स्यादृकारऌकारयोः' । परि अग्रे अङ्कः पर्य्यङ्कः । एवं पलि अग्रे अङ्कः पल्य्यङ्कः । उभयत्रापि 'इ यं स्वरे' 'राचपो द्विः' 'स्वरहीनं०' सिद्धम् ॥ २१ ॥

( प्र० ) रलयोरिति । सावर्ण्यविधानं तवल्कार इत्यादौ लात्परस्यापि यपो द्वित्वाद्यर्थम् । नचैवं वलेनेत्यादावपि राश्रितं णत्वमापद्यतेति वाच्यम् । वक्तव्यत्वेन सन्धिकार्य एवानयोः सावर्ण्यविधानात् ॥ २१ ॥

**ए ऐ ऐ ॥ अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति(ख) ॥२२॥ तव एषा तवैषा । तव ऐश्वर्यं तवैश्वर्यम् ॥**

( च० ) सूत्रम्—'ए ऐ ऐ' ॥ ए सप्तम्येकवचनान्तम् । सांकेतिकम् । ऐ सप्तम्येकवचनम्—सांकेतिकम् । ऐ प्रथमैकवचनान्तम् । सांकेतिकम् ॥ वृत्तिः कण्ठ्या । उदाहरणे तव अग्रे एषा 'ए ऐ ऐ' तवैषा । तव अग्रे ऐश्वर्यम् 'ए ऐ ऐ' तवैश्वर्यम्। इति सिद्धम्॥२२॥

**ओ औ औ ॥ अवर्ण ओकारे औकारे च परे सह औकारो भवति(ग) ॥ २३ ॥ तव ओदनः तवौदनः । तव औन्नत्यं तवौन्नत्यम् ॥**

---

( क ) ऌ अल् । अ इत्यनुवर्तते । अवर्णो ऌवर्णे परे सह अल् । तवल्कारः । अत्रापि 'क्वचिद्वाल्' इति वक्तव्यमित्युक्तं तेन प्राल्कारीयतीत्यादि सिध्यति ।

( ख ) ए ऐ ऐ । अवर्णो एकारे ऐकारे च परे सह ऐकारो भवतीत्यर्थः । तवैषा इत्येकारस्योदाहरणम् । तवैश्वर्य्यमित्यैकारस्योदाहरणम् । उभयत्राप्यैत्वम् ।

( ग ) ओ औ औ । अवर्णादोकारे औकारे च परे औकारो भवतीत्यर्थः । तवौदनम् । तवौन्नत्यमिति क्रमेणोदाहरणम् ।

( च० ) सूत्रम्—'ओ औ औ' ॥ ओ सप्तम्येकवचनान्तम् । साङ्केतिकम् । औ सप्तम्येकवचनान्तम् । औ प्रथमैकवचनान्तम् । सांकेतिकम् ॥ वृत्तिः कण्ठ्या । उदाहरणम् । तव ओदनम् । 'ओ औ औ' तवौदनम् । तत्र अग्रे औन्नत्यम् । तवौन्नत्यम् । गङ्गा अग्रे ओघः गङ्गौघः ॥ २३ ॥

**ओष्ठोत्वोर्वा** ॥ अवर्णस्य ओष्ठोत्वोः परयोः समासे सति सह वा ओ भवति(क) ॥ २४ ॥ बिम्ब ओष्ठः बिम्बोष्ठः बिम्बौष्ठः । स्थूल ओतुः स्थूलोतुः स्थूलौतुः । ॥ समासे किम् ? तव ओष्ठः तवौष्ठः ॥

(च०) सूत्रम्—'ओष्ठोत्वोर्वा' ॥ ओष्ठश्च ओतुश्च ओष्ठोतू तयोः ओष्ठोत्वोः सप्तमीद्विवचनान्तम् । 'उ वम्' 'स्वरहीनं०' । वा तृतीयैकवचनान्तम्। 'अव्यया०' । ओ प्रथमैकवचनान्तम् । सांकेतिकम् । 'ओ औ औ' ॥ अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः ओष्ठौत्वोः ओकारेण सह वा अकारस्य ओकारो भवति समासे सति ॥ पक्षे 'ओ औ औ' ॥ यद्वा—'ओष्ठोत्वोर्वा' इति सूत्रम् । तदा ओष्ठोत्वोः परयोः अवर्णस्य वा लोपो भवतीति व्याख्या ॥ बिम्ब अग्रे ओष्ठः । बिम्बाकारावोष्ठौ यस्य स बिम्बौष्ठः । स्त्री चेत् बिम्बोष्ठी बिम्बौष्ठी वा । अनेन एकत्र अकारलोपः । 'स्वरहीनं०' । द्वितीये 'ओ औ औ' तथैव स्थूलश्चासावोतुश्च स्थूलोतुः स्थूलौतुर्वा । स्थूलमार्जार इत्यर्थः । समास इति किम् । हे छात्र ओष्ठं पश्य छात्रौष्ठं पश्येत्येकमेव रूपम् । एवं तवौष्ठः ॥ २४ ॥

( प्र० ) ओष्ठोत्वोरिति । वा ओ इति छेदः । यद्यपि द्वन्द्वे घीतिओतः पूर्वनिपातप्राप्तिस्तथापीन्द्राग्नीवत् घ्यन्तादजाद्यदन्तयोर्ध्यन्तं परमिति परत्वम् । वाशब्दात्समासे एव नेह । तवौष्ठः ॥ २४ ॥

**गवादेरवर्णागमोऽक्षादौ वक्तव्यः** ॥ २५ ॥ गो अक्षः गवाक्षः । गो इन्द्रः गवेन्द्रः । गो अग्रं गवाग्रम् । गो अजिनं गवाजिनम् । स्व ईरम् स्वैरम् । स्व ईरिणी स्वैरिणी । अक्ष ऊहिनी अक्षौहिणी सेना । प्र ऊढः प्रौढः ॥ इति गवादयः ॥ अविहितलक्षणप्रयोगो गवादौ द्रष्टव्यः ॥

गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम् ।
स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः ॥ १ ॥

इति स्वरसन्धिप्रक्रिया ॥ ३ ॥

---

( क ) ओष्ठोत्वोर्वा समासे । समासे सति अवर्णस्य ओष्ठोत्वोः शब्दयोः परयोः ओष्ठोत्वोः ओकारेण सह वा अकारस्य ओकारो भवतीत्यर्थः । बिम्बवद् ओष्ठौ यस्य स बिम्बौष्ठः–बिम्बोष्ठः । स्थूलश्चासौ ओतुश्च स्थूलौतुः—स्थूलोतुः । एकस्मिन् समासे इदं प्रवर्त्तते । तेनेह न । हे वृषलमुतौष्ठव्रणस्ते । इति अत्र स्वराद्यदन्तत्वादोष्ठशब्दस्य पूर्वनिपाते न्याय्ये स्वराद्यदन्तमित्यस्यानित्यत्वज्ञापनायेदम् । समासाभावे तवौष्ठ इति ।

इति श्रीबिम्बाधर करचरणसेवकश्रीनवकिशोरशास्त्रिनिर्मितायां
मनोरमाख्यविवृत्यां स्वरसंधिप्रक्रिया समाप्ता ।

(च०) गो आदिर्यस्य स गवादिस्तस्य गवादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' स्रोर्विसर्गः' गवादेः ॥ अवर्णस्य आगमः अवर्णागमः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ अक्ष आदिर्यस्य सः अक्षादिस्तस्मिन् अक्षादौ सप्तम्येकवचनान्तम् । 'ङेरै ङित्' ङित्त्वाट्टिलोपः । 'स्वरहीनं०' । वक्तव्यः प्रथमैकवचनान्तम् । 'स्रोर्विसर्ग.' सिद्धम् । अत्र अकारागमे एव रूपसिद्धिः । वर्णग्रहणं तु चिन्त्यम् । अश्चासौ वर्णश्च अवर्णः अकारवर्ण एव इत्यर्थः । गो अक्षः । अवर्णागमः । 'ओ अव्' 'स्वरहीनं' 'सवर्णे दीर्घ०' ॥ गवाजिनं गोचर्म । प्र अग्रे ऊढः । अवर्णागमस्य वैयर्थ्यान्न 'सवर्णे दीर्घः सह' किन्तु 'उ ओ' 'ओ औ औ' प्रौढः। एवं प्र ऊढिः प्रौढिः । स्व अग्रे ईरम्। अवर्णागमः । 'अ इ ए' 'ए ऐ ऐ' स्वैरम् । एवं स्व ईरिणी स्वैरिणी । अक्ष अग्रे ऊहिनी । अवर्णागमः । 'उ ओ' 'ओ औ औ' अक्षौहिणी सेनाविशेषः । 'सा सेनाऽक्षौहिणी नाम खागाष्टैकद्विकैः (२१८७०) गजैः । रथैश्चैभि (२१८७०) हयैस्त्रिघ्नैः (६५६१०) पञ्चघ्नैश्च पदातिभिः' (३२२०५०) इति ॥ २५ ॥

इति स्वरसन्धिः ॥ ३ ॥

(प्र०) गवादेरिति । यद्यपि कित्त्वाद्यागमनियामकस्याभावादव्यवस्था स्यात्तथापि गवादेरिति पञ्चमीनिर्देशात् गवादेः परः अवर्णस्य आगमः आगमनं भवति । केचित्तु गवादेः ऊप्रत्ययो भवति क्वचिद्वर्णस्य परभूतस्य आगमोऽर्थात्पूर्ववर्णं प्रतीत्यर्थः । तेन गोऽजिनमित्यादिसिद्धिरिति व्याख्येरन् । अन्ये तु गो अग्रमित्यादौ क्वचिद्वर्णस्य आगमः अलोप इत्याहुः । वस्तुतस्तु वक्तव्यत्वाद्वाशब्दाद्वा गवाक्षः गवेन्द्र इत्यत्र नित्यम् । गवेशः गवीश इत्यत्र वा । गोऽग्रं गोऽजिनमित्यत्र न किन्तु एदोतोऽत इत्यवर्णलोपः । गोऽग्रं गोअजिनमिति प्रकृतिभावोऽपि । प्रौढ इत्यत्रावर्णागमस्य बहिरङ्गेणापि प्रथमं सन्धिविधानसामर्थ्यान्नित्यत्वाच्च । प्रौढः प्रौढिः । प्रारौहः । स्वैरम् । स्वैरिणी । अक्षौहिणीत्यादयः प्रयोगतो ज्ञेयाः ॥ २५ ॥

इति सारस्वतप्रसादे स्वरसन्धिः ॥ ३ ॥

## * प्रकृतिभावः ४ ॥ *

### अथ प्रकृतिभाव उच्यते ॥

**नामी ॥ अदसोऽमी सन्धिं न प्राप्नोति (क)॥ १॥ अमी आदित्याः ॥**

---

(क) अथ स्वरसन्धिकथनानन्तरं प्रकृतिभाव उच्यते । प्रकृत्या यथावस्थितस्वरूपेण भवनं प्रकृतिभावः । तत्रादिमसूत्रमाह—नामीति । य्वोर्लोपश्च वापदान्त इत्यतो वाग्रहणमनुवर्त्तते । तच्च व्यवस्थितविकल्पार्थकम् । तेनादस इति लभ्यते । अदस्शब्दस्यामीरूपं स्वरे परे सन्धिं न प्राप्नोतीत्यर्थः । किञ्च नामीति सूत्रज्ञापकाददसोऽमीशब्दस्येकार एव सन्धिं न प्राप्नोति नत्वकारः । तेन नभस्यमी आदित्या इत्यादौ न भ्रमितव्यम् । अदसः इति किम्, अमो रोगोऽस्यास्तीत्यमी, अमी-असौ=अम्यसाविति । अम्यसावित्यत्र तु अर्थवद्ग्रहणे नानर्थकस्येति परिभाषयापि वारयितुं शक्यम् ।

अमी अश्वाः ॥ अदस इति किम्? अमो रोगस्तद्वान्। अमी असौ अम्यसौ ॥

( च० ) अथ स्वरसन्धिकथनानन्तरं प्रकृतिभाव उच्यते। प्रकृतेर्भावः भवनं सत्ता प्रकृतिभावः। प्रकृतेर्यथावस्थितस्वरूपस्य भावोऽवस्थितिर्वा प्रकृतिभावः। संधियोग्या अपि स्वराः केचित्प्रकृतिस्था एव तिष्ठन्ति। तस्मात्प्रकृतिरुच्यते। संधिसंभवेऽपि प्रकृतिस्था ये तिष्ठन्ति ते प्रगृह्या उच्यन्ते। तत्रादिमं सूत्रम्—'नामी' ॥ न प्रथमैकवचनान्तम्। 'अव्यया०' ॥ अमो प्रथमाबहुवचनान्तम्। 'त्यदादेः०' सकारलोपः जसि 'दस्य मः' 'अ इ ए' 'एरी बहुत्वे' एकारस्य ईकारः। अमी प्रथमैकवचनान्तम्। सांहितिकम्। 'सवर्णे०' नामीति सिद्धम्। अदस् शब्दस्य जसि यः अमीशब्दो निष्पन्नः सन्धि न प्राप्नोति। अमीशब्देन रोगवानप्युच्यते तन्निरासार्थम् 'अदसः' इति पदं प्रयुक्तम्। तत्र संधिः। अमी आदित्याः। 'इ यं स्वरे' इति सूत्रप्राप्तावपि सन्धिप्रतिषेधः एवम्—अमी उष्ट्राः संधिप्रतिषेधः। एवम्—अमी एडकाः। अमी अश्वाः ॥ अदस इति किम्। असी असौ अम्यसौ ॥ १ ॥

( प्र० ) अथेति। प्रकृत्या यथावस्थितस्वरुपेण भवनं प्रकृतिभाव इत्यर्थः। नामीति य्वोर्लोपश्चेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वकल्पनेन लोकाचादस एवासौ शब्दस्य प्रकृतिभावात् "अम्यायाति भिषग्गृहे" इत्यादावमो रोगः सोऽस्यास्तीत्यमी त्यस्य प्रकृतिभावाभावः। वस्तुतस्तु अमो ई इति छेदः एवं च ईकारान्तोऽमीत्यर्थः। चादस एव सम्भवति रोगिवाचकस्येन्नन्तत्वात्। नेति योगविभागाद्विष्णो इति विष्णविति इत्यादौ सम्बुद्धावाकारान्तस्यावैदिके इतौ परे वा प्रकृतिभावः। तथेगन्तस्यासमासेऽसवर्णे स्वरे वा प्रकृतिभावः। वाशब्दादेव च ह्रस्वत्वमपि वेति। चक्री अत्र, चक्रि अत्र, चक्र्यत्रेत्यादि। तथाऽगन्तस्य ऋति परे प्रकृतिभावह्रस्वत्वतद्भावा इति। ब्रह्म ऋषिः ब्रह्मर्षिरित्यादयो ज्ञेयाः। नामीति कृतसन्धिनिर्देशात्पूर्वं सन्ध्यनिषेधः ॥ १ ॥

ये द्वित्वे ॥ ई च ऊ च ए च ये। ईकारान्त ऊकारान्त एकारान्तश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति (क)॥२॥ मणीवादिवर्जम्।

---

( क ) य्वे द्वित्वे। ईश्च ऊश्च एश्चेषां समाहारो य्वे। एकत्वे द्विगुद्वन्द्वाविति नपुंसकस्येति ह्रस्वो न ईश्वरपूर्वकत्वात्। यद्वा पृथगेव पदत्रयं सर्वत्राऽविभक्तिकश्च निर्देशः। ननु 'य्वे' इत्यत्र ह्रस्वदीर्घयो र्यवकरणाभ्यामसन्देहो भवति किं ह्रस्वेकारोकारयोर्ग्रहणमुत दीर्घेकारोकारयोरिति। उच्यते। एकारस्य साहचर्याद्दीर्घयोरेवात्र ग्रहणम्। तेन कुर्वश्चावामित्यादौ नातिव्याप्तिः। ननु कुमार्योरगारं कुमार्यगारं वध्वोरगारं वध्वगारमित्यत्रौसि लुप्ते ईदूदन्तं द्वित्वे वर्त्तते। ततः प्रकृतिभावः स्यात्, इति चेन्न, ईकारादीनां प्रत्ययत्वासिद्धेः बहुत्र प्रत्ययत्वोपस्थापकं किञ्चिदस्ति। समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरानर्थक्याद्वा न प्रकृतिभावः। नन्वेवमपि शुक्ल्यास्तां वस्त्रे इत्यादावतिव्याप्तिरिति चेन्न। च्व्यन्तस्याव्ययत्वादसंख्यत्वेनाद्वित्वाच्च। यत्तु मणीवादिवर्ज्जमिति तन्निर्मूलम्, मणी इवेत्योदेरवेष्टत्वात्। 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारतप्रयोगे तु इवार्थे वशब्दो वाशब्दो वा बोध्यः। 'वा विकल्पोपमानयोः' इति, तथा च 'प्रचेतसि जानीयादिवार्थेऽपि तदव्ययम्' इति मेदिनी। द्वित्वे किम्, गौर्यत्र। य्वे किम्, देवदत्तयोरिदम्।

अग्नी अत्र । पटू अत्र । माले आनय ॥ मणीवादौ तु सन्धिर्भवति—मणी इव मणीव ॥ दम्पती इव दम्पतीव । जम्पती इव जम्पतीव । जायापती इव जायापतीव । रोदसी इव रोदसीव ॥

( च० ) सूत्रम्—'ध्वे द्वित्वे' ॥ ईच ऊच एच ध्वे प्रथमकवचनान्तम् । सांकेतिकम् । द्वित्वे सप्तम्येकवचनान्तम् । 'अ इ ए' इति । ध्वे द्वित्वे सिद्धम् । ईकार ऊकार एकारास्त्रयः सिद्धा एव गृह्यन्ते । परं द्विवचने द्विवचनान्तः सन् ईकार ऊकार एकारान्तश्च शब्दः सन्धिं न प्राप्नोतीत्यर्थः ॥ मण्यादयो न निषिद्धाः । मणी इव इत्यादीन् शब्दान् वर्जयित्वा । मण्यादीनां तु द्विवचने ईकारान्तत्वेऽपि सन्धिर्भवति ॥ अग्नी अत्र प्रथमा-द्विवचनान्तम् । 'औ यू' 'सवर्णे०' 'अग्नी अत्र' द्वित्वात् 'इ यं स्वरे' इति यत्वनिषेधः ॥ एवं 'पटू अत्र' वत्वनिषेधः । माले इति द्वितीयाद्विवचनान्तम् । 'औरी' इति ईकारः । 'अ इ ए' माले अग्रे आनय । 'ए अय्' निषेधः ॥ एवं हरी एतौ, विष्णू इमौ, गङ्गे अमू, कुले अमू इत्यादि ॥ मणीवादिवर्ज्जमिति किम् ?—मणी इव, दम्पती इव, रोदसी इव, सर्वत्र 'सवर्णे०' द्वित्वेऽपि मणीवादिनिषिद्धत्वात् संधिः कार्यः ॥ २ ॥

( प्र० ) ध्वे द्वित्वे इति सामान्योक्तेः । पचेते अत्रेत्यादावपि प्रकृतिभावत्वम् । ध्वे इत्यस्य प्रकृतिशब्दविशेषणत्वात् येन विधिस्तदन्यस्येति तदन्तत्वोक्तिः ॥ २ ॥

**औ निपातः** ॥ आकार ओकारनिपातः एकस्वरश्च सन्धिं न प्राप्नोति ॥३॥ आ एवं किल मन्यसे । नो अत्र स्थातव्यम् । उ उत्तिष्ठ । इ इन्द्रं पश्य । अ अपेहि ॥

( च० ) सूत्रम्—'औ निपात.' ॥ आ प्रथमकवचनान्तम् । सांकेतिकम् । 'अव्य-या०' । ओ प्रथमैकवचनम् । सांकेतिकम् । 'अव्यया०' । निपात्यते सिद्ध एव इति निपातः प्रथमैकवचनान्तम् 'स्रोर्विसर्गः' । ननु एकस्वरश्चेति प' सूत्रे नास्ति वृत्तौ कुतो लभ्यते ? तदर्थमाकारादारभ्य ओकारं यावत् औ इति प्रत्याहारमङ्गीकुर्वन्ति इति केचित्(क) । औ प्रथमैकवचनान्तम् । सांकेतिकम् । आकार ओकार एकस्वरा अत्र निपाता एव गृह्यन्ते आङुपसर्ग वर्जिताः । वाक्ये स्मरणे च यो निपातरूपः आ इत्यक्षरं स सन्धिं न प्राप्नोति ॥ ३ ॥

( प्र० ) औ निपात इति । औ आ ओ औ इति छेदाच्चतुष्पदं द्विपदं वा । अवर्णस्य ओकारेण सहोच्चारितस्य ओ इति प्रत्याहारादेकस्वरावाप्तिः । औकारे आवा-देशे वकारलोपश्च च सूत्रस्य छान्दसत्वाश्रयणात्सन्धिः । द्विपदत्वपक्षे केचिदेकशेषमाहुस्त-न्मन्दम् । विभक्तिपरत्वाभावात् । निपात इति प्रत्येकं सम्बध्यते । आ इति निरनुबन्ध-कग्रहणात् "निरनुबन्धकग्रहणे न सानुबन्धकस्य" इति आङो न निषेधः एतद्विभागश्लोकः ।

---

(क) तथा सति 'जानु उ अस्य रुजति' इत्यत्र अकारोकारयोः सवर्णेदीर्घे कृते निपातस्य विकृतत्वात् परेणापि सन्धिर्भवत्येव जान्वस्येति । 'औनिपातः', इत्यधिकारे 'अतिगोर्वा' इति सूत्रं केचित् पठन्ति । अयमर्थः—अति परे गोः प्रकृतिभावो वा भवतीति । तेन गो अजिनं गवाजिनम् इति सिध्यति ।

"ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" उदाहृतं च "ओत्तमैरेक्ष्यसे न त्वमामृतादेन्द्रतोऽखिलैः। आ एवं सर्ववेदार्थं आ एवं सद्वचो हरेः" इति॥ एकस्वरत्वादेव सन्ध्यप्राप्तावपि पुनरुपादानसामर्थ्यादोकारस्यौकारान्तनिरा- तोयलक्षणत्वम्। अत्रापि वानुवृत्तः। उञः इतौ वेति उ इति विति। तस्मादेव चोञ इतौ दीर्घसानुनासिक उवर्णादेशश्च वेति उ इति। तथा मयः परस्योञोऽचि वो वेति। किमु उक्तं किम्वुक्तमित्याद्यूह्यम्॥ ३॥

आग्रहणादाङो न निषेधः। तथा चोक्तम्--

'ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥ १॥
आकारस्तु निपातो यो ङिदङिद्भेदतो द्विधा।
तत्रापि च ङिदाकारः सन्धिं प्राप्नोति न त्वङित्॥ २॥
ओत्तमैरेक्षसे न त्वमामृतादेन्द्रतोऽखिलैः।
आ एवं सर्ववेदार्थं आ एवं सद्वचो हरेः॥ ३॥
अहो आहो उताहो च नो हो हंहो अथो इमे।
मिथोयुक्ताश्च ओदन्ता निपाता अष्टधा मताः'॥ ४॥

( च० ) तथा ओकारः। 'अहो आहो उताहो च नो हो हंहो अथो अमी। भो ओऽयुक्ताश्च ओदन्ता निपाताश्चाष्टधा स्मृताः'। भो भो इत्यादिषु निपातरूप ओकारः सोऽपि सन्धिं न प्राप्नोति। नो अत्र अहो ईशाः। अथो एवम् है हे इत्येतयोरपि प्रगृह्यत्व- मिति केचित्। है अम्ब। हे ईश॥ तथा एकस्वरः एक एव स्वरः एकस्वरः। यद्वा केवलः स्वरमात्र एव न तु हसयुक्तो यथा प्रादात् इत्यादिवत्। यद्वा एकस्वरः सदृशस्वरः अकार इकार उकाराणां निपातरूपाणां यः कश्चिदादौ भवति तादृश एव स्वरः अग्रेऽपि भवति त- दा सन्धिं न प्राप्नोति। यथा अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ॥ अ इति निभर्त्स- ने। अपेहि दूरी कुरु॥ इ इति सम्बोधने विस्मये वा। इ इन्द्रं पश्य॥ उ इति सम्बोधने शापोक्तौ वा। उ उत्तिष्ठ॥ आग्रहणादाङ् उपसर्गेण सह सन्धिर्भवति। उदाहरणं क- ण्ठ्यम्। 'अत्राकारनिपातस्तु ङिदङिद्भेदतो द्विधा। तत्र यः स्यात् ङित्स एव सन्धिं प्राप्नोति न त्वङित्।' 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वा- क्यस्मरणयोरङित्।' 'औत्तमै रेक्षसे न त्वमामृतादेन्द्रतोऽखिलैः। आ एवं सर्ववेदार्थः आ एवं सद्वचो हरेः॥' आ ईषदुत्तमः ओत्तमः ३-२ इति ईषदर्थे आङासह सन्धिः॥ आ ईक्षसे। एक्षसे। आ इहि एहि इत्यादौ क्रियायोगे आङा सह सन्धिः॥ आ अमृतात् आमृतात्। अमृतं मोक्षं मर्यादीकृत्य इति मर्यादायाम्। आ इन्द्रतः एन्द्रतः। इन्द्रमभि- व्याप्येत्यभिविधौ च आङासह सन्धिः॥ मर्यादा सीमा अभिविधिः अभिव्याप्तिः। म- र्यादा अभिविधिश्च मर्यादाभिविधिः तस्मिन् सर्वोऽपि द्वन्द्वो विभाषयैकवचनान्तः स्यात्।

'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकत्वम् । अनित्यमागमानुशासनमिति 'नामिनः स्वरे' इति नुमागमो न, किं तु 'ङेरौ ङित्' ॥ तथा आ इति आक्षेपे । आ एवं किल मन्यसे । आ- इति वाक्ये । आ एवमीश्वरवचनमिति स्मरणे । स्मरणीयमित्यर्थः । अनाङ् आकारः सन्धिं न प्राप्नोति ॥

**प्लुतः ॥ प्लुतः सन्धिं न प्राप्नोति ॥४॥ देवदत्त ३ एहि । देवदत्ते अत्र गौश्चरति ॥**

( च० ) सूत्रम्—'प्लुतः' ॥ प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' ॥ यत्र प्लुतस्तत्र संधिर्न भवति । भो देवदत्त ३ एहि । 'का एषा प्रस्तुताङ्गी प्रचलितनयना हंसलीला व्रजन्ती द्वौ पादौ कुंकुमार्द्रौ कनकविरचितौ नूपुरं शब्दयन्ती । इत्थं मार्गे गता सा बहुकुसुममलताबद्धवेणी रुदन्ती ताम्बूलं वामहस्ते मदननिवसिता गुह्यशालां विवेश ॥' अत्र विचारे टेः प्लुतत्वं तेन सन्धिर्न । क्वचित्तु सन्धिः । क्वचित्तु 'प्लुतोऽनितौ' इति सूत्रं पठन्ति । तेन प्लुतोऽपि इतिशब्दे परे सन्धिं प्राप्नोति । यथा हा तात इति हा तातेति ॥ देवदत्तेत्यादौ न संन्धिर्भवति ॥ ४ ॥

**दूराद्धाने च टेः प्लुतः ॥ दूरादाह्वाने गाने रोदने विचारे गम्यमाने च टेः प्लुतो भवति(क) ॥ ५ ॥**

## इति प्रकृतिभावप्रक्रिया ॥ ४ ॥

( च० ) प्लुतलक्षणमाह—सूत्रम्—दूरादाह्वाने०' ॥ दूरात् पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे दीर्घः०' आह्वाने सप्तम्येकवचनम् । 'अ इ ए' । टिशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः 'स्रोर्विसर्गः' । प्लुतः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः ॥ वृत्तिः कण्ठ्या । प्लुतस्तु उच्चारणमात्र एव न, किन्तु ३ लिखनरूपः इति प्लुतलक्षणम् ॥ ५ ॥

इति प्रकृतिभावः ॥ ४ ॥

( प्र० ) दूरादिति । यद्यपि दूरत्वमव्यवस्थितं तथापि प्राकृतप्रयत्नाधिक्यप्रयत्नाश्रयणेन यत्र श्रवणं तज्ज्ञेयम् । आह्वानस्य रोदनाद्युपलक्षणत्वाद्गाने इत्याद्युक्तिः। तत्र गानरोदनयोः प्रसिद्धम् । विचारे अधःस्विदासीदुपरिस्विदासीदित्यादौ । एवं वाक्यस्य टेः प्लुत इत्याद्यूह्यम् । अग्निचीरेत्यादि ॥ ५ ॥

इति सारस्वतप्रसादे प्रकृतिभावः ॥ ४ ॥

---

( क ) 'दूरादित्यत्र चकारग्रहणाद् हा तातेत्यादौ संधिः स्यात् ॥ हेहयोः स्वरे संधिर्न वक्तव्यः ॥ हे अनड्वन् ॥ ऋतौ समानो वा । ऋतौ परे समानः संधिं न प्राप्नोति वा । हिम ऋतुः हिमर्तुः हिमऋतुः ॥' इत्यधिकोऽयं क्वचित् पाठः ।

अत्र 'दूराद्धाने टेः प्लुतः' इति मात्रं सूत्रम, अस्य वृत्तिस्तु—दूरादाह्वाने गाने रोदने विचारे च टेः प्लुतो भवति, तेन देवदत्त ३ एहि इति । दूरत्वमिह'ह्वानापेक्षं बोध्यते न देशापेक्षं पुरुषापेक्षं वा । तेनातिदूरेऽतिनिकटे च आह्वाने सन्धिः स्यादेव । यथा—धर्मोऽस्ति सत्यं तवराक्षसाय' इत्यत्राह्वानस्यातिनिकटवर्त्तित्वात् सन्धिर्भवति । यथा च—'बुधेत्य मम मन्दिरम्' इत्यत्रापि सन्धिर्भवति । इह गानरोदनयोरुदाहरणं प्रसिद्धम् । विचारे तु—अधः स्विदासीदुपरिस्विदासीदित्यादौ ज्ञेयम् ।

इति मनोरमायां प्रकृतिभावः । ४ ।

## * व्यंजनसन्धिः ॥५॥ *

### अथ व्यञ्जनकार्यमुच्यते ॥

**चपा अबे जबाः** ॥ पदान्ते वर्तमानाश्चपा जबा भवन्ति अबे परे (क) ॥१॥ षट् अत्र षडत्र । वाक् यथा वाग्यथा । ककुप् ऐन्द्री ककुबैन्द्री ।

( च० ) अथ प्रकृतिभावकथनानन्तरं व्यञ्जनकार्यमुच्यते व्यञ्जनानां सन्धिः कथ्यते इत्यर्थः॥ सूत्रम्—'चपा अबे जबाः' ॥ चकारपकाराभ्यां गृह्यमाणा वर्गाश्चपाः । चपशब्दस्य प्रथमाबहुवचनम् । 'सवर्णे' 'सोविसर्गः' ॥ अकारबकाराभ्यां गृह्यमाणः प्रत्याहारः अबस्तस्मिन् अबशब्दस्य सप्तम्येकवचनम् । 'अ इ ए' ॥ जकारबकाराभ्यां गृह्यमाणा वर्गा जबाः। जबशब्दस्य प्रथमाबहुवचनम्। 'सोविं०' 'सवर्णे दीर्घः' सिद्धम् ॥ 'चपा जबा अबे' इति वक्तव्ये 'चपा अबे जबाः' इत्युक्तं तेन क्वचित्पदान्तं विनापि जबा भवन्ति । यथा-सद्गुरुर्भवदीयः इत्यादि । तथा क्वचिन्न भवति । यथा—वैवस्वतः । सत्त्वान् । मरुत्वान् । तडित्वान् । वाचालः। वाचाटः इत्यादौ न॥ अथवा असमासे साक्षादेव पदान्ते समासादौ त्वन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्ते इति वाच्यम्। पदान्ते स्थिताश्चपा जबा भवन्ति । चटतकपानां क्रमेण जडदगबा भवन्ति अबे परे । षट् अग्रे अत्र वाक् अग्रे यथा। उभयत्रापि 'चपा अबे जबाः' इत्यनेन डकारगकारौ भवतः। यथा टस्य डः, कस्य गः 'स्वरहीनं०' षडत्र । वाग्यथा । एवम् अच् अन्ता, अजन्ताः । हरित् अश्वः हरिदश्वः। ककुप् एषा ककुबेषा । इति सिद्धम् । दिश् अम्बरः । दिश् अन्तः । अत्र पदान्तत्वाश्रयणात् 'दिशाम्' इति कः । पश्चात् 'चपा अबे जबाः' दिगंबरः । दिगन्तः । वाच् ईशः । अत्रापि पदान्तताश्रयणात् 'चोः कुः' पश्चात् 'चपा अबे जबाः' । वागीशः । अबे परे किम् वाक् पूतः । षट् कुर्वन्ति ॥ १ ॥

( प्र० ) चपा इति । यद्यपि खसे चपा इति विशेषविधेः प्राक् इत्यादावबसाने च पक्षे चपविधानसामर्थ्यादेव तदप्राप्तौ परिशेषादबपरत्वप्राप्तौ अबेग्रहणं व्यर्थम् । तथापि चपाच्छः शः इत्युत्तरसूत्रेऽनुवृत्त्यर्थम् । ततश्च वाक्श्चोततीत्यादौ तदभावः । चपाबे झपोपलक्षणाद्विपरीतनिर्देशाद्वा समिध इन्धनं यस्येति समिदिन्धनं अग्निमजानमित्यादावपि जबाः ॥ १ ॥

**ञमे ञमा वा** ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति(ख) ॥२॥ वाक् मात्रं वाङ्मात्रम् वाग्मात्रम् । षट् मम षण्मम षड्मम॥

---

( क ) अत्र 'चपा अबे' इति वक्तव्ये 'चपा अबे जबाः' इति व्युत्क्रमपाठः कुत्रचित् पदान्ताद्वतेऽपि जबा भवन्ति इति ज्ञापनार्थम् । तेन 'सद्गुरुर्भवदीयः' इत्यादि सिद्ध्यति । कुत्रचिदपि न भवति । यथा वैवस्वतः, मरुत्वान् , तडित्वान् , यावतीय इत्यादौ । अथवा असमासे साक्षादेव पदान्तता, समासस्थले पुनरन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तता वाच्या ।

( ख ) ञमे ञमा वेति । अत्र पदान्ते इत्यनुवर्तते । तेन वच्मीत्यादौ न । वा शब्दोऽत्र व्यवस्थावाची । तेन झपानां क्वचित् ञमा भवन्तीति तत्त्वदीपिका । यत्तु—केश्चिन्मयटि नित्यमित्युक्तं तद्भाष्यविरोधादुपेक्ष्यम् । चपा इति किम् , विष्णो मां रक्षेत्यादौ स्वरस्य मा भूत् ।

मयटि नित्यम् । चिन्मयम्(क) ॥

( च० ) सूत्रम्—'ञमे ञमा वा' ॥ ञकारमकाराभ्यां गृह्यमाणः प्रत्याहारो ञमस्तस्मिन् ञमे । सप्तम्येकवचनम् । 'अ इ ए' ञकारमकाराभ्यां गृह्यमाणा वर्णा ञमाः। ञमशब्दस्य प्रथमाबहुवचनम् । 'सवर्णे' 'स्रोर्विसर्गः०' । वा तृतीयैकवचनान्तम् । 'अव्यया०' ॥ 'आदवे लोपश्' ॥ चपानां ञमप्रत्याहारे परे वा विकल्पेन ञमा भवन्ति । चटतकपानां क्रमेण ञणनङमा भवन्ति । वाग्रहणात्पक्षे जबा अपि भवन्ति । वाङ्मात्रं वाग्मात्रम् । एकत्र ङः, अन्यत्रगः । स्वरहीनं०' षट् अग्रेमम । एकत्र णः, अन्यत्र डः । षण्मम । षड्मम । 'स्वरहीनं०' । तत् नयनं तन्नयनं तद्नयनम् । मयटि प्रत्यये परे तु नित्यमेव ञमाः स्युः । यथा चिन्मयम् वाङ्मयम् । अप्मयः अम्मयः । अत्र न विकल्पः । तथा वाग्रहणादेव क्वचिज्जवस्यापि ञमाः स्युः । यथा प्रन्नयः मृन्मयः ॥ २ ॥

( प्र० ) ञमे इति । वाशब्दस्य व्यवस्थिताव्यवस्थितविकल्पार्थत्वान्मयटि नित्यम् । चिन्मयम् । यत्तु प्रत्ययञमे नित्यविधेर्वाङ्मात्रमित्येकमेव रूपमिति । तदयुक्तम् , एवं विधे नियामकाभावात । मयटि नित्यं वाच्यमित्युक्तेः कलापादिषु प्रत्ययग्रहणं विशेषपरं ज्ञेयम् । चपा अबे जबा इत्यतो झपोपलक्षितचपानुवृत्तेर्मृन्मयं ककुन्मयमग्निमन्नयनमित्यादौ झपानामपि ञमाः ॥ २ ॥

चपाच्छः शः ॥ चपादुत्तरस्य शकारस्य छो वा भवति ॥३॥ वाक् शूरः वाक्छूरः वाक्शूरः ॥

( च० ) सूत्रम्—'चपाच्छः शः' ॥ चपात् पञ्चम्येकवचनान्तम् । 'हसिरत्' 'सवर्णे०' ॥ चपात् अग्रे छः 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं०' ॥ श इति षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' सिद्धम । चपादुत्तरस्य शकारस्य छः=छकारो भवति वा=विकल्पेन । वाक् अग्रे शूरः । अनेन शकारस्य छकारः । 'स्वरहीनं०' ॥ वाक्छूरः, पक्षे वाक्शूरः । इति सिद्धम्। छः शः इति विपरीतग्रहणात् वाक्श्चोततीत्यादौ छत्वं न स्यात् ।३।

( प्र० ) चपादिति । विपरीतनिर्देशोऽसन्देहार्थः । अन्यथा कार्यान्तरवृत्त्यर्थं छस्यैव छविधिरिति सन्देहः स्यात । चपा अबे जबा इत्यस्याप्यनुवृत्तिर्वा ततश्च पूर्वं चपा अबे जबाः । पश्चात् ञमे ञमाः । यद्यपि विभक्तिविपरिणामेन चपानुवृत्तावपि पुनस्तद्ग्रहणमपार्थं तथापि विभक्तिविपरिणामस्यानन्यगतिकत्वेनात्रानाश्रयणं पदान्त इत्येव नेह । विश्नपशनहः इति चपा अबे जबा इत्यतो मण्डूकप्लुतिन्यायेन विभक्तिविपरिणामेन पञ्चम्यन्तजबानुवृत्तेः झपोपलक्षितचपानुवृत्तेर्वा समिद्धोमोऽग्निमद्धुतं ककुब्घृतमित्यादिसिद्धिः ॥ ३ ॥

हो झभाः ॥ चपादुत्तरस्य हकारस्य झभा वा भवन्ति॥४॥ यद्वर्गग-

---

( क ) प्रत्यये ञमे नित्यमिति केचित् । तेन वाङ्मात्रमित्येकमेव भवति ॥ इत्ययं क्वचिदधिकः पाठः ।

श्चपस्तद्वर्गगश्चतुर्थो भवति (क)। तत् हविः तद्धविः+तद्हविः। वाक् हरिः, वाग्घरिः वाग् हरिः। ककुप्+हासः, ककुब्भासः ककुब्हासः॥

( च० ) सूत्रम्—'हो झभाः'॥ हः इति षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'सोर्विसर्गः'॥ झभाः प्रथमाबहुवचनान्तम्। 'सवर्णे०' 'सोर्विसर्गः'॥ यस्य वर्गस्य सम्बन्धी चपो हकारात्पूर्वं भवति तस्य वर्गस्य चतुर्थाक्षरं हकारस्थाने भवति। यथा ककारात्परस्य हस्य घः। चकारात्परस्य हस्य झः। टकारात्परस्य हस्य ढः। तकारात्परस्य हस्य धः। पकारात्परस्य हस्य भः। 'यद्वर्गस्य चपः पूर्वं हकारात्किल दृश्यते। हस्य स्थाने भवेद्वर्गस्तद्वर्गस्य चतुर्थकः'। वर्गचतुर्थो हस्य सवर्ण इति। वाग्रहणात्क्वचिच्चपादनुत्तरस्यापि हस्य झभा भवन्ति। समिध् होमः समिद्धोमः। हकारस्य धः। 'झबे जबाः' इति धस्य दत्वम्। यद्वा क्वचिदनवसानेऽप्यवसानता ग्राह्या। तेन 'वावसाने' इति धकारस्य तकारः। पश्चात् 'हो झभाः' इत्यादि। एवं तत् हितः तद्धितः॥ तत् अग्रे हविः 'हो झभाः' इति हकारस्य धकारः पश्चात् 'चपा अबे जबाः' इतितस्य दः। 'स्वरहीनं०' तद्धविः। घृतमित्यर्थः॥ वाक् अग्रे हरिः। हस्य घः पूर्ववत्। 'चपा अबे जबाः' इति कस्य गः। वाग्घरिः। वाचा कृत्वा हरिः सिंहः इति सिद्धम्॥ अच् अग्रे हलौ अज्झलौ। षट् अग्रे हलानि षड्ढलानि। ककुप् अग्रे हासः ककुब्भासः॥ ४॥

( प्र० ) यद्वर्गग इति। अयं भावः। घोषवत्त्वनादवत्त्वमहाप्राणत्वसोष्मत्वादिगुणैश्चपचतुर्थैर्हस्यान्तरतमत्वाज्जुहोतीत्यादौ हस्थाने वर्गचतुर्थादेशार्थमिदं प्रसज्जाद्यकम्। अत्र निमित्तनैमित्तिकयोर्यथासङ्ख्ये नाप्युपपत्तेरिति॥ ४॥

**स्तोः श्चुभिः श्चुः॥** स्तोः सकारस्य तवर्गस्य च शकारेण चवर्गेण च योगे शकारचवर्गौ यथासंख्येन भवतः(ख)॥ ५॥ कस् चरति कश्चरति। कस् शूरः कश्शूरः। तत चित्रं तच्चित्रम्। तत् शास्त्रं तच्छास्त्रम्।

( च० ) सूत्रम्—'स्तोः श्चुभिः श्चुः'॥ स् च तुश्च स्तुः तस्य स्तोः षष्ठ्येकवचनान्तम्। 'ङिति' 'ङसिङसोरस्य' इत्यलोपः। 'सोर्विसर्गः'॥ श् च चवश्च श्चवस्तैः श्चुभिः तृतीयाबहुवचनान्तम्। 'सोर्विसर्गः'॥ श् च चुश्च श्चुः प्रथमैकवचनान्तम्। 'सोर्विसर्गः'॥ अत्र 'एकत्वे द्विगुद्वन्द्वौ' इति नपुंसकलिङ्गं युज्यते। परं 'छन्दोवत्सूत्राणि' इति छान्दसत्वात्पुंलिङ्गत्वम्। श्चुभिरित्यत्र बहुवचनमयथासङ्ख्येन योगज्ञापकम्। सकारस्य शकारचवर्गयोगे पूर्वतः परतः उभयत्रापि सम्बन्धे सति शकारः स्यात् तवर्गस्य

( क ) इतः प्राग् 'नन्वेकस्य हकारस्य पञ्च झभाः प्राप्ताः केन क्रमेण भवन्ति। अत्रोच्यते।' इत्यधिकः क्वचित् पाठः।

( ख ) इतः परं 'स् च तुश्च स्तुस्तस्य स्तोः। समाहारद्वन्द्वे एकत्वम्। 'छन्दोवत्सूत्राणि' इति वचनान्नपुंसकस्य पुंस्त्वम्। श् च चवश्च श्चवस्तैः श्चुभिः। चुशब्दे चवर्गस्थवर्णापेक्षया बहुवचनम्॥ अत्र सप्तमीमेतां तृतीयामकरोदिला। ततः श्चुभिः श्चुः पूर्वेण संनिपातः परेण वा॥ पाठोयं क्वचिदधिकः। अत्र स्तो श्चौ श्चुरित्येव सुवचम्। न च 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिद्ध्येत। न शादिति लिङ्गेन तस्या अनुपस्थानाभ्युपगमात्।

शकारचवर्गयोगे चवर्गः स्यात् । कस् चरति, कस् अग्रे शूरः उभयत्रापि शकारः । 'स्वरहीनं०' कश्चरति । कश्शूरः॥ तत् चित्रम् । तस्य चः। 'स्वरहीनं०' तच्चित्रम् ॥ तत् श्रवणं तत् शास्त्रम् । उभयत्रापि तस्य चः । 'चपाच्छ शः' ॥ कस् छादयति कश्छादयति । अत्र सकारस्य शकारः । 'स्वरहीनं०' ॥ सत् अग्रे झंझा । 'स्तोः श्चुभिः श्चुः' इति तस्य चः । 'चपा अबे जबाः' चस्य जः 'स्वरहीनं०' सज्झंझा ॥ ५ ॥

( प्र० ) स्तोरिति । स् च तुश्चेति समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्ययः । अनित्यमागमानुशासनम्'' इति वा नुमभावः । इतरेतरयोगे वा तत एव वचनव्यत्ययः । यद्यप्युकारान्तत्वेन तोः पूर्वनिपातत्वं प्राप्नोति तथापि श्लिष्टोच्चारणेन लाघवात्सस्य सोष्मत्वादिगुणेन प्राधान्यात्पूर्वनिपातनियामकस्य वक्तव्यत्वात्सौष्ठवत्वाद्वा पूर्वम् । यत्तु सा युतस्तुरिति तत्पुरुषाश्रयणमिति । तदयुक्तम् । तत्पुरुषे परपदप्राधान्यात्सकारयुतस्यैव तवर्गस्य श्चुत्वविधिप्रसङ्गात् । श्चुभिरिति बहुवचनं व्यक्त्यभिप्रायेण जात्यभिप्रायेण वा । यत्तु स्थान्यादेशयोरिव निमित्तनैमित्तिकयोरपि यथासङ्ख्यत्वप्राप्तौ तदभावार्थमिति । तदयुक्तम् । तदभावस्य न शादिति निषेधादेव सिद्धेः । निमित्तनैमित्तिकयोर्यथासङ्ख्यत्वाभावात्सकारस्य शकारचवर्गाभ्यां शः एवं तवर्गस्य शकारचवर्गाभ्यां चवर्ग इत्यर्थः । श्चाविति वक्तव्ये श्चुभिरित्युक्तिरुभयतो योगार्था ततश्च राज्ञो यज्ञ इत्यादावपि श्चुत्वम् तच्चित्रमित्यत्र कृतेऽन्तरङ्गे बहिरङ्गश्चुत्वस्यासिद्धेस्तदभावः ॥ ५ ॥

**न शात् ॥ शकारादुत्तरस्य तवर्गस्य चुत्वं न भवति(क) ॥ ६ ॥ विश्नः । प्रश्नः ॥**

( च० ) सूत्रम्—'न शात्' ॥ न प्रथमैकवचनम् । 'अव्यया०' ॥ शादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे दीर्घः०' ॥ शकारादुत्तरस्य तवर्गस्य चत्वं चवर्गो न भवति । प्रश् अग्रे नः, विश् अग्रे नः, रूपद्वयेऽपि चवर्गस्य निषेधः । किंतु 'स्वरहीनं०' । प्रश्नः प्रच्छनं प्रश्नः । विश्नः विशतीति विश्नः । 'विच्छ गतौ' विच्छनं विश्नः(ख)॥६॥

**ष्टुभिः ष्टुः ॥ स्तोः सकारस्य तवर्गस्य च षकारेण टवर्गेण च योगे षकारटवर्गौ यथासंख्येन भवतः (ग) ॥७॥ कस् षष्ठ कष्षष्ठः । कस् टीकते कष्टीकते । तत् टीकते तट्टीकते । तत् टीका तट्टीका ॥**

( च० ) सूत्रम्—'ष्टुभिः ष्टुः'' ॥ ष् च टुश्च ष्टवस्तैः ष्टुभिः तृतीया बहुवचनान्तम् । ष् च टुश्च ष्टुः प्रथमैकवचनान्तम् । 'स्तो०' ष्टुभिरित्यत्रापि बहुवचनमयथासंख्ययोगसूचकम् । स्तोः सकारतवर्गयोः षकारटवर्गयोगे षकारटवर्गौ यथासंख्यं भवतः

---

( क ) न शादिति । शात् परस्य सस्य शकारप्रसङ्गो नास्ति अतः शात् परस्य तवर्गस्य चवर्गो निषिध्यते । शात् किम् , याच्ञा ।

( ख ) 'प्रच्छ ज्ञीप्सायाम्' 'विच्छगतौ' आभ्यां नङ्की इति नङ्प्रत्ययः । क्ङिति झसे क्वौ ञमे चेति छस्य शत्वम् । नङो ङित्त्वाद् गुणाभावः । प्रच्छेस्तु संप्रसारणं न, भाष्येऽनुक्तत्वात् ।

( ग ) 'ष्टुभिरिति बहुवचनात्क्वचित्षकारटवर्गयोगं विनापि षत्वम् । अग्निष्टोमः' इत्यधिकः पाठः ।- 'ष्टुभिः' इत्यत्र 'स्तोश्चुभिः' इति सूत्रात् स्तोरित्यनुवर्त्तते । अत्र ष्टौ ष्टुरिति युक्तम् ।

इत्यर्थः । सकारस्य षकारः । तवर्गस्य टवर्गः । कस् अग्रे षष्ठः । कस् अग्रे टीकते अत्रापि सस्य षः । 'स्वरहीनं०' कष्षष्ठः । कट्टीकते—कः समर्थो भवतीत्यर्थः । टीकृ गतौ सामर्थ्ये च । तत् अग्रे टीकते, अनेन तस्य टः 'स्वरहीनं०' तट्टीकते । विद् अग्रे ठलः पूर्वं 'खसे चपाः०' ततः 'ष्टुभिः ष्टुः' विठ्ठलः ॥ ७ ॥

( प्र० ) न षीति निषेधात् ज्ञापकादत्रापि सकारस्य पकारटवर्गयोगे षकारस्तथा तवर्गस्य टयोगे टवर्ग इत्यर्थः । शेषं पूर्ववत् । 'टीकृ गतौ' इत्यस्य टीकते इति रूपम् ॥ ७ ॥

**न षि ॥** षकारे परे तवर्गस्य ष्टुत्वं न भवति(क) ॥८॥ भवान् षष्ठः भवान्षष्ठः ॥

( च० ) सूत्रम्-'न षि' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' ॥ षि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ षकारे परे तवर्गस्य टवर्गो न भवति । भवान् षष्ठः । अत्रापि 'ष्टुभिः ष्टुः' इति प्राप्तस्य टवर्गस्य निषेधः किंतु 'स्वरहीनं०' इति प्रकृतिभाव एव ॥ ८ ॥

( प्र० ) न षीति सप्तमीनिर्देशात् क्रोष्टा येष्टेत्यादौ पूर्वयोगे ष्टुत्वं भवत्येव ॥ ८ ॥

**टोरन्त्यात् ॥** पदान्ते वर्तमानाट्टवर्गात्परस्य स्तोः ष्टुत्वं न भवति(ख) । षट् नरः षण्नरः ॥९॥ षट् सीदन्ति षट् सीदन्ति ॥

( च० ) सूत्रम्—'टोरन्त्यात्' ॥ टुशब्दस्य पञ्चम्येकवचनान्तम् । 'ङिति' टुत्यस्य टो । 'ङसिङसोरस्य' इत्यकारलोपः । 'स्रोर्विसर्गः' ॥ टोः अग्रे अन्त्यः । 'नाम्नोरः' 'स्वरहीनं०' अन्त्यशब्दस्य पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' ॥ पदान्ते वर्तमानो यष्टवर्गस्तस्यादुत्तरयोः परयोः सकारतकारयोः षकारटवर्गौ न भवतः परं नाम्नवतिनगरीवर्जम् । उदाहरणम् । षट् अग्रे नरः । अत्र ष्टुत्वनिषेधः । ततो 'ञमे ञमा वा' 'ण' 'स्वरहीनं०' षण्नरः । पक्षे षड् नरः । ना नरौ नरः इति बहुवचनम् । षट् अग्रे सीदन्ति अत्र षत्व निषेधः । नाम्नवतिनगरीवर्जनात् । षण्णाम् । षण्णवतिः । षण्णगर्यः अत्र 'टोरन्त्यात्' इदं सूत्रं न लगति, किंतु 'ष्टुभिः ष्टुः' इति भवति । 'स्वरहीनं०' ॥

( प्र० ) टोरिति । नर इति नृशब्दस्य प्रथमाबहुवचनान्तस्य 'ञमे ञमा वा' इत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वेन षण्णवतिः षण्णगर्य इत्यात्रानिषेधः ॥ ९ ॥

**तोर्लि लः ॥** तवर्गस्य लकारे परे लकारो भवति(ग) ॥१०॥ तत् लुनाति

---

( क ) अत्र तोरित्यनुवर्तते । षीति किम् । तट्टीकते । षीति सप्तमीनिर्देशात् पूर्वस्य शकारस्य ष्टुयोगे स्यादेव । क्रोष्टेति ।

( ख ) अत्र स्तोरित्यनुवर्तते । न तु तोरिति । टोरिति किम् । सर्पिष्टमम् । अन्त्यः । भावार्थे 'णितो वा' इति वृद्धिविकल्पाद् वृद्धेरभावः । अत्र च 'नवति नगर्योर्न' इति वक्तव्यम् । तेन षट् नवतिः षण्णवतिः, षट् नगर्यः षण्णगर्यः इति ष्टुत्वम् ।

( ग ) अत्र लघुभाष्यम् । स्तोरित्यनुवर्तमाने तोर्ग्रहणं सकारनिवृत्त्यर्थमित्येके । तत्र । लकारस्य सकारस्याभावात् । न च कोलुनाति इत्यादौ अन्तरङ्गेण विसर्गेण भाव्यम् । स्ल्लावक इत्यत्र परत्वादन्तरङ्गत्वाच्च दत्वे कृते लः । तोर्ल्लि इति द्विलकारं पाठ्यम् । लृ लि चेति छेदः । एवं सार्द्धमात्रा न्यूना भवति । अत्रेदमवधेयम् । तोर्ल्लि इत्युक्तेरकारात्परत्वात्तन्निमित्तकद्वित्वमाशङ्क्य विधेयसन्देहस्यानिवार्यत्वात् । किञ्च स्तोश्चुभिः श्चुरित्यत्र प्रकृतस्य श्चुरित्यस्य विधेयत्वेनोपन्यासाच्च ।

तल्लुनाति । भवान् लिखति भवाँल्लिखति । **अन्तस्था द्विप्रभेदाः** ॥ रेफ-वर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिक एव नकारस्य लकारो भवति ॥

( च० ) सूत्रम्—'तोर्लि लः' ॥ तुशब्दस्य षष्ठ्येकवचनम् । 'ङिति' तुइत्यस्य तो 'ङसिङसोरस्य' 'स्त्रोर्विसर्गः' ॥ तोः अग्रे लीति सप्तम्येकवचान्तम् । 'स्वरहीनं०' 'नामि-नोरः' 'जलतुम्बिका० र्लि । लः । प्रथमैकवचनान्तम् । 'स्त्रोर्विसर्गः' ॥ तवर्गस्योदाहर-णम् । तत् अग्रे लुनाति । अनेन तस्य लकारः । 'स्वरहीनं०' तल्लुनाति । भवान् अग्रे लिखति 'तोर्लि लः' इति नस्य लत्वे कृते अन्तस्था द्विप्रभेदाः । उच्चारणकाले जि-ह्वाया अन्ते तिष्ठन्तीति अन्तस्थाः । अथवा वर्णानामन्ते तिष्ठन्तीत्यन्तस्थाः। ते के ? यर-लवाः ते च द्विप्रकाराः । कथं भूताः ? रेफेण रकारेण वर्जिताः शेषा यवला इत्यर्थः । कथं द्विप्रभेदा इत्याह—सानुनासिका निरनुनासिकाश्च तत्र तथदधानां स्थाने लकारो निरनुना-सिको भवति । नकारस्य सानुनासिकत्वान्नकारस्थाने लकारोऽपि सानुनासिक एव भव-ति । तेन पूर्वलकारस्योपरि अर्धानुस्वारो भवति । 'स्वरहीनं०' भवाँल्लिखतीति सिद्धम् ॥ १० ॥

( प्र० ) तोरिति । "एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति पूर्वतः स्तोरनुवृत्तेः तोरित्युक्तम् । लकारस्य द्वैविध्यात्स्थानेऽन्तरतम इति निरनुनासिक-स्थाने निरनुनासिकः सानुनासिकस्थाने सानुनासिको लकार इत्यर्थः ॥ १० ॥

**नः सक् छते** ॥ नान्तस्य पदस्य छते परे सगागमो भवति(क)॥११॥

**टित्कितावाद्यन्तयोर्वक्तव्यौ** ॥ टित्वादादौ किस्वादन्ते । राजन् चित्रं राजंश्चित्रम् । भवान् तनोति भवांस्तनोति ॥

( च० ) सूत्रम्—'नः सक् छते' ॥ नः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' । सक् प्रथमैकवचनान्तम् । 'हसे पः०' । छते इति सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ त्रिपदम् । नान्तस्य नकारान्तस्य पदस्य छते छठथचटतलक्षणे प्रत्याहारे परे सक् इत्यागमो भवति । ककारः स्थाननियमार्थः । तमेवाह—'टित्कितौ०' ट इत् यस्यासौ टित्, क इत् यस्यासौ कित् टिच्च किच्च टित्कितौ टित्कितावागमौ क्रमेण आद्यन्तयोर्विषये भवतः । टित् आदौ कित् अन्ते इत्यर्थः । अत्र किस्वादन्ते । राजन् चित्रं भवान् अग्रे तनोति उभयत्रापि सगागमः । अकार उच्चारणार्थः । एकत्र 'स्तोः श्चुभिः श्चुः' इति सस्य शः । उभयत्रापि 'स्वरहीनं०' 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैव गृह्यन्ते' इत्यागमान्तं पदमित्यपदान्त-त्वान्नकारस्य 'नश्चापदान्ते झसे' इत्यनुस्वारः ॥ ११ ॥

---

( क ) नः सक्छते इति अत्र पदस्य सगागमः न तु नस्य । तथा सति नस्यानुस्वारो न स्यात् अप-दान्तत्वाभावात् इत्याशयेनाह—नान्तस्येत्यादि । अयमभिसन्धिः—यदागमास्तद्गुणीभूतास्तद्ग्रहणेनैव गृह्य-न्ते इत्यागमान्तं पदम्, तथा सति नकारस्यापदान्तत्वा 'नश्चापदान्ते झसे' इत्यादिनानुस्वार इति ।

छते इत्यत्र अमपरे छते इति वक्तव्यमन्यथा सन्त्सरुरित्यत्र सगागमः स्यात् । 'त्सरुः खड्गादिमुष्टिः स्यात्' इत्यमरः । इतोऽग्रे क्वचित् पुस्तके—'नप्रशानः' प्रशान्तनोति" इत्यधिकम् ।

( प्र० ) नः सगिति । नः सगिति योगविभागाद्वानुवृत्तेश्च नॄन् पाहीत्यादौ सि अपदान्तत्वेन नस्यानुस्वारे विसर्जनीये च कुप्वोः ≍क≍पौ वेति विकल्पेन नॄ≍पाहि नॄः पाहीत्यादि । तथा कान्कानित्यत्रापि सपि सकि वाशब्दस्य व्यवस्थितार्थत्वेन ङ स्य भावे औत्सर्गिकसादेः सादेशे कांस्कान् विकल्पात्कान्कान् । प्रशान् तनोतीत्यत्र न । सन्सः । षट्सन्त इत्यादौ वा शब्दाल्लोकाद्वा नकारटकाराभ्यां सस्य विकल्पेन धुटि चपे च सन्त्सः षट्त्सन्त इत्यादि यथायथमूह्यम्। प्राङ्षष्ठः सुगण्षष्ठ इत्यादौ ङकारणका रयोः शसे परे कुक्टुकोः सतोः कषयोगे क्ष इति क्षादेशे च प्राङ्क्षष्ठः सुगण्ट्षष्ठ इत्यादि ज्ञेयम् । राजंश्चित्रमित्यत्र ञस्य श्चुत्वे नस्यापदान्तत्वाच्चगभावः । यदागमास्तद्गुणीभूता स्तद्ग्रहणेन गृह्यन्त इति न्यायात्सस्य पदान्तत्वात् अत एव परत्वात् श्चुत्वस्य बहिरङ्ग त्वेनासिद्धत्वाच्चुत्वाभावे नश्चापदान्त इत्यनुस्वारः यस्य विसर्गोऽपि पुनः स एव ॥११॥

**शे चग्वा ॥** नान्तस्य पदस्य शे परे वा चगागमो भवति ॥ १२॥

भवान् शूरः भवाञ्छूरः भवाञ्च्छूरः भवाञ्चशूरः भवाञ्शूरः(क)

( च० ) सूत्रम्—'शे चग्वा' ॥ शे इति सप्तम्येकवचनान्तम् । 'अ इ ए' । चग् प्रथमैकवचनान्तम् । 'हसे पः०' । वा प्रथमैकवचनान्तम् । 'अव्यया०' ॥ नान्त स्येति । नकारान्तस्य पदस्य शे शकारे परे वा विकल्पेन चगागमः स्यात् । भवान् शूरः । अत्र 'चपाच्छः शः' इति सूत्रस्य विकल्पेन प्राप्त्यर्थं रूपद्वये चगागमः । पः पद येऽपि 'स्तोः श्चुभिः श्चुः' नस्य ञः । प्रथमरूपे 'चपाच्छः शः' इति शस्य छः सदंत्र 'स्वरहीनं०' भवाञ्छूरः । भवाञ्च्छूरः । भवाञ्चशूरः । तृतीयरूपे चगागमाभा भवाञ्शूरः ॥ १२ ॥

( प्र० ) शे चगिति । भवान्शूरः इत्यत्र चकि नस्यापदान्तत्वेनानुस्वारे श्चुत्वे च प्राप्ते परत्वादनुस्वारेऽपि यमा यपेऽस्येत्यपदान्तेऽनुस्वारस्य नित्यं यमाभावात् अत एव कुत्वाभावश्च बहिरङ्गत्वेनासिद्धत्वात् । छत्वे कृते संयोगान्तलोपात् भवाञ्छूर इत्येके ननु कुर्वन् शेते इत्यादौ चकि नस्यापदान्तत्वात्परत्वाण्णत्वं स्यादिति चेत् । सत्यम् परशब्दस्येष्टवाचित्वेन क्वचित्पूर्वेणापि परबाधादनुस्वारपरसवर्णौ ॥ १२ ॥

**ङ्णनो ह्रस्वाद्द्विः स्वरे॥** ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भव न्ति स्वरे परे पदान्ते(ख) ।१३। प्रत्यङ् इदं प्रत्यङ्ङिदम् । सुगाण् इह सुगाण्णिह

(क) अत्रायं सङ्ग्रहः श्लोकः—

अछा अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह चक्छत्वचलोपानां विकल्पनात् ॥

ननु कुर्वंस्तिष्ठ कुर्वञ्छेते इत्यत्र अपदान्तत्वान्नस्य चुत्वादनुस्वाराच्च परत्वात् णत्वं प्राप्नोति । सत्यम् अनन्त इत्यन्तरङ्गं निषेधं प्रति बहिरङ्गयोश्चकसकोरसिद्धत्वाश्रयणात्, तच्छ्लक्ष्णमित्यत्रापि चुत्वे कृते कुत्व मप्यसिद्धत्वादेव न ।

(ख) ननु समिहण्डिनावित्यत्र पूर्वपदस्येवोत्तरखण्डस्यापि प्रत्ययलक्षणत्वेन पदत्वात् नस्य द्विर्भव प्राप्नोतीति चेन्न । उत्तरपदस्य प्रत्ययलक्षणेन न पदान्तकार्यमिति 'एदोतोऽतः' इति ज्ञापनात् । अतएव नलो पोऽपि न । अनद्य इत्यादौ तु अनपीत्यादिज्ञापकाद्द्वित्वं न । न लोपस्तु अम् विधिसामर्थ्यान्न ।

राजन् इह राजन्निह । राजन् इदम् राजन्निदम् ॥

( च० ) सूत्रम्—'ङ्णनो ह्रस्वा०'॥ ङ् च ण् च न् च ङ्णन् प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्त्रोर्विसर्गः' । अग्रे ह्रस्वात् पञ्चम्येकवचनान्तम् । पूर्वं 'इडे' 'उ ओ' । द्विः प्रथमैकवचनान्तम् । 'अव्यया०' 'चपा अबे जबाः' ॥ स्वरे इति सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । ह्रस्वादुत्तराः परा ये ङकारणकारनकारास्ते द्विर्भावमापद्यन्ते द्वौ भवत इत्यर्थः । स्वरे परे पदान्ते विषये । अत्र पुनः स्वरग्रहणं विभक्तिस्वरनिषेधार्थम् । प्रत्यङ् अग्रे इदम् ॥ गण संख्याने सुपूर्वः सुष्ठु गणयतीति सुगण् क्विबन्तः । अग्रे इह । राजन् अग्रे इह । सर्वत्रापि द्वित्वम् । 'स्वरहीनं०' प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह ॥ १३ ॥

( प्र० ) ङ्णन इति । यद्यपि कुर्वन्नास्ते इत्यादौ नस्य द्वित्वे पूर्वस्यापदान्तत्वाणत्वप्राप्तिस्तथाप्यवकुर्वन्तरेऽपीत्यत्र वेङ्योरित्यतो वानुवृत्तेर्न । केचित्तु पदान्तस्यैव द्वैधाभावाद्दलितमुद्रादिदले तदीयव्यपदेश इवात्रापि पूर्वस्यापि पदान्तत्वाण्णत्वं नेत्याहुः॥ १३ ॥

छः ॥ ह्रस्वादुत्तरश्छकारो द्विर्भवति (क) ॥ १४ ॥

( च० ) सूत्रम्—'छः' ॥ प्रथमैकवचनान्तम् । एकपदम् । वृत्तिः कण्ठ्या । उदाहरणम् । तव अग्रे छत्रम् । अनेन छस्य द्वित्वम् । तवछ् छत्रमिति स्थितम् ॥ १४ ॥

खसे चपा झसानाम् ॥ झसानां खसे परे चपा भवन्ति (ख) ॥ १५ ॥

तव छत्रं तवच्छत्रम् ॥

( च० ) सूत्रम्—'खसे चपा झसानाम्' ॥ खसे इति सप्तम्येकवचनान्तम् । 'अ इ ए' चपा इति प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्रो०' ॥ झसानामिति षष्ठीबहुवचनान्तम् । 'सुडामः' 'नामि' इति दीर्घः । 'स्वरहीनं०' 'मोऽनुस्वारः' सिद्धम् । झसानां चपा भवन्ति खसे परे । अत्र यथासंख्यगणनात् छस्य तकारः संभवति । परं 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् चकार एव क्रियते । 'स्वरहीनं०' तव च्छत्रमिति सिद्धम् ॥ १५ ॥

दीर्घादपि च वक्तव्यः ॥ दीर्घादुत्तरश्छकारो द्विर्भवति (ग) ॥ १६ ॥

म्लेछः म्लेच्छः । ह्रीछः ह्रीच्छः अपिशब्दाद्दीर्घात्पदान्ताद्वेति वक्तव्यम् ॥ लक्ष्मीछाया लक्ष्मीच्छाया ॥ आङ्माङ्भ्यां च नित्यं वक्तव्यम् ॥ आच्छादयति । माच्छिदत् ॥

( च० ) पक्षान्तरमाह—दीर्घादित्यादि । क्वचित्कस्मिंश्चित्स्थाने दीर्घादुत्तरोऽपि छकारो द्विर्भवति । यथा म्ले अग्रे छः, ह्री अग्रे छः, रूपद्वयेऽप्यनेन द्वित्वे विहिते प्राग्वत् ।

---

( क ) अत्र स्वरे इत्यनुवर्त्त्य विभक्तिव्यत्ययेन स्वरादिति बोध्यम् । 'पदान्ते वा' इत्यनुवर्त्तते । तच्च वाक्यभेदेन सम्बध्यते । विकल्पस्तु व्यवस्थितः । तेन पदान्ते दीर्घादाङ्माङ्वर्जिताद्वा । स्वरादिति किम् । छत्रम् ।

( ख ) झसानामिति किम्, जम्बु । खसे किम्, वेद्मि ।

( ग ) दीर्घात् परः छकारो द्विः स्यादित्यर्थः ।

'खसे चपा झसानाम्' 'स्वरहीनं०' म्लेच्छः । 'म्लेच्छ अव्यक्ते शब्दे' । म्लेच्छयतीति म्लेच्छः । अथवा 'म्लै गात्रविनामे' । म्लायते इति म्लेच्छः । ह्रीच्छः । 'ह्री लज्जायां' ह्रीच्छतीति ह्रीच्छः । एवमाच्छादयति । ह्रीच्छति । ऐच्छत् । माऽच्छिदत् । छोच्छाया इत्यादौ दीर्घात्परस्य छस्य द्वित्वम् ॥ १६ ॥

(प्र०) दीर्घादपीत्यपिशब्दाद्व्यक्तव्यत्वाद्वा आङ्माङमामन्यस्मात्पदान्ताद्दीर्घाद्वा आङ्माङोरपदान्ताच्चदीर्घान्नित्यमिति विवेकः ॥ १६ ॥

**मोऽनुस्वारः** ॥ पदान्ते वर्तमानस्य मकारस्यानुस्वारो भवति हसे परे पदान्ते च (क)॥१७॥ तम् हसति तं हसति । पटुम् वृथा पटुं वृथा कौमारास्त्ववसानेऽप्यनुस्वारमिच्छन्ति ॥ **अवसाने वा** ॥ अवसाने मकारस्यानुस्वारो वा भवति । देवं देवम् ॥

( च० ) सूत्रम्—'मोऽनुस्वारः' ॥ मः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रो०' । मः अग्रे अनुस्वारः प्रथमैकवचनम् । 'स्रो०' । मध्ये । 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' मकारस्य हसे परे, अथवा पदान्ते सत्यनुस्वारो भवति । उदाहरणम् तम्—अग्रे हसति । पटुम् अग्रे वृथा उभयत्राप्यनुस्वारः । तं हसति । पटुं वृथा ॥ पदान्ते इति किम्, गम्यते इत्यादावनुस्वारो न ॥ १७ ॥

( प्र० ) अनुत्यनुस्वारस्य संज्ञापूर्वकत्वेनानित्यत्वारिक्वन्ते राजतौ समो मस्य नानुस्वार इति सम्राडित्यादि ॥ १७ ॥

**नश्चापदान्ते झसे** ॥ मकारस्य नकारस्य चापदान्ते वर्तमानस्यानुस्वारो भवति झसे परे (ख)॥१८॥ यशान्सि यशांसि । पुम्भ्यां पुंभ्याम् ।

(च०) सूत्रम्—'नश्चापदान्ते झसे'। नः षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विसर्गः' । अग्रे च प्रथमैकवचनान्तम् । 'अव्यया०' 'विसर्जनीयस्य०' 'स्तोः श्चुभिः श्चुः' सस्य शः । 'स्वरहीनं०' । अग्रे अपदान्ते । सप्तम्येकवचनान्तम् । 'अ इ ए' 'सवर्णे०' ।

---

( क ) अत्र लघुभाष्यम् —

मोम् इति सूच्यताम् । अत्राकार उच्चारणार्थः । ततः परस्यादेशः स्यादिति चेन्न, संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थमिदम् । अनुस्वार इति प्राचां संज्ञा । तेन सम्राडिति सिद्धम् । वस्तुतस्तु—मोम् इति कर्त्तुं शक्यम् 'अम्शसोः' इत्यादिनिर्देशेनास्यानित्यत्वज्ञापनात् सम्राडित्यादि सिद्धम् ।

अत्रेदमवधेयम्—

मोम् इति कृते ओ अव् इत्यादिष्विव म इत्यस्य प्रथमान्तत्वमाशंक्य ओकारस्य विधेयत्वाशङ्काया अनिवार्यत्वादनुस्वारस्य तत्सन्देहनिराकरणायावश्यं वक्तव्यत्वात् ।

यत्तु—अत्र म् इति योगंविभज्य तत्र साकं चानुवर्त्त्य क्वचिन्मस्य समागम इति व्याख्येयम्, तेन पुंस्कोकिलः पुंस्पुत्र इत्यादि सिध्यतीत्युक्तम्, तत्तु पुंसोऽत्र परे खपे संयोगान्तस्य लोप इति स्वोक्त्या विरोधादुपेक्ष्यम् ।

( ख ) अत्र मकारस्य समुच्चयार्थश्चकारः अत्र च हो झभा इत्यतो हकारोऽनुवर्त्त्यः स च विभक्तिविपरिणामेन सप्तम्यन्तो बोध्यः, तेन स्वनडुवाहि इति ।

झसे सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । चकारः पूर्वोक्तस्य । 'मोऽनुस्वारः' इत्यतो म इत्यस्यानुकर्षणार्थः । तेनोभयोरप्यपदान्ते पदमध्ये वर्तमानयोर्नकारमकारयोर्झसे परे अनुस्वारो भवति । यशस् प्रथमाबहुवचनम् । 'जश्शसोः शिः 'नुमयमः' 'मिदन्त्या. स्स्वरात्परो०' 'न्सम्महतौ०' ततो यशान् अग्रे सि । पुम् अग्रे भ्याम् । उभयत्राप्यनुस्वारः । यशांसि। पुंभ्याम् । एवं पयान् अग्रे सि पयांसि ॥ १८ ॥

**ञमा यपेऽस्य वा ॥** अनुस्वारस्य ञमा वा भवन्ति यपे परे ॥१९॥ नन्वेकस्यानुस्वारस्य पञ्च ञमाः प्राप्ताः केन क्रमेण भवन्ति ? अस्य यपस्य सवर्णाः (क) । शांत शान्तः ॥

**वा पदान्ते ॥** पदान्ते वर्तमानस्यानुस्वारस्य ञमा वा भवन्ति यपे परे॥२०॥ तं करोति तङ्करोति । तं तनोति तन्तनोति । तं जानाति तञ्जानाति ॥

**वर्ग्ये वर्गान्तः ॥** वर्ग्ये परे वर्गान्तो भवति ।२१। वर्गाभावे पररूपं स्यात् । संयन्ता सँय्यन्ता । संवत्सरः सँव्वत्सरः यंलोकं यँल्लोकम् ॥

**मनयवलपरे हकारेऽनुस्वारस्य ते यथाक्रमं भवन्ति ॥२२॥** किं ह्मलयति किम्ह्मलयति । किं ह्नुते किन्ह्नुते । किं ह्यः कियँह्यः । किं ह्वलयति किवँह्वलयति । किं ह्लादयति किलँह्लादयति (ख) ॥

**ङणोः ककुटग्वा शरि ॥** ङकारणकारयोः शषसे परे ककुटकावागमौ वा स्तः ॥२३॥ प्राङ् षष्ठः प्राङ्क्षष्ठः प्राङ्षष्ठः । सुगण् षष्ठः सुगण्ट्षष्ठः सुगण्षष्ठः ॥ ॥

**मः स्वरे ॥** अनुस्वारस्य मकारो भवति स्वरे परे ॥२४॥ किं अस्ति किमस्ति ॥

---

(क) 'यमा यपेऽस्य' इत्यत्र अस्येति किमर्थम्, अनुस्वारस्य परामर्शार्थमिति चेन्न तस्यानुवृत्त्यैव लाभात् । न च प्रथमान्तस्यानुवृत्तस्य अनुस्वार इत्यस्य षष्ठीविपरिणामार्थमिति वाच्यम् । यमा इत्यादेशापेक्षया अर्थात् षष्ठीविपरिणामसम्भवात् । एवं तर्हि यपपरामर्शार्थम् ।

अस्य यपस्येति । अनुनासिकस्यानुस्वारस्य सदृशयपस्य सवर्णा ञमा भवन्तीत्यर्थः । तेन रेफो न भवति अनुस्वारसादृश्याभावात् । न च सादृश्याभावेऽपि वचनात् स्यादिति वाच्यम्, यपे इत्यस्य जातिपरत्वेन यपजातीये सवर्णे यमजातीयस्यानुस्वारसदृशस्य विधानेन वचनस्य चरितार्थत्वात् ।

यत्तु यमोऽस्येति सूत्रं युक्तम्, अनुस्वारेण झसे हसे इति वा विवक्षणीयम् । अनुस्वारस्य सदृशझसहसयो सवर्ण आदेशो भविष्यतीति व्यर्थमिह यपे इति । शषसहेषु तु नातिव्याप्तिः, तेषां यमे सवर्णाभावात् । इति † तत्रेदमवधेयम् । हसाक्षेपेणैव तदन्तर्गतस्य झसस्यापेक्षस्याशक्यत्वात् । किञ्च अनुवृत्तिलब्धेनानुस्वारेण हसाक्षेपे पदान्तस्याक्षेपाच्च ।

(ख) 'ह्मल ह्मल सञ्चलने' ह्नुङ् अपनये' । 'यवलमनपरे' इत्यत्र वेति व्यवस्थितविभाषाश्रयणात् शसे चपस्य द्वितीया वा । टनात्सस्य वा धुट् । शसे ङ्णोः कुक्टकौ वा । पकारे परे नृमकारस्य न स्वा इत्यादि संगृहीतम् ।

( च० ) सूत्रम्—'ञमा यपे०'। ञमाः प्रथमाबहुवचनान्तम् 'सवर्णे०' 'सोर्विसर्गः' ञमाः अग्रे यपे । सप्तम्येकवचनान्तम् । 'अ इ ए' प्राक् 'आदद०' विसर्गलोपः । अग्रे अस्येति षष्ठ्येकवचनान्तम् । 'त्यदादेष्टेरः स्यादौ' 'दस्य मः' 'स्मय' इदमः स्थाने अ । 'एदो तोऽतः' ॥ वा तृतीयैकवचनान्तम् । अव्यया०' ॥ अनुस्वारस्य ञमा वा भवन्ति । पक्षे अनुस्वार एव तिष्ठति यपप्रत्याहारे परे । कथमित्याह—अस्याग्रे वर्तमानस्य यपस्य सवर्णा एव ञमा भवन्ति । अनुस्वारस्य सानुनासिक्यात् ये सानुनासिका ञमास्ते एव भवन्ति । 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् वर्ग्ये अक्षरे परे तद्वर्गस्य पञ्चमाक्षरं भवति । अन्यत्र यादृशो यपोऽग्रे भवति तादृश एव क्रियते । यथा कवर्गे परे ङकारः । चवर्गे परे ञः । टवर्गे परे णः । तवर्गे परे नः । पवग परे मः । यवलेषु परेषु यवला एव स्युः । उदाहरणम् । तम् अग्रे करोति । तम् अग्रे तनोति । ककारे परे अनुस्वारस्य ङः । तकारे परे अनुस्वारस्य नः । 'स्वरहीनं०' तङ्करोति । तन्तनोति । सं अग्रे यन्ता । अत्रानुस्वारस्य यः । अग्रे च 'अन्तस्था द्विप्रभेदाः' इति सानुनासिकत्वात् यस्योपरि अर्धचन्द्राकारो बिन्दुः । सय्यँता । एवं संवत्सरः सव्वँत्सरः पुंलिङ्गः पुँल्लिङ्गः ॥ अत्र केचित् । 'स्वरे मः' अनुस्वारस्य मकारो भवति स्वरे परे । इति सूत्रं पठन्ति परं स्वरे परे पूर्वं 'मोऽनुस्वारः' एव न भवति । किंतु स्वरहीनमेव स्यात् । कृष्णो मां अवतु कृष्णो मामवतु । जिनं ईडे जिनमीडे । शं अस्ति शमस्ति । अस्माकं इह अस्माकमिह 'ङ्णोःकुक्टुक् वा' ङकारणकारयोः शषसेषु परेषु क्रमेण कुक्टुक् आगमौ स्तः । प्राङ् षष्ठ प्राङ्क्षष्ठः । लिङ्सु लिङ्क्षु । सुगण् षष्ठः । सुगण्ट्षष्ठः ॥ २४ ॥

( प्र० ) यमा इति । शे चर्वेत्यतो वानुवृत्तेस्तस्य च व्यवस्थितार्थत्वादपदान्ते अङ्कित इत्यादौ नित्यम् । त्वं करोषीत्यादौ पदान्ते च वा वाशब्दाल्लोपाद्वा मनयवलपरे हकारेऽनुस्वारस्य यथासंख्येन मनयवला वा भवन्ति । ततश्च किम्ह्मलयति—किंह्मलयति । किंह्नुते—किन्ह्नुते । किंय्ह्यः—किंय्ह्यः । किवँ ह्वलयतिकिंह्वलयति । किल्ँह्लादयतिकिंह्लादयतीत्यादयो ज्ञेयाः । प्रचुरप्रयोगाभावाच्चेह नोक्ताः ॥ २४ ॥

इति सारस्वतप्रसादे व्यञ्जनसन्धिः ॥ ६ ॥

**ꣳ छन्दसि ॥ अनुस्वारश्छन्दसि ꣳकारमापद्यते शषसहरेफेषु परतः ॥२५॥ चतुस्त्रिꣳशद्वाजिनः । सामयजूꣳषि । वयꣳस्याम । सिꣳह्मसि । देवानाꣳराज(क)॥**

**इति व्यञ्जनसंधिप्रक्रिया ॥ ५ ॥**

( च० ) सूत्रम्—'ꣳ छन्दसि' ॥ अनुस्वारः ꣳकारमापद्यते शषसहरेफेषु परतः छन्दसि वेदे । हंसः हꣳसः । शुचीं षत । शुचीꣳषत । वयं स्याम वयꣳस्याम । संहिता सꣳहिता । तं रविः तꣳरविः । इति चतुर्थसंध्यनुसारेण व्यञ्जनसन्धेरवचूरिलेशतो लिखिता ॥२५॥ ॥ इति व्यञ्जनसन्धिः ॥ ६ ॥

---

( क ) छन्दसि—वैदिकप्रयोगे । इति मनोरमायां व्यञ्जनसन्धिः ।

# * विसर्गसन्धिः ॥६॥ *

अथ विसर्गसन्धिर्निगद्यते ॥

**विसर्जनीयस्य सः** ॥ विसर्जनीयस्य सकारो भवति खसे परे ।१। कः तनोति कस्तनोति(क) ॥

( च० ) अथेति । व्यञ्जनकार्यकथनानन्तरं विसर्गाणां सन्धिर्निगद्यते कथ्यते । द्वौ बिन्दू विसर्गः । सूत्रम्—विसर्जनीयस्य सः॥ विसर्जनीयस्य षष्ठ्येकवचनान्तम्। 'कस्य' अग्रे सः प्रथमैकवचनान्तम् । 'सोर्विसर्गः' सिद्धम् । विसर्जनीयस्य सकाररकारोत्पन्नस्य कृष्णसर्पचक्षुराकारबिन्दुद्वयरूपस्य खसे परे सकारो भवति । श्लोको यथा—

'शृङ्गवद्वालवत्सस्य कुमारीस्तनयुग्मवत् ।
नेत्रवत्कृष्णसर्पस्य स विसर्ग इति स्मृतः' ।

उदाहरणम्—कः अग्रे तनोति अनेन विसर्गस्य सकारः। 'स्वर०' कस्तनोति ॥ १ ॥

( प्र० ) विसर्जनीयस्य स इति। अद्परस्य विसर्जनीयस्योत्वरेफलोपशादिविशेषविधेः परिशेषत्वात् खसपरत्वोक्तिः ॥ अत्रापि वानुवृत्तेः ॥ १ ॥

**शषसे वा** ॥ विसर्जनीयस्य वा सकारो भवति शषसे परे(ख) ॥२॥ कः शेते कश्शेते कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुः

( च० ) सूत्रम्—'शषसे वा' ॥ द्विपदं । विसर्जनीयस्य शषसेषु परेषु शषसा एव वा भवन्ति । पक्षे विसर्जनीय एव तिष्ठति । कः शेते कश्शेते । कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुः । क्षेपकसूत्रमिदम् ॥ २ ॥

( प्र० ) शषसे वेति । कः शेते-कश्शेते । कः षण्ढः कष्षण्ढः । कः साधुः कस्साधुरित्यादि । तथा कः त्सरुरित्यादौ शसपरे खपे च सो न भवत्येव । तथा खसे वा विसर्गलोपात् हरिस्स्फुरति-हरिः स्फुरतीत्यादि ॥ २ ॥

**कुप्वोः ≍क≍पौ वा** ॥ विसर्जनीयस्य कवर्गपवर्गसम्बन्धिनि खसे परे≍क≍पौ वा भवतः ।३। कपावुच्चारणार्थौ । कः करोति क≍करोति । कः

---

( क ) आसन्धिसमाप्तीदं षष्ठ्यन्तमधीक्रियते। परिशेषात् खसे एवास्य प्रवृत्तिः। अन्यत्र तु उत्तरसूत्रैस्तत्र तत्र बाधः विसर्गस्य स इति नोक्तम्, पर्यायशब्दानां गौरवलाघवयोरनपेक्षत्वात् ।

यत्तु—प्राचामुपहासार्थं विसर्जनीयादिग्रहणं प्राञ्चो लाघवं न जानन्तीत्युक्तम् , तत्रेदं बोध्यम् , प्राञ्चोऽत्र के ? विवरणकर्त्तारः, सूत्रकर्त्तारो वा । आद्ये सूत्रस्थगौरवे तेषामुपहासासम्भवात्। द्वितीये सरस्वत्याः सूत्रकर्तृत्वेन तदुपहासे प्रत्यवायसम्भवात् ।

'न निन्देत् मनसावाचा ।
सर्वव्याधिपराङ्मुखः' इति निषेधदर्शनात् । अः सः इति सूत्रणीये यद्विसर्जनीयस्येत्युक्तं तत् संज्ञापूर्वकत्वेन सस्यानित्यताबोधनार्थम् । तेनः कः साधु इत्यादि सिद्धम् ।

ननु 'कुप्वोः ≍क≍ पौ वा' इत्यस्य वैकल्पिकत्वात् पक्षे सत्वं कुतो नेति चेन्न, शेषाः कार्य्ये इति निर्देशेन "≍क≍पौ" इत्येताभ्यां मुक्ते पक्षे सत्वप्रवृत्त्यभावस्य ज्ञापनात् ।

( ख ) कः शेते चुत्वं कश्शेते । कः षण्ढष्टुत्वं कष्षण्ढः ।

खनति क≍खनति । कः पचति क≍पचति । कः पठति क≍पठति ॥ कः फलति क≍फलति ॥

( च० ) पुनर्विशेषमाह—सूत्रम्—'कुप्वोः≍क≍पौ वा' ॥ कुश्च पुश्च कुपू तयोः कुप्वोः षष्ठीद्विवचनान्तम् । 'उवम्' 'स्वरहीनं०' 'स्रोर्विसर्गः' । अग्रे ≍कश्च ≍पश्च ≍क≍पौ । प्रथमाद्विवचनान्तम् । 'ओ औ औ' । वा तृतीयैकवचनान्तम् । 'अव्यया० विसर्जनीयस्य कवर्गपवर्गसम्बन्धिनिकखपफरूपे खसे परे ≍क≍पौ जिह्वामूलीयोपध्मानीयसंज्ञौ यथासंख्यं वा भवतः । पक्षे विसर्जनीय एव तिष्ठति । अयमर्थः—कखयोः परयोः ≍कः । पफयोः परयोः ≍पः । कपौ ककारपकारावुच्चारणार्थौ अन्यथोच्चरितुमशक्यत्वात् । अतो वज्राकारगजकुम्भाकारौ तिष्ठतः । कः अग्रे करोति । अ० विसर्गस्य ≍कः । क≍करोति। कः अग्रे पचति । क≍पचति । एवं क≍खनति। क≍फलति॥३

( प्र० ) कुप्वोरिति । अत्रापि वाग्रहणात्कस्कादिषु≍क≍पयोरभावे औत्सर्गिकः सः । कस्कादयश्च विहितलक्षणाः प्रयोगतो ज्ञेयाः । कपाविताविति केवलयोर्वज्राकृतिगजकुंभाकृतिवर्णयोरुच्चारणासम्भवात्कपौ उपात्तावित्यर्थः ॥ ३ ॥

**वाचस्पत्यादयः संज्ञाशब्दा निपातात्साधवः** ।४। वाचस्पतिः बृहस्पतिः तस्करः कारस्करः पारस्करः भास्करः हरिश्चन्द्रः। इत्यादि(क)

( च० ) वाचस्पत्यादयः संज्ञाशब्दाः संज्ञावाचकाः कस्यापि नामप्रतिपादकाः शब्दास्तेऽपि निपातात्साधवः निपातसिद्धा एव ज्ञेयाः । यथा वाचस्पतिः । अत्र 'कुप्वोः≍क≍पौ वा' इत्यस्य प्राप्तावपि विसर्जनीयस्य सकार एव निपात्यते । एवं भास्करः श्रेयस्करः । श्रेयस्कामः । अयस्कान्तः । अयस्कुम्भः । अयस्पात्रम् । तमस्काण्डः । दिवस्पतिः । नमस्कारः । अहस्कारः । बृहस्पतिः । तस्करः ॥ शास्त्रान्तरे त्वित्थं हृश्यते प्रक्रियाकौमुद्याम्—'तद्बृहतोः करपत्योश्चौरदेवतयोः सुडागमस्तलोपश्च ।' तत् अग्रे करः । अनेन सुडागमः । तलोपः । तस्करः । बृहत् अग्रे पतिः । सकारागमः । तलोपः । बृहस्पतिः ॥ चकारात् हरिश्चन्द्रः । मस्करः मस्करी, [ परिव्राजकवेण्वोः ] । कांस्कान् । कस्कः । कस्कादयः । एवमश्वत्थकपित्थदधित्थादिषु स्थाधातोः सस्य तः इत्यादयः साधवः सिद्धा एव ज्ञेयाः । यल्लक्षणैर्नोपपन्नं तत्सर्वं निपातात्सिद्धमेवेति लक्षणसूत्रमन्तरेण लोकप्रसिद्धरूपोच्चारणं निपातनम् ॥ ४ ॥

**अह्नो रोऽरात्रिषु** ॥ अह्नो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिवर्जितेषु परतः ।५। अहः पतिः अहर्पतिः । अहः गणः अहर्गणः । अहः अत्र अहरत्र । अरात्रिष्विति विशेषणाद्रूपरात्रिरथन्तरेषु न रेफः अहः रात्रं

---

( क ) आदिशब्दात्—

कौतुस्कुतः । कान् कान्—कांस्कान् । कस्कः । पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । इत्यादि प्रयोगानुसारेण ज्ञेयम् । आकृतिगणोयम् । अविहितलक्षणः सकारो वाचस्पत्यादिषु द्रष्टव्यः ।

अहोरात्रम्। अहः रूपं अहोरूपम्। अहः रथन्तरं अहोरथन्तरम्(क) ॥५॥

(च० ) सूत्रम्—'अह्नो रोऽरात्रिषु' ॥ अह्नः षष्ठ्येकवचनान्तम्। 'अल्लोपः स्वरे' 'स्रोर्विसर्गः'। अह्नः अग्रे रः प्रथमैकवचनान्तम्। 'स्रोर्विसर्गः' मध्ये 'हवे' 'उ ओ'। रः अग्रे अरात्रिः 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' न रात्रयः अरात्रयस्तेषु अरात्रिषु सप्तमीबहुवचनान्तम्। 'किलात्पः सः' ॥ अहन्शब्दसम्बन्धिनो विसर्जनीयस्य पदान्ते रो भवति रात्र्यादिवर्जितेषु रात्र्यादिभिन्नेषु शब्देषु परेषु सत्सु। रकारादिरात्रिरूपरथन्तरादिवर्जितेष्वित्यर्थः। उदाहरणम्—अहन् पतिः। अहन् अग्रे गणः। 'अह्नः' इति सूत्रेण उभयत्रापि नस्य सः। 'स्रोर्विसर्गः' अनेन सूत्रेण विसर्गस्य रः। 'राद्यपो द्विः' अलतुम्बिका०। अह्नो दिवसस्य पतिः अहर्पतिः। अह्नां गणः अहर्गणः। अत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तत्वं ग्राह्यम्। अरात्रिष्विति विशेषणात् रात्र्यादिवर्जनात्मकम्। अहन् अग्रे रात्रम्। 'अह्नः' इति नस्य सः। अरात्रिष्विति कथनात् रनिषेधः। ततो 'हवे' 'उ ओ' अहोरात्रम्। एवमहोरूपम्। प्रशस्तमहः अहोरूपम्। 'अहोरथन्तरं साम श्रेष्ठं साम रथन्तरम्'। अहोरथन्तरम्। पदान्त इति किम्। अहोभ्याम् ॥ ५ ॥

(प्र० ) अह्न इति। पदान्त इत्यनुवर्तते वाशब्दश्च। ततश्चाहोभ्यामित्यादावपदान्तेन वा शब्दस्य च व्यवस्थितार्थत्वादहरहः अहर्गणइत्यादौ नित्यं अहर्पतिरहः पतिरित्यादौ वा। अरात्रिष्विति बहुवचनाद्रूपरात्रिरथन्तररम्यादिषु रेफादिषु रेफाभावः। अहोरूपम्। अहोरात्रः। अहोरथन्तरम्। अहोरम्यम् ॥ ५ ॥

अतोऽत्युः ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवति अति परतः(ख)। एदोतोऽतः। कः अर्थः कोऽर्थः ॥ ६ ॥

(च० ) सूत्रम्—'अतोऽत्युः' ॥ अतः पञ्चम्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विसर्गः'। अतः अग्रे अति सप्तम्येकवचनम्। 'स्वरहीनं०'। मध्ये। 'अतोऽत्युः' 'उ ओ' 'एदोतोतः'। अग्रे उः प्रथमैकवचनान्तम्। 'स्रोर्वि०' पश्चात् 'इ यं स्वरे' 'स्वरहीनं०' सिद्धिः। वृत्तिः कण्ठ्या। अति परतः अकार एव परे इत्यर्थः। तपरकरणं तावन्मात्रग्रहणार्थमुभयत्रापि सवर्णनिषेधार्थम्। उदाहरणम्—कः अग्रे अर्थः। अनेन उकारः। 'उ ओ' 'एदोतोतः' कोऽर्थः ॥ ६ ॥

(प्र० ) अत इति। यद्यपि कः अर्थ इत्यादावादवे लोपश् इति लोपशपि प्राप्नोति, तथापि "सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलवान्" इत्युक्तविधेर्निरवकाशत्वादुत्वम्। उत्वे चान्तरङ्गत्वादोकारैकादेशे पश्चादेदोताऽत इत्यलोपः ॥ ६ ॥

हवे ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवति हवे परे। कः गतः को गतः। देवः याति देवो याति। मनः रथः मनोरथः ॥ ७ ॥

---

(क) रूपरात्रिरथन्तरेषु न रेफ इति अधिकः पाठः।

(ख) अत इति किम्, अग्निरत्र। तपरः किम्, देवा अत्र। सुश्लोतः ३ अत्र। दूरादाह्वने इति प्लुतः। अतीति किम्, देवं इह। तपरः किम्, देव आगतः। तिष्ठतु पय अ३ग्निदत्तेत्यत्र गुरोरनृत इति प्लुतः।

( च० ) सूत्रम्—'हबे' ॥ सप्तम्येकवचनम् । 'अ इ ए' ॥ वृत्तिः सुगमा । उदाहरणम् । कः गतः । अत्र अकारात्परस्य विसर्जनीयस्य हबे परे उकारः । ततः 'उ ओ' को गतः । देवः याति । 'हबे' 'उ ओ' देवो याति ॥ मनः रथः । 'हबे' 'उ ओ' मनोरथः ॥ ७ ॥

**आदबे लोपश्** ॥ अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । देवाः अत्र देवा अत्र ॥ वाताः वाताः वाता वाताः ॥ ८ ॥

( च० ) सूत्रम्—'आदबे लोपश्' ॥ आत् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे दीर्घः' आत् । अबे सप्तम्येकवचनम् । 'अ इ ए' मध्ये । 'चपा अबे जबाः' ॥ लोपश् प्रथमैकवचनम् । 'हसे पः से०' ॥ यदि वा अश्च आ च आ । पञ्चम्येकवचनान्तम् । हस् । 'नपुंसकस्य' इति ह्रस्वः । 'ङसिरत्' अवर्णादकाराकाररूपादुत्तरस्य विसर्जनीयस्य लोपश् भवति अबे परे ॥ उदाहरणम्—देवाः अग्रे अत्र । वाताः अग्रे वाताः । उभयत्रापि विसर्गलोपः । देवा अत्र । वाता वाताः ॥ एवं कः इह क इह ॥ ८ ॥

( प्र० ) आदिति । ननु नामिनः परस्य विसर्जनीयस्य विशेषविधेर्हसाच्च तस्यासम्भवात्परिशेषादेवावर्णपरत्वप्राप्तावाद्वचनं व्यर्थमिति चेत् नैवम् ॥ ८ ॥

**स्वरे यत्वं वा** ॥ अवर्णात्परस्य विसर्जनीयस्य यत्वं वा भवति स्वरे परे । देवाः अत्र देवायत्र देवा अत्र ॥ ९ ॥

( च० ) पुनर्विशेषमाह—सूत्रम्—'स्वरे यत्वं वा' ॥ स्वरे सप्तम्येकवचनान्तम् । 'अ इ ए' । यत्वं प्रथमैकवचनम् । 'अतोऽम्' 'अम्शसो०' 'मोऽनु०' ॥ वा तृतीयैकवचनम् । 'अव्ययां०' ॥ वृत्तिः कण्ठ्या । वाग्रहणात्पक्षे 'आदबे लोपश्' देवाः अग्रे अत्र । एकत्र यत्वम्—'स्वरहीनं०' देवायत्र । अन्यत्र लोप देवा अत्र ॥ ९ ॥

( प्र० ) स्वरे यत्वं वेत्यत्रावर्णात्परस्यैव विसर्जनीयस्य यत्वविध्यर्थत्वात् । अन्यथा हरिरत्रेत्यादौ यत्वविधिप्रसङ्गात् ॥ ९ ॥

**भोसः** ॥ भोस् भगोस् अघोस् इत्येतस्मात्परस्य विसर्जनीयस्य लोपश् भवत्यबे परे । भोः एहि भो एहि । भगोः नमस्ते भगो नमस्ते । अघोः याहि अघो याहि ॥ १० ॥

**यो वा स्वरे** ॥ भोयेहि ॥ ११ ॥

( च० ) सूत्रम्—'भोसः' ॥ भोस् शब्दस्य पञ्चम्येकवचनम् । 'स्वरहीनं०' 'सो विसर्गः' । जातीयग्रहणेन तज्जातीयग्रहणम् । यद्वा भोस् इत्यत्र आद्यन्तग्रहणेन प्रत्याहारः सूचितस्तेन भोस् , भगोस् , अघोस् , इत्येतस्मात्पदत्रयात्परस्य विसर्जनीयस्याबे परे लोपश् भवति । उदाहरणम्—भोः अग्रे एहि आगच्छ । भगोः अग्रे नमस्ते । हे भगो हे भगवन् ते तुभ्यं नमः । अघोः अग्रे याहि । हे अघो हे पाप याहि गच्छ । सर्वत्र 'भोसः' इति सूत्रेण विसर्गलोपश् ॥ १० ॥

( प्र० ) भोस् भगोस् अघोस् इति सूत्रे भवद्भगवदघवच्छब्दनिपातानां प्रत्याहारे

ग्रहणात्त्रिभ्योऽप्येभ्यो विसर्जनीयस्य लोपश् स्वरे यत्वं वेत्यस्यानुवृत्तेर्भोभगोअघोअपूर्वस्येत्याद्यपि यकारस्य लघुप्रयत्नतरं च लोकात् ॥ १० ॥

**नामिनो रः ॥** नामिनः परस्य विसर्जनीयस्य रेफो भवति अवे परे(क) । अग्निः अत्र अग्निरत्र । बटुः यजते बटुर्यजते ॥ १२ ॥

**उषसो रो बुधे ।** उषसो विसर्जनीयस्य रेफो भवति बुधे परे । उषः बुधः उषर्बुधः ॥ १३ ॥

( च० ) सूत्रम्—'नामिनो रः' ॥ नामिनः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्नोर्विसर्गः' । अग्रे रः । 'स्नोर्विसर्गः' 'उ ओ' 'नामिनो रः' । अवर्णवर्जस्वरात्परस्य अवे परे रेफो भवति । उदाहरणम्—अग्निः अग्रे अत्र । अनेन सूत्रेण रेफः । 'स्वरहीनं०' अग्निरत्र । बटुः अग्रे यजति । 'नामिनो रः' इति रेफ । 'शघपो ह्विः' जलतुम्बिका० बटुर्यजति । बटुर्ब्राह्मणो यजति यज्ञं करोति । एवं पटुरत्र वर्तते ॥ १२ ॥

( प्र० ) नामिनः इति । यद्यपि हसेभ्यो विसर्जनीयस्यासम्भवादवर्णात्परस्य चोत्वलोपशोः सत्वात्परिशेषादेव नामिन इति सिद्धौ नाम्युपादानमपार्थकं तथापि रेफप्रकृतिकस्य खपे वेत्यत्र नामिन एव यथा स्यान्न प्रातरित्यादावित्याद्यर्थम् । यत्तु नामिग्रहणादत्र प्रथमैकवचनान्तत्वमुत्तरत्र षष्ठ्येकवचनान्तत्वमवसीयत इति । तदसत् । तदुपादानेऽपि सन्देहसत्त्वाद्व्याख्यानतो विशेषप्रतिपत्तेश्च तुल्यत्वात् प्रातःप्रातरित्यादौ कल्पनान्तरापाताच्च ॥ १२ ॥

**रेफप्रकृतिकस्य खपे वा ॥** नामिनः परस्य रेफप्रकृतिकस्य विसर्जनीयस्य खपे परे वा रेफो भवति(ख) । गीः पतिः गीर्पतिः गीᳲपतिः । धूः पतिः धूर्पतिः धूᳲपतिः ॥ १४ ॥

(च०) सूत्रम्—'रेफप्रकृतिकस्य०' ॥ रेफप्रकृत्या उत्पन्नो वा रेफ एव प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य। षष्ठ्येकवचनम् । 'ङस्य'। खपे सप्तम्येकवचनम् । 'अ इ ए' । वा तृतीयैकवचनम् । 'अव्यया०' रेफप्रकृतिकस्य विसर्जनीयस्य वा रेफो भवति खपे परे । उदाहरणम्—गिर् अग्रे पतिः । 'व्रोर्विहसे' गि इत्यस्य गीः 'स्नोर्विसर्गः'

---

(क) ननु नामिन इति किमर्थम्, अवर्गाल्लोपशादिविधानेन हसाद्विसर्गासम्भवेन च तस्यैव परिशेषात् ।

उच्यते । 'नामिनो रः' इत्यत्र योगविभागार्थं नामिग्रहणम् । तथा च वाक्यभेदेन व्याख्यानम् । नामिन इत्येको योगः, तत्र खपे वेति चानुवर्त्य र इति षष्ठ्यन्तं च कृत्वा वाक्यभेदेन व्याख्येयम् ।

यत्तु नामिन इति योगविभागे आदवे लोपाशीत्यतोऽवे लोपश् इति चानुवर्तते । क्वचिन्नामिनः परस्य विसर्गस्यावे लोपश् । तेन 'सेमां भूम्याददे इत्यादिसिद्धमिति प्राचीनाः प्राहुः, तन्न, सेमामित्यादेश्छान्दसत्वात् । छन्दसि दृष्टानुविधिरित्यस्योक्तत्वात् । सेमां भूम्याददे इत्यत्रापि भूमिशब्दस्य कृदन्तत्वेन कृदिकारादिति ईपि कृते 'हसेप' इति सिलोपे इष्टसिद्धेः ।

(ख) 'रेफप्रकृतिकस्य' इति सूत्रं वक्तुं नोचितम्, 'र' इति सूत्रार्थेनैव तद्गतार्थम्।

गीः । 'रेफप्रकृति०' अनेन एकत्र रेफः । 'राद्यपो द्विः' 'जलतुम्बिका०' । अन्यत्र 'कु-प्वोः≍क≍पौ वा' गीर्पतिः । गो≍पतिः । गोःपतिः । एवं रूपत्रयम् । एवं धूर्पतिः धू≍पतिः धूःपतिः इत्यादि ॥ १४ ॥

( प्र० ) रेफप्रकृतिकस्येत्यत्र वाशब्दस्य व्यवस्थिताव्यवस्थितार्थत्वेन चिकीः करोतीत्यादावनतिप्रसङ्गः । वानुवृत्तेर्लोकाद्वा । उपर्बुध इत्यादावुपसो नित्यं बुधे रः ॥१४॥

**रः ॥** रेफसंबन्धिनो विसर्जनीयस्य रेफो भवति अबे परे । प्रातः अत्र प्रातरत्र । अन्तः गतः अन्तर्गतः ॥ १५ ॥

( च० ) सूत्रम्—'रः' ॥ षष्ठ्येकवचनान्तम् । 'स्वरहीनं' 'स्रोर्विसर्गः'॥ रेफसंबन्धिनो रेफाज्जातस्य विसर्जनीयस्य रेफो भवति अबप्रत्याहारे परे । उदाहरणम्—प्रातर् अग्रे अत्र । अन्तर् अग्रे गतः । उभयत्रापि 'स्रोर्विसर्गः' । ततः 'रः' इत्यनेन नरपि रेफः । 'स्वरहीनं०' प्रातरत्रागन्तव्यम् । अन्तर्गतः । एवं स्वः गतः स्वर्गतः । पुनः आगतः पुनरागतः ॥ १५ ॥

**रि लोपो दीर्घश्च ॥** रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः(क) । पुनः रमते पुना रमते । शुक्तिः रूप्यात्मना भाति शुक्ती रूप्यात्मना भाति ॥ १६ ॥

( च० ) सूत्रम्—'रि लोपो०' ॥ रि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' । अग्रे दीर्घः । पूर्वम् । 'हवे' 'उ ओ' । दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' । दीर्घः अग्रे च प्रथमैकवचनान्तम् । 'अव्यया०' प्राव 'विसर्जनीयस्य सः' 'स्तोः श्चुभिः श्चुः' सिद्धम् । सूत्रं चतुःपदम् । रेफेति वृत्तिः सुगमा । पुनः अग्रे रमते । 'रः' इति रेफः । 'रि लोपो०' इति रलोपः, पूर्वस्य च दीर्घः । इत्यस्य ना । शुक्तिः अग्रे रूप्यात्मना भाति 'नामिनो रः' रि लोपो०' इति रलोपः, पूर्वस्य च दीर्घः । शुक्ती रूप्यात्मना भाति । शुक्तिः रजताकारेण भासते इत्यर्थः । एवं हरी राजते । शंभू रमते ॥ १६ ॥

**सैषाद्धसे ॥** सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपश् भवति हसे परे(ख) । सः चरति स चरति । एषः हसति एष हसति ॥ १७ ॥

( च० ) सूत्रम्—'सैषाद्धसे' ॥ स च एष च सैषं तस्मात् । पञ्चम्येकवचनान्तम् । 'हसिरत्' 'सवर्णे०' । हसे सप्तम्येकवचनान्तम् । 'अ इ ए' मध्ये । 'हो झभाः' 'चपा अबे०' । अत्र समासे कृते 'तदेतदोर्हसे' इति सम्भवेऽपि 'सैषाद्धसे' इति यत्सूत्रं कृतं ततस्तैरेतैः सकः एषकः । न सः असः इत्यादौ हसे परे विसर्गलोपप्राप्तिनिवारणार्थमित्यर्थः । केचित्पुनराहुः—स इति पृथक्पदं पञ्चम्येकवचनान्तं साङ्केतिकम् । एषात्पञ्चम्येकवचनम् । हसे सप्तम्यन्तम् । स एषात् इत्यत्र 'आदवे लोपश्' इति विसर्गलोपं विधाय पश्चात् 'ए ऐ ऐ' ॥ १७ ॥

---

( क ) अत्र सूत्रे चकारो विधेययोर्लोपदीर्घयोः समुच्चयस्य द्योतकः ।

( ख ) सं इति एष इति च कृतात्वसत्वस्य तच्छब्दस्य एतच्छब्दस्य चानुकरणम्, अनुकार्यानुक

( प्र० ) सैषादिति । सश्च एषश्च सैषं तस्मात् । अत्र यद्यपि तदेतदोर्ग्रहणे विभक्तिलोपे निमित्ताभावे नैमित्तिकस्याप्यभावात्तदेतदोर्हस इति स्यात् तैरेतैरित्यादावपि लोपप्राप्तिश्च सकारएषशब्दमात्रग्रहणे सो नः पुंसः एषणं एट् तस्य एषः इत्यादावपि लोपप्रसङ्गस्तथापि किलात्पस्सः कृतस्येत्यादिनिर्देशाज्ज्ञापकात्तद् एव सोऽत्र तत्साहचर्याच्चषोऽप्येतद् इति विज्ञायते रुद्र इत्यादावेतच्छब्दपरत्वाभावान्न लोपः । वानुवृत्तेरसः शिव इत्यादौ नञ्समासेऽपि न ॥ १७ ॥

सैषादिति संहिता—

"सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥"

इत्यादौ पादपूरणे संध्यर्था ज्ञेया ॥

( च० ) नन्वत्र लोपशि कृते संधिः कथं कृतः इत्यग्रे वक्ष्यति—सैषादिति संहितेत्यादिना । तद् एतद् उभयत्रापि प्रथमैकवचनान्तम् । 'त्यदादेष्टेरः स्यादौ' इति दलोपः । 'स्तः' इत्युभयत्रापि तस्य सः । एस इत्यत्र 'किलात्पः सः०' 'स्रोर्विसर्गः' तदेतदोर्निष्पन्नाभ्यां सएषशब्दाभ्यामित्यर्थः । शेषं काठ्यम् । उदाहरणम् । सः अग्रे चरति । एषः अग्रो हसति । उभयत्रापि 'सैषाद्धसे' इति विसर्गलोपश् । 'सादेषाद्धसे' इति सूत्रे ऋजुतया कर्तव्ये सैषादिति सूत्रमध्ये या अघटमाना अकारकार्योः 'ए ऐ ऐ' इति संहिता सन्धिर्दर्शिता सा सएषशब्दयोः 'सैष दाशरथीरामः' इत्यादि अष्टाक्षरात्मकपादपूरणार्थम् लोपशि कृतेऽपि यः 'ए ऐ ऐ' इति सन्धिर्भवति तज्ज्ञापनार्थमित्यर्थः । श्लोकः—सैषः सः अग्रो एषः 'आद्ये लोपश्' 'ए ऐ ऐ' इति सन्धिर्भवति । एवमपरपादत्रयेऽपि । स एषः दाशरथिः । दशरथस्यापत्यं दाशरथिः । दशरथपुत्रो रामो वर्तते । स एषः युधिष्ठिरो राजा युधि संग्रामे स्थिरः युधिष्ठिरः । 'किलात्पः सः कृतस्य' इति षत्वम् 'ष्टुभिः । ष्टुः' स एष कर्णः राजा महात्यागी महादानी वर्तते । स एष भीमो भीमः पाण्डवः महाबलः अतिबलिष्ठो वर्तत इत्यादि । अर्थः सुगमः । इत्यादौ पादपूरणे सन्ध्यर्था । पादपूरणे यः सन्धिः स एव अर्थः प्रयोजनं यस्याः सा ॥

( प्र० ) बालबोधाय ऋजुत्वेनैव तदेतदोरिति वाच्ये श्लिष्टप्रयोजनमाह ॥ सैषादितीत्यादि ॥ सैषादिति संहिता । सा इत्यादौ सन्ध्यर्थेत्यन्वयः । लोपशि पुनर्न सन्धिरिति सन्धिनिषेधात्सन्धौ सति पादपूरणमस्मान्निर्देशात्सन्धिरित्यर्थः ॥

**यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् ।**
**सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥१॥**

( च० ) पुनर्वैदिकप्रयोगविशेषमाह—यदुक्तम् । यत्सूत्रमिहास्मिन् शास्त्रे लौकिकाय प्रयोगाय व्याकरणप्रसिद्धोदाहरणायोक्तं सूत्रादि तद्वेदे छन्दसि बहुलमन्यथा भवति

---

रणयोर्भेदेऽर्थवत्त्वाद्विभक्त्युपपत्तौ सत्यां द्वन्द्वे विभक्तिलोपे च कृते नामत्वात् ङसि परतः स्मटोऽभावः ।

अनिश्चितं विभजनतया भवेत्। क्वचिद्भवति क्वचिन्न भवतीत्यर्थः। उदाहरणम्--स अग्रे इमाम्। 'आदबे लोपश्' 'अ इ ए' भूमिः अग्रे आददे छान्दसत्वात्क्वचिन्नामि नोऽव्यबे विसर्गलोपश्। ततः 'इ यं स्वरे' भूम्याददे ॥ सः अग्रे उषाम्। 'आदबे लोपश्' 'उ ओ' ॥ इत्यादीनामार्षप्रयोगाणां वैदिकप्रयोगाणामदुष्टता न दोष इत्यर्थः। स इमां भूमिमपुनात् भूमेश्च रसमाददे'। ततः स उषां गामानयासास ॥ १ ॥

( प्र० ) वेदे पुनः सर्वविधेरपि नियमो नेत्याह यदुक्तमिति। सः इमां भूमिं आददे सः उषां इत्यादौ सन्धिः नामिन इति योगविभागात्क्वचिन्नामिनः परस्य विसर्जनीयस्य लोपश्च सन्धिः। भूमीत्यमो लुग्वा। बहूनर्थान् लातीति बहुलमिति ॥ १ ॥

**क्वचिन्नामिनोऽबेलोपश्। नामिनः परस्य विसर्जनीयस्य क्वचिल्लोपश् भवत्यबे परे। भूमिः आददे--भूम्याददे ॥१८॥**

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥२॥**

( च० ) बाहुलकं कतिविधमित्याह--क्वचिदिति। क्वचित्प्रयोगे अनुक्तस्यापि प्रवृत्तिः अप्राप्तस्यासम्भवतः सूत्रस्य प्रापणं प्रवृत्तिः प्राप्तिः। यथा 'लोपश्चि पुनर्न संधिः' इति निषिद्धत्वेऽपि 'अ इ ए' इति सन्धेः प्राप्तिः। क्वचित्प्रयोगान्तरे उक्तस्याप्यप्रवृत्तिः। कथितस्यापि सूत्रस्य निषेधः। यथा भूमिः अग्रे आददे इत्यत्र 'नामिनो र' इत्यस्याप्राप्तिः। क्वचिद्विभाषा विकल्पः यथा वेदे देवैः देवेभिः। गवेशः गवीशः। क्वचिदन्यदेवोक्तमन्यदेव भवति यथा--भूमिः आददे अत्र विसर्गलोपरूपं कार्यम् अन्यदेव भवति। एवममुना प्रकारेण विधेर्व्याकरणसूत्रस्य विधानं करणं बहुधा बहुप्रकारं समीक्ष्य दृष्ट्वा बाहुलकं वैदिकप्रयोगं चतुर्विधं वदन्ति कथयन्ति। बुधा इत्यध्याहारः। वैदिकं चतुर्धोक्तम् ॥ २ ॥

( प्र० ) तदर्थानाह ॥ क्वचिदिति। विदधातीति विधिः। सूत्रं बहुलमेव बाहुलकम् ॥ २ ॥

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥३॥**

( च० ) अथ लौकिकप्रयोगः कतिधा भवतीत्याह--वर्णागम इत्यादि। एको वर्णागमः। च पुनर्वर्णविपर्ययः। पूर्वोच्चारितस्य स्थाने परवर्णोच्चारणं परवर्णस्य स्थाने पूर्ववर्णोच्चारणं वर्णविपर्ययः। पुनर्द्वावपरौ भेदौ। कौ तौ ? वर्णविकारनाशौ। पूर्वावस्थापरित्यागेन अवस्थान्तरापादनं विकारः। सर्वथा लोपो नाशः। वर्णानामक्षराणां विकारनाशौ वर्णविकारनाशौ। पञ्चमश्च भेदः धातोस्ताभ्यां वर्णविकारवर्णनाशाभ्यां कृत्वा पुनर्धातोरर्थातिशयेन च कृत्वा धातोर्योऽर्थातिशयः अधिकता कश्चिद्विशेषो वा अर्थातिशयस्तेन च यो भवति स योग इति नाम्ना पञ्चमो भेदः। तत्तस्मान्निरुक्तं

---

इन्द्वे सर्वादीनां न सर्वकार्यमित्युक्तत्वात्। अनञ् समासेऽककारात् सैषात् परस्य विसर्गस्य लोपः स्यात्

निश्चयेन उक्तोऽर्थो यस्य तन्निरुक्तं व्याकरणोदाहरणम् ॥ ३ ॥

( प्र० ) कुतः एतदित्यतो निरुक्तमूलतामाह । वर्णागम इति । धातोः प्रसिद्धो योऽर्थस्तस्यातिशय उत्कर्षस्तेन योगः स चासावर्थश्च तदर्थः तस्यातिशयः स तथा निरुक्तमवयवव्युत्पत्तिप्रकटनम् । पञ्चप्रकारकं कथ्यत इत्यर्थः ॥ ३ ॥

वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।
षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥४॥

( च० ) पञ्चविधमुच्यते तानेव पञ्च व्यञ्जयति । अथ लौकिकः प्रयोगः कतिधा भवतीत्याह--वर्णागम इत्यादि । गवेन्द्रादौ वर्णागमः 'गवादेरवर्णागमोऽक्षादौ०' इति ॥ एवं हन् हिंसागत्योः । हन् अप्रत्ययः । सकारागमः हंस इति ॥ सिंहे वर्णविपर्ययो भवति । यथा हिंस हिंसायाम् । 'मूर्तौ घनः' इति अप्रत्ययः । हिंस इति स्थिते । हिनस्तीति विग्रहे ततः हिंस इति शब्दे हस्य स्थाने सः सस्य स्थाने हः एवं वर्णविपर्ययः सिंह इति सिद्धम् ॥ षोडशादौ यथा । षट् च दश च इति विग्रहे षष् दश अत्र । 'षष उदों डः' षस्य उः दस्य डः इति वर्णविकारः । ततः 'उ ओ' षोडश इति विकारोदाहरणम् ॥ गूढः अग्रे आत्मा । बन्धुजनः अग्रे आजुहाव । कुरव अग्रे आत्महितम् । इत्यादिषु वर्णविकारमाकारस्य अकारं विधाय 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' 'गूढोत्मा' 'बन्धुजनो जुहाव' । कुरवोत्महितम् ॥ पृषोदरे वर्णनाशः । यथा पृषत् अग्रे उदरः तकारस्य नाशो लोपः 'उ ओ' पृषोदरः । पृषन्ति बिन्दवः उदरे यस्य स पृषोदरः मृगः अथवा पृषन्मृगस्तस्योदरमिवोदरं यस्य स पृषोदरः ॥ ४ ॥

( प्र० ) तदुदाहरति—वर्णागम इति । हिनस्तीति सिंह इत्यत्र हिसि हिंसायामित्यस्य हसकारयोर्विपर्ययः । षोडशेत्यत्र ष्टुत्वेन दस्य डत्वे षस्याकारो विकारः । "पृषन्मृगे बिन्दौ वा" इत्यभिधानात्पृषतो मृगविशेषस्येवोदरं यस्य स पृषोदर इत्यत्र पृषतस्तकारनाशः ॥ ४ ॥

वर्णनाशविकाराभ्यां धातोरतिशयेन यः ।
योगः स उच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ५ ॥

विस्कम्भनेन विस्कम्भनेन । शुनः शेपं चित् शुनश्चिच्छेपम् । पृषत् उदरं पृषोदरम् ॥

आत्खसयोरुः ॥ आकारे खसे च परे विसर्जनीयस्य सह उः क्वचिद्भवति । गूढः आत्मा गूढोत्मा ॥ १९ ॥

॥ इति विसर्गसंधिप्रक्रिया ॥ ६ ॥

( च० ) वर्णनाशेत । वर्णस्याक्षरस्य नाशविकाराभ्यां कृत्वा धातोरतिशयेन अविशेषेण कृत्वा य उत्पद्यते सः प्राज्ञैः पण्डितैः योग इत्युच्यते । क्व । मयूरभ्रमरादिषु मयूरः भ्रमरः इत्याद्युदाहरणेष्वित्यर्थः । यथा रु शब्दे । रु रु । एकत्र महीपूर्वः । अन्यत्र भ्रमन्पूर्वः । मह्यामतिशयेन रौति जल्पतीति मयूरः । भ्रमन् सन् अतिशयेन रौतीति भ्रमरः । 'नाम्नि च' इति डः प्रत्ययः डित्वाट्टिलोपः । 'स्वरहीनं०' एकत्र विकारः हीस्थाने यू,

---

खसे परे इति सूत्रार्थः । अककारात् किम्, एषको रुद्रः । अनञ्समासे किम्, अस: शिवः । हेस

अन्यत्र वर्णनाशः नकारस्य नाशः लोपः । मयूरः भ्रमरः इति सिद्धम् । अन्येषां मते एते पञ्चापि पृषोदरादिभेदा एव ॥ ९ ॥

॥ इति विसर्गसंधिः ॥ ६ ॥

(प्र०) मह्यामतिशयेन रौतीति मयूरः । भ्रमन् अतिशयेन रौतीति भ्रमरः ॥९॥
इति श्रीभट्टवासुदेवविरचिते सारस्वतप्रसादे पञ्चसन्धिप्रकरणम् ॥
श्रीचण्डीश्वरशिष्येण वासुदेवेन दीपिते ॥
सारस्वतप्रसादेऽभूत्पञ्चसन्धिनिरूपणम् ॥ ६ ॥

# * स्वरान्ताः पुंलिङ्गाः ७ * ।

**अथ विभक्तिर्विभाव्यते । सा द्विधा । स्यादिस्त्यादिश्च ॥**

(च०) अथेति पञ्चसंधिकथनान्तरं विभक्तिर्विभाव्यते कथ्यते । विभज्यन्ते पृथक्क्रियन्ते कर्तृकर्मादयो यया सा विभक्तिः ॥ सा विभक्तिर्द्विधा द्विप्रकारा । एका स्यादिः सि औ जस् इत्यादिका । अपरा त्यादिः तिप् तस् अन्ति इत्यादिका ॥

(प्र०) अथ विभक्तिर्विभाव्यते । विभज्यते कर्तृकर्माद्यर्थो यया सा विभक्तिः ॥

**विभक्त्यन्तं पदम् ॥ तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते ॥ १ ॥**

(च०) विभक्तेः प्रयोजनमाह—सूत्रम्—'विभक्त्यन्तं पदम्' ॥ विभक्तिरन्ते यस्य तद्विभक्त्यन्तं । यस्यान्ते विभक्तिस्तत्पदमुच्यते ॥ तत्र विभक्तिद्वयमध्ये स्यादिर्विभक्तिर्नाम्नोऽग्रे योज्यते स्थाप्यते दीयते । त्यादिर्विभक्तिर्धातोरग्रे योज्यते स्थाप्यते ॥ १ ॥

(प्र०) विभक्त्यन्तमिति । विभक्तिः स्वरूपेण कार्यतो वान्ते यस्य तत्पदसंज्ञमित्यर्थः ॥ १ ॥

**अविभक्ति नाम ॥ विभक्तिरहितं धातुवर्जितं चार्थवच्छब्दरूपं नामोच्यते ॥ कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञा इति केचित् (क) ॥ २ ॥**

---

किम्, एषोऽत्र ;

इति श्रीनवकिशोरकृतायां मनोरमायां विवृत्यां सन्धिप्रक्रिया ।

(क) अविभक्तीति । ननु 'अविभक्ति' इति कथं विगृह्यं, नास्ति विभक्तिर्यस्योत्पत्तौ करणत्वेन आहोस्विन्नास्ति विभक्तिर्यस्योत्पत्तौ कार्यत्वेन, तत्राद्ये पक्षे गङ्गेत्यादावेव स्यात् । आवाद्व्युत्पत्तौ विभक्तिनिरपेक्षत्वात् ग्रामप्राप्त इत्यादौ तु तत्सापेक्षत्वान्न स्यात् । न च समासत्वाद् भविष्यतीति वाच्यम्, एवं हि समासग्रहणस्य वाक्यव्यावृत्तये नियमार्थता भज्येत, तस्मान्नाद्यः पक्षः, नापि द्वितीयः, भवतीत्यादावतिप्रसङ्गात् । ततश्च तिबाद्यभिहितैकत्वादिसंख्यायामव्यये इवैकवचनं स्यात् । एवं तर्हि विग्रहः कार्यत्वेन नास्ति विभक्तिर्यस्मिन्नाश्रयत्वेन विभक्त्याश्रयो यन्नास्तीत्यर्थः । इत्याभिप्रेत्याह—विभक्तिरहितमिति । अस्य विस्तरव्याख्यायामवगन्तव्यम् ।

( च० ) नामलक्षणमाह—सूत्रम्—'अविभक्ति नाम' ॥ नास्ति विभक्तिर्यस्य तदविभक्ति प्रथमैकवचनान्तम् । 'नपुंसका०' सेर्लोपः । नामेति नामन् शब्दस्य प्रथमैकवचनान्तम् 'नपुंसका०' 'नाम्नो नो०' नस्य लोपः सिद्धम् । द्विपदम् । विभक्त्या रहितः धातोर्भ्वादेः पृथक्भूतमर्थयुक्तं शब्दरूपमकारादिवर्णरूपं तन्नाम उच्यते । शब्दरूपं नामेत्युक्ते पदस्यापि नामसंज्ञा स्यात्तन्निवारणार्थमविभक्तीति । तथा सति धातावतिव्याप्तिस्तन्निवारणार्थं धातुवर्जितमिति । तथा सति निरर्थकस्य टस् इत्यादि वचनेनामत्वं तन्निवारणार्थमर्थवदिति । ईदृग्लक्ष ं नामोच्यते ॥ च पुनः कृत्तसिद्धतसमासाः सविभक्तिका अपि नामसंज्ञाः स्युः केचिदित्याहुः । कृतस्तृतीयवृत्तिप्रत्ययाः । तदन्ताः शब्दाः धातवस्तद्धितान्ताः समासाश्च नामसंज्ञका भवन्ति इति । केचिदिति पाणिन्याचार्या वदन्ति । एते स ऽपि प्रातिपदिकसंज्ञका नामसंज्ञका उच्यन्ते । तन्मते प्रातिपदिकमिति नामपर्यायः ॥ कृदन्ता धातवः समासतद्धितयोः पदान्यपि नामसंज्ञकानीत्यर्थः ॥ २ ॥

( प्र० ) नामस्वरूपमाह । अविभक्ति इति । "नञर्थौ द्विविधौ ज्ञेयौ पर्युदासप्रसज्यकौ ॥ पर्युदासः सदृग्ग्राही निषेधार्थः प्रसज्यकः" ॥ इति द्विविधो नञ् । तत्र "प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ॥ पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" ॥ इति नाम संज्ञाविधेः प्रधानत्वादुत्तरपदयुक्तत्वाच्चात्र पर्युदासः । ततश्च नञिव युक्तमन्यसदृशेऽर्थे इति नञ्युक्तविभक्तेरर्थवत्तया सदृशेऽर्थवति विभक्तिभिन्ने वर्तमानत्वाद्विभक्तिरहितमर्थवदित्युक्तम् । विभक्तीनां प्रत्ययान्तत्वात्प्रत्ययग्रहणेन तदन्तस्येति विभक्त्यन्तभिन्नमित्यर्थः । ततश्च कुण्डे वृक्षान् अहन् इत्यादौ विभक्त्यन्तत्वेन नामत्वाभावादूध्रस्वनलोपादि न । अर्थवद्ग्रहणेन धनं वनमित्यादौ नान्तावधेर्नामत्वाभावान्न लोपाभावः । नच नामत्वेन विभक्त्युत्पत्तौ विभक्त्यन्तत्वाभावान्नलोपो न स्यादिति वाच्यम् । नाम्नोनो लोपश् धावित्यत्र धिविषये नलोपनिषेधसामर्थ्यात्पदान्तानुवृत्तिसार्थक्याथ नलोपे विभक्त्यन्तस्यापि राजेत्यादिषु नामत्वाश्रयणात् । तन्त्रः तन्म इत्यादावनामत्वेऽपि रसादित्यादिपरत्वाभावान्न रसे इत्यस्य तथैव व्याख्यास्यमानत्वात् । ज्ञापकस्येष्टमात्रविषयत्वाच्च । धातूनां तु विशेषतिबादिविधेर्नामकार्याभावाद्धातुवर्जमित्युक्तम् । अत एव येभ्यः क्विबन्तेभ्यो भूप्रभृतिभ्यस्तिबादयो न तेभ्यो नामत्वात्स्यादयो भवन्त्येव । पाणिनिमतोपहासार्थमाह । कृत्तद्धितेति । केचिदित्यनादरे । अप्रत्यय इति प्रत्ययान्तमात्रस्य प्रातिपदिकसंज्ञां प्रतिषिध्य पुनः प्रतिप्रसवे गौरवमिति भावः । यद्यप्यधिश्रि उपकुम्भमित्यादौ विभक्त्यन्तत्वेन नामसंज्ञा न स्यात् तथापि लुग्भावादिविधानसामर्थ्याद्विभक्त्युत्पत्तिः । वस्तुतः शब्दान्तरत्वान्नामत्वम् ॥ २ ॥

**तस्मात् सि औ जस् अम् औ शस् टा भ्यां भिस् ङे भ्यां भ्यस् ङसि भ्यां भ्यस् ङस् ओस् आम् ङि ओस् सुप्(क)** ॥ तस्मान्नाम्नः पराः स्यादयः

---

( क ) ननु धातोरित्यग्रिमाधिकारात् ततः प्राक्तनानां प्रत्ययानां नाम्नः परत्वमवधेयमेवेति किं तस्मादित्यनेनेति चेन्न, किं परिमाणमिति वक्तव्ये किं दघनमित्यपि स्यात् इति निराकरणाय तस्मादित्यस्यावश्यकत्वात् ।

अथ न केवलः प्रत्ययः प्रयोक्तव्य इति नियमेन तदवारणसम्भवादि चेत्, एतस्यापि तन्मूलकत्वादित्यवधेहि ।

सप्त विभक्तयो भवन्ति । तत्राप्यर्थमात्रैकत्वविवक्षायां प्रथमैकवचनं सि ॥

अकारान्तः पुलिङ्गो देवशब्दः । देव सि इति स्थिते । इकारः उच्चारणार्थः सेरिति विशेषणार्थश्च ॥ ३ ॥

( च० ) सूत्रम्—'तस्माद्यावत्सुप्' ॥ तद् पञ्चम्येकवचनम् । 'त्यदादेष्टेः०' लोपः । 'ङसिरत्' 'अतः' इति स्मडागमः । 'सव०' ॥ सिश्च, औश्च, जस् च यावत्सुप् च प्रथमाबहुवचनान्तम् । साङ्केतिकम् । यद्वा तस्मादिति पञ्चम्येकवचनान्तम् अग्रे सि औ जस् इत्येकविंशतिरपि साङ्केतिकप्रथमैकवचनान्तानि पदानि । एवंद्वाविंशति पदं सूत्रम् । अष्टपदमित्यपि केचित् । सुप् इत्यत्र पकारः पाणिनीयानां सु औ जस् इ प्रथमैकवचनस्यापि सु इति संज्ञा तस्मात्तद्भेदज्ञापनार्थः सुप्प्रत्याहारार्थश्च । अत्र तु सुखमु खोच्चारणार्थं एव । तस्मान्नाम्नः परा एताः पूर्वोक्ताः स्यादयः सप्त विभक्तयो भवन्ति तत्र सि औ जस् प्रथमा । अम् औ शस् द्वितीया । टा भ्यां भिस् तृतीया । ङे भ्यां भ्यस् चतुर्थी । ङसि भ्यां भ्यस् पञ्चमी । ङस् ओस् आम् षष्ठी । ङि ओस् सुप् सप्तमी एकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । तत्रा नाम्नि सप्तसु विभक्तिषु वा अर्थमात्रस्यैकत्वविवक्षायामर्थमात्रस्य घटपटादेरेकस्य वक्तु मिच्छा क्रियते यत्र, तत्र प्रथमैकवचनं सि दीयते । तत्र प्रथमं देवशब्दः । दिवु क्रीडा याम् । दीव्यतीति देवः । 'पचिनन्दिग्रहादेः०' इति अप्रत्ययः । गुणः । देव इति जा तम् । ततः 'देव सि' इति स्थिते सति इकार उच्चारणार्थः 'सेर्धिः' 'सेरा' इति सू विशेषणार्थश्च । इत्संज्ञत्वात् इकारलोपः । देवस् इति स्थितम् ॥ ३ ॥

( प्र० ) नामसंज्ञाप्रयोजनमाह । तस्मात् इति । द्विपदमष्टपदं वा द्वाविंशत्प वा । तत्र सप्तत्रिकस्य क्रमेण प्रथमाद्वितीयादिसंज्ञा । तत्राप्येकैकस्य क्रमेणैकवचनद्विवच बहुवचनसंज्ञा लोकसिद्धा एव । प्रथमैकवचने सिरित्यादिना तत्र तत्र वक्ष्यति । अस्य लिङ्गार्थे प्रथमेत्यादिभिरेकवाक्यत्वात् । तत्रापीत्याद्युक्तम् । अर्थमात्रस्य कारकविशेष विवक्षाशून्यस्य लिङ्गादेरर्थस्य विवक्षायां प्रथमा । तत्रापि तद्गतैकत्वे एकवचनम् ॥ ३ ॥

**स्रोर्विसर्गः** ॥ सकाररेफयोर्विसर्जनीयादेशो भवत्यधातो रसे पदान्ते च । चकारात्पदान्ते उभयोर्धातुनाम्नोः । देवः ॥ ४ ॥

( च० ) सूत्रम्—'स्रोर्विसर्गः' ॥ स् च र् च स्रौ तयोः स्रोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः ।' प्रथमैकवचनान्तम् । 'स्रोर्वि०' इति द्विपदम् । मध्ये 'नामिनो०' । सकारस्य रेफस्य च विसर्गो भवति अधातोः नाम्नः शब्दस्य रसे परे । चकारात्पदान्ते तु धातुनाम्नोरुभयोरपि ॥ नाम्नः सकाररेफयो रसे पदान्ते च विसर्गा देशः । चकारात्पदान्ते धातोरपि सकाररेफयोर्विसर्गादेशः—यथा अचकाः । अबिभः । रसे परे धातोर्न—यथा आस्ते बिभर्तीत्यादौ । अनेन विसर्गः । देवः इति सिद्धम् ॥ ४ ॥

( प्र० ) स्रोर्विसर्गः इति । अत्र वसां रसे इत्यतः रसे पदान्ते चेत्यधिकार धिकारश्च नाम्नो धातोश्चेति पदान्यनुवर्तन्ते । ततश्चाधातो रसे पदान्ते च धातोश्च पदान्ते

एव विसर्ग इति विवेकः । ततश्चाचका अबिभ इत्यादौ भवति नहि सोर्विभर्तीत्यादौ । यद्वा । धातोश्च झसे इत्यत्र धातोरिति योगविभागे स्रोर्विसर्गः पदान्ते चेति सम्बन्धादेतदवसेयम् ॥ ४ ॥

द्वित्वविवक्षायां औ । 'ओ औ औ' देवौ ॥

( च० ) द्वित्वविवक्षायाम् औ । द्वयोर्वक्तुमिच्छा यत्र क्रियते तत्र द्विवचनम् । यथा देवश्च देवश्चेत्येकशेष, 'सरूपाणामेकशेष एकविभक्तौ' इति । देव औ इति स्थिते । 'ओ औ औ' देवौ ॥

( प्र० ) द्वित्वविवक्षायाम् अर्थमात्रद्वित्वविवक्षायामित्यर्थः । एवमुत्तरत्रापि ॥

बहुत्वविवक्षायां देव जस् इति स्थिते । जकारो जसीति विशेषणार्थः । जकारस्येत्संज्ञायां तस्य लोपः । देव अस् इति स्थिते । दीर्घविसर्गौ । देवाः ॥

( च० ) एवं देवश्च देवश्च देवश्चेति बहूनामुक्तौ प्रथमाबहुवचनम्—जस् । जकारे जसीति सूत्रविशेषणार्थः अन्यथा असीत्युच्यमाने शसूङससंबन्धिनोऽप्यस ईकारः स्यात् । जकार इत्संज्ञकः । देव अस् । 'सवर्णे०' 'स्रोर्विसर्गः' देवाः ॥

**अकाराज्जसोऽसुक् क्वचिद्वक्तव्यश्छन्दसि** ॥ कित्त्वादन्ते । देवासः । ब्राह्मणासः ॥ ५ ॥

( चि० ) विशेषमाह—'अकाराज्जसोऽसुक् क्वचिद्वक्तव्यः' ॥ क्वचित्प्रयोगान्तरे अकारात्परस्य जसः असुक् आगमो भवति छन्दसि वेदविषये । देव जस् । अनेन असुगागमः । कित्त्वादन्ते । 'स्वरहीनं' 'स्रोर्विसर्गः' 'सवर्णे दीर्घः' देवासः ॥ ५ ॥

( प्र० ) अकारादिति । असुकः कित्त्वात्तदन्तविधौ "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति पदत्वाद्विसर्गः । सामान्यतो विधावप्याद्यन्ते वा रूपे विशेषाभावेऽपि कित्करणं मध्यविधिनिरासार्थम् । न च विधानसामर्थ्यादेव मध्ये न स्यादिति वाच्यम् । तस्य संयोगान्तलोपविधेर्दीर्घविधेर्वा निवर्त्तकत्वप्रसङ्गात् ॥ ५ ॥

द्वितीयैकवचने देव अम् इति स्थिते ॥ **अमूशसोरस्य** ॥ समानादुत्तरयोरमूशसोरकारस्य लोपो भवति अधातोः । देवम् ॥ पूर्ववत् देवौ ६॥

( च० ) कर्मैकत्वविवक्षायां द्वितीयैकवचने देव अम् । सूत्रम्—'अमूशसोरस्य'॥ अम् च शस् च अमूशसौ तयोः अमूशसोः । अमूशसूशब्दस्य षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' अस्येति षष्ठ्येकवचनान्तम् । 'ह्रस्व' 'नामिनोरः' सिद्धं द्विपदम् । समानात्परस्य अमूशसूसंबन्धिनोऽकारस्य लोपो भवत्यधातोः । अक्विबन्तात् शब्दादित्यर्थः । अनेन अकारलोपः । 'मोऽनुस्वार' देवम् ॥ देवौ पूर्ववत् ॥ ६ ॥

बहुवचने देव शस् इति स्थिते । शकारोऽनुबन्धः 'शसि' इति विशेषणार्थः ॥

( च० ) द्वितीयाबहुवचने शस् । शकारः शसीति विशेषणार्थः । इत्संज्ञकः स्था-मात्रः । अस् लिख्यते । 'अमूशसोः' इत्यकारलोपः ॥

**सो नः पुंसः** ॥ पुंलिङ्गात्समानादुत्तरस्य शसः सकारस्य नकारादेशो भवति(क) ॥ **शसि** ॥ शसि परे पूर्वस्य दीर्घो भवति ॥ **यदादेशस्तद्वद्भवति** ॥ देवान् ॥ ७ ॥

(च०) सूत्रम्—'सो नः पुंसः' ॥ सः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'सोर्विं०' नः प्रथमैकवचनान्तम् 'सोर्विं०' ङुंस इति पुंस्शब्दस्य पञ्चम्येकवचनान्तम् 'स्वरहीनं०' 'सोर्विं०' ॥ पुंलिङ्गे वर्तमानात्समानादुत्तरस्याग्रतः शसः सकारस्य नकारादेशो भवति सूत्रम्—'शसि' सप्तम्येकवचनम् । 'स्वर०' सिद्धमेकपदम् ॥ पूर्वह्रस्वस्य दीर्घो भवति शसि परे । 'यदादेशस्तद्वद्भवति न तु वर्णमात्रविधौ' इति न्यायात् पूर्वस्य दीर्घः देवान् ॥ ७ ॥

( प्र० ) शसीति । तस्मिन्निति निर्दिष्टे पूर्वस्येति पुंस्य । यद्यप्यत्र सामा-न्योक्तं तथापि स्वरस्यैव । अचश्चेति नियमात् । अतोऽनडुह इत्यादौ नातिप्रसङ्गः वर्णमात्राश्रितविधेरन्यत्र यदादेशस्तद्वद्भवतीति एकदेशविकृतमनन्यवद्भवतीति च श-लोपे नकारादेशे च तत्कार्यं स्यादेव ॥ ७ ॥

तृतीयैकवचने देव टा इति स्थिते । टकारोऽनुबन्धः 'टेन' इति विशेषणार्थः ॥

( च० ) कर्तृकरणयोरेकत्वविवक्षायां तृतीयैकवचने देव टा इति स्थिते टकारोऽनुबन्धः । 'उच्चरितप्रध्वंसिनो ह्यनुबन्धाः' इति टकारस्य लोपः 'टेन' इति सूत्रार्थश्च आ । स्थिते ॥

**टेन** ॥ अकारात्परष्टा इन भवति । 'अ इ ए' देवेन ॥ ८ ॥

( च० ) सूत्रम्—'टेन' । टा प्रथमैकवचनान्तम् । सांकेतिकम् । इन प्रथमैकवचनान्तं सांकेतिकम् । अकारान्तशब्दात्परतः टाविभक्तेः इनादेशो भवति सस्वर एव भवतीति । 'अ इ ए' देवेन ॥ ८ ॥

**अद्भि** ॥ अकार आ भवति भकारे परे(ख) । देवाभ्याम् ॥ ९ ॥

( च० ) देव—भ्याम् ॥ सूत्रम्—'अद्भि' ॥ अत प्रथमैकवचनान्तम् । 'हसे पः'

---

( क ) 'पुंस' इति लिङ्गं नामार्थ इति मते पञ्चमी । पुंलिङ्गात् समानात् नाम्न इति । यदा तु प्रत्ययार्थस्तदा पुंस इति षष्ठी । समानान्तान्नाम्नः परस्य पुंसो वाचकस्य शसः सस्य नः स्यादिति । उक्तं च—

"एक द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥"

इति ॥ स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकः पञ्चको नामार्थः । उक्तपञ्चसु पूर्वस्य पूर्वस्य नामार्थत्वे परो विभक्त्यर्थो ज्ञेयः ।

( ख ) भीति किम्, देवस्य । ननु रैस्भीत्यतो भीति सिद्धे किं भग्रहणेनेति चेन्न, एकयोगनिर्दिष्टे सकारस्यानुवृत्तिः स्यादिति तन्निरासार्थं भीत्यस्यावश्यकत्वात् ।

भि सप्तम्येकवचनान्तम् 'स्वरहीनं०' 'चपा अबे जबाः' ॥ 'वाद्य' इति सूत्रादाकारस्या-नुवृत्तिः ॥ केचित्तु 'आङ्भि' इति पठन्ति । तन्मते आ अद् भि इति त्रीणि पदानि । अ-कारस्य स्यादिविभक्तिसंबन्धिभकारे परे आकारो भवति । देवाभ्यामिति सिद्धम् ॥१०॥

देव भिस् इति स्थिते ॥ ऽभ्यः ॥ अकारात्परस्य भिसो भकारस्या-कारो भवति । 'अ इ ए' वृद्धिविसर्जनीयौ । देवैः ॥ ११ ॥

अकारस्य भिसि छन्दस्येकारो वक्तव्यः ॥ देवेभिः। कर्णेभिः ॥

(च०) तृतीयाबहुवचने देव भिस् इति स्थिते ॥ सूत्रम्—'ऽभ्यः' ॥ अथवा । 'भ्भ्यः' भ् भि अः त्रिपदम् । भ् षष्ठ्येकवचनान्तं साङ्केतिकम् । भि षष्ठ्येकवचनान्तं सांकेतिकम् । अः प्रथमैकवचनान्तम् । 'स्त्रोर्वि०' 'झबे जबाः' इति भस्य बः । 'इ यं स्वरे' 'स्वर०' इति सूत्रसाधना । वृत्तिः कण्ठ्या । देशैकग्रहणेन देशिग्रहणं तेन भि इत्युक्ते भिसो ग्रहणम् । पूर्वं भकारेकारौ विश्लेष्य वियोज्य इकारात्पूर्वं भकारं विधाय पश्चात् भस्य अः 'अ इ ए' 'ए ऐ ऐ' 'स्त्रोर्वि०' देवैरिति सिद्धम् । अत्र तु 'भिस् एस्' इति सूत्रकरणं युक्तम् ।

अकारस्य भिसि परे छन्दसि वैदिकोदाहरणविषये एकारो वक्तव्यः । देवेभिः, कर्णेभिरिति वैदिकप्रयोगः ॥ ११ ॥

( प्र० ) भ्य इति । भि अ इति छेदः । संज्ञैकदेशा अपि संज्ञिनो भवन्तीति न्यायात् सत्यभामा सत्येतिवत् भीस् भीत्यनेन उच्यते । वैपरीत्यं लाघवार्थम् । केचित्तु भ्य इत्येव पेठुः । तस्य च भि अ इति छेदः । भीति स्थानसप्तमी तत्र भ्यस्येत्वविशेषविधेः भ्यामि चाद्यन्ताभ्यामिति निर्देशाज्ज्ञापकादर्शीत्यारवे परिशेषाद्भिसो भकारस्थाने एकारादेश इत्याहुः अन्तरङ्गत्वेनादौ प्रत्ययकार्यम् । नन्वसिद्धं बहिरङ्गमिति न्यायादन्तरङ्गे एकारे क्रियमाणे बहिरङ्गोऽकारादेशाऽसिद्धः स्यादिति चेन्न । नाजानन्तर्ये बहिरङ्गत्वक्लृप्तिरिति प्रतिषेधात् ॥ ११ ॥

चतुर्थ्येकवचने दव ङे इति स्थिते । ङकारो ङित्कार्यार्थः सर्वत्र ॥ ङेरक् ॥ अकारात्परस्य ङे इत्येतस्यागागमो भवति(क) । कित्त्वादन्ते । 'ए अय्' 'सवर्णे दीर्घः' ॥ देवाय ॥ देवाभ्याम् ॥ १२ ॥

( च० ) 'प्रदानैकत्वविवक्षायां चतुर्थ्येकवचने देव ङे इति स्थिते ङकारो ङित्का-र्यार्थं इत्संज्ञकश्च । सर्वत्र ङेङसिङस्ङिषु इत्यर्थः ॥ सूत्रम्—'ङेरक्' ॥ ङेः षष्ठ्येकव-चनान्तम् । 'ङसिङसोरस्य' इत्यकारलोपः । 'स्त्रोर्विसर्गः' ॥ अक् प्रथमैकवचनान्तम् 'हसेपः से०' 'नामिनोरः' 'स्वरहीनं०' सिद्धम् । अकारात्परस्य ङेइत्यस्य अगागमो भवति । कित्त्वादन्ते । 'ए अय्' 'सवर्णे०' 'स्वरहीनं०' देवाय ॥ चतुर्थीद्विवचने देव भ्याम् । 'अद्भि' देवाभ्याम् ॥ १२ ॥

---

(क) आकि कृते 'एदोतोऽत' इत्यकारस्य लोपश्च तु न, विधानसामर्थ्यादपदान्तत्वाद्वा, न हि आकि कृते एतः पदान्तत्वं सम्भवतीति ।

**ए स्भि बहुत्वे** ॥ अकारस्य एत्वं भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्यः ॥ १३ ॥

( च० ) चतुर्थीबहुवचने देव भ्यस् इति स्थिते । सूत्रम्—'ए स्भि बहुत्वे' ॥ ए प्रथमैकवचनान्तम् । सांकेतिकम् । स् च भ् च स्भ् तस्मिन् स्भि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ बहुत्वे सप्तम्येकवचनम् । 'अ इ ए' ॥ अकारस्यैत्वमेकारो भवति बहुवचने सति सकारभकारादौ विभक्तावित्यर्थः । देवेभ्यः ॥ १३ ॥

पञ्चम्येकवचने देव ङसि इति स्थिते । इकारः प्रत्ययभेदज्ञापनार्थः ॥

**ङसिरत्** ॥ अकारात्परो ङसिरत् भवति ॥ देवात् । देवाभ्याम् । देवेभ्यः ॥ १४ ॥

( च० ) अपादानैकत्वविवक्षायां पञ्चम्येकवचने देव अस् इति स्थिते । सूत्रम्-'ङसिरत्' ॥ ङसिः प्रथमैकवचनान्तम् । 'सोर्विं०' अत् प्रथमैकवचनान्तम् । 'हसे पः०' 'नामिनो०' सिद्धम् । अकारादुत्तरो यो ङसि सः अत् भवति । 'सवर्णे०' देवात् । पञ्चमीद्विवचने देव भ्याम् इति स्थिते । 'अद्भि' देवाभ्याम् । बहुवचने देवेभ्यः । 'ए स्भि बहुत्वे' 'रोर्विसर्गः' ॥ १४ ॥

( प्र० ) ङसिरदिति । अद्विधानसामर्थ्यात्समानादित्यादिनिर्देशात्तद्धितप्रकरणस्वाद्वानुवृत्तेश्च विभक्तिस्वरे यस्य लोप इत्यलोपाभावः । वावसाने इत्यत्र वाशब्दस्य व्यवस्थितार्थत्वाद्देवादित्यादौ तदभावः ॥ १४ ॥

षष्ठ्येकवचने देव ङस् इति स्थिते ॥ **ङस्स्य** ॥ अकारात्परो ङस् स्यो भवति(क) । देवस्य ॥ १५ ॥

( च० ) संबन्धकत्वविवक्षायां षष्ठ्येकवचने देव अस् । सूत्रम्—'ङस्स्य' ङस् प्रथमैकवचनान्तम् । 'हसे पः०' स्यः प्रथमैकवचनान्तम् । 'सोर्विं०' अकाराद्वित्यादिर्वृत्तिः कण्ठ्या । देवस्य ॥ १५ ॥

**ओसि** ॥ अकारस्य ओसि परे एत्वं भवति । 'ए अय्' देवयोः ॥ १६ ॥

( च० ) षष्ठीद्विवचने देव ओस् इति स्थिते सति ॥ सूत्रम्—'ओसि' ओस् शब्दस्य सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ अकारस्य ओसि परे एत्वमेकारो भवति । 'ए अय्' 'स्वरहीनं०' 'सोर्विं०' देवयोः ॥ १६ ॥

**नुडामः** ॥ समानात्परस्यामो नुडागमो भवति(ख) । टित्त्वादादौ ।

---

( क ) अत्राहुः—

स्वरादित्यादिलिङ्गात्तदन्तलाभः । आदिति लिङ्गाच्च तस्यापीति ज्ञापकद्वयबलमाश्रित्य देवस्य अस्येत्यादिसिद्धिरिति । वस्तुतस्तु तदन्तलाभाय तल्लाभाय च ज्ञापकद्वयानुसरणक्लेशोऽपार्थ एव, देवस्येत्यादौ ङसोऽतः परत्वसम्भवात् । न च विहितविशेषणादतोऽविहितत्वाभावेन देवस्येत्यादिसिद्धिर्न स्यादिति शङ्कनीयम्, तस्येत्यादिसिद्ध्यर्थं विहितविशेषणानाश्रयणात् ।

( ख ) नुडाम इति । अत्राहुः—

अत्र धातोरित्यनुवर्तनीयम्, श्रियामित्याद्यर्थम्, तत्र, परेणेयो बाधात् । एवं तर्हि कारयांचकारेत्यादावतिप्रसङ्गवारणायाधातोरित्यनुवर्तनात्तदपि न परत्वाद् गुणेन बाधात् । पातयां चकार इत्यादावपि लोपे

उकार उच्चारणार्थः ॥ **नामि** ॥ नामि परे पूर्वस्य दीर्घो भवति(क) देवानाम् ॥ १७-१८ ॥

( च० ) षष्ठीबहुवचने । देव आम् । सूत्रम्—'नुडामः' ॥ नुट् प्रथमैकवचनान्तम् । 'ह्रसे पः०' ॥ आमः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' चपा अवे०' सिद्धम् । पुंसि समानात् ह्रस्वात् समानात्, दीर्घात्तु आबन्तेष्वोकारान्तेषु नित्यस्त्रीलिङ्गे वर्तमानेष्वपीति व्याख्येयम् । समानात्परस्य आमः षष्ठीबहुवचनस्येति व्याख्येयम् । अन्यथा 'आम् ङेः' इत्याम् । 'स्त्रियां य्वोः' इत्याम् । 'आमो' इत्यप्याम् । 'किमोऽव्ययात्' इत्याम् । 'कासादिप्रत्ययान्तात्' इत्याम् वर्तते तत्रातिव्याप्तिः स्यात् । तेन षष्ठीबहुवचनस्यामो नुडागमो भवति । अधातोरेवेत्यनुवर्तितव्यम् । तेन अधातोरक्विबन्ताच्छब्दात् । टित्वादादौ । उकार उच्चारणार्थः । इति न इत्यागमः । आमो नुडिति कर्तव्ये नुडाम इति विपरीतकरणं नुटो नित्यत्वसूचकम् । तेन स्त्रीणां वारीणामित्यत्र 'नुडामः' इत्येव स्यात् । 'नामिनः स्वरे' इति न भवति ॥ सूत्रम्—'नामि' ॥ नुट्सहितः आम् नाम् तस्मिन् नामि सप्तम्येकवचनान्तम् 'स्वरहीनं०' सिद्धम् । नुडागमसहिते आमि परे पूर्वस्य दीर्घो भवति ॥ इति दीर्घः । 'स्वरहीनं०' 'माऽनुस्वारः' देवानाम् ॥ १७-१८ ॥

( प्र० ) नामि इति । नुट्सहित आम् नाम् तस्मिन् । अतो दण्डिनामित्यादौ दीर्घत्वाभावः ॥ १८ ॥

सप्तम्येकवचने देव ङि इति स्थिते । 'अ इ ए' देवे । देवयोः । बहुत्वविवक्षायां देव सुप् इति स्थिते पकारः पित्कार्यार्थः । पकारस्येत्संज्ञायां लोपः । 'ए स्भि बहुत्वे' इत्येत्वे कृते ॥ **क्लिलात्षः सः कृतस्य** ॥ कवर्गादिलाच्च प्रत्याहारादुत्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति । अन्ते स्थितस्य तु न भवति । देवेषु ॥ १९ ॥

( च० ) आधारैकत्वविवक्षायां सप्तम्येकवचने देव ङि इति स्थिते । 'अ इ ए' ॥ सप्तमीद्विवचने षष्ठीद्विवचनवत् ॥ देव देव देवेत्येकशेषे सप्तमीबहुवचने देव सु इति स्थिते । 'ए स्भि बहुत्वे' ततः सूत्रम्—'क्लिलात्षः सः कृतस्य' ॥ कुश्च इलश्च क्लिलं तस्मात् । पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे०' ॥ षः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ सः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ॥ कृतस्य षष्ठ्येकवचनान्तम् । 'ङस्स्य' ॥ चतुःपदं सूत्रम् । सिद्धम् । वृत्तिः कण्ठ्या । न वरम् । केनचित्सूत्रेण कृतस्यैव सकारस्य

---

बाधः । पचतितरामित्यादावपि यस्य लोपः परः । न चैवमपि मालां चकारेत्यत्र नुट् स्यादिति वाच्यम् । स्याद्यधिकारेण तद् बाधात् । इति ।

( क ) नामीति । पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः स्यात् नुट्सहिते आमि परे इत्यर्थः । यदि च नुम्सहिते आम्यपि दीर्घः स्यात्तर्हि नुमं बाधित्वा नुड्विधानं व्यर्थं स्यात् ।

यत्तु केचिन्नामीत्युक्त्वा वारीणामित्यत्र सनुम्यप्यामि दीर्घः सिध्यति इत्युक्तं, तत्र नुट्सहित आम् नाम् तस्मिन्नामीति व्याख्यानं सर्वसम्मतत्वेन स्वोक्तयैव तद्विरोधेन चोपेक्षितम् ।

यकारो भवति न त्वकृतस्य स्वाभाविकस्य । अन्ते स्थितस्यापि सस्य षत्वं न भवति। यथा हरिस्तत्रेत्यादौ न षत्वम् । तथा नुम्विसर्गान्तरेऽपि षत्वं यथा हवींषि, हविष्षु इत्यादि । पूर्वं हविस् शब्दोऽस्ति इत्यर्थः । अत्र 'सः षः' इति कर्तव्ये यत 'षः सः' इति विपरीतत्वेन कृतं, तत क्वचित् किलं विनापि सस्य षत्वज्ञापनार्थं यथा अवष्टम्भः। अम्बष्ठः । अभ्यषुणोत् इत्यादि । देवेष्विति सिद्धम् ॥ १९ ॥

( प्र० ) किलादिति । कुश्च इलश्च किलं तस्मात् षुर्नो णोऽनन्ते इत्यतोऽनन्ते इत्यनुवृत्तेर्हरिस्तत्रेत्यादौ षत्वाभावः । सः षः इति वाच्ये विपरीतनिर्देशान्नुम् । विसर्जनीयशसव्यवधाने षत्वम् । हवींषि । हविःषु । हविष्षु इत्यादि । तथा सातेः पदादेश्च सस्य षो नेति । दधि सिंचति । अग्निसादित्यादिसिद्धिः ॥ १९ ॥

**आमन्त्रणे सिर्धिः ॥** आमन्त्रणमाभिमुखीकरणं तस्मिन्नर्थे विहितः सिर्धिसंज्ञो भवति ॥ २० ॥

( च० ) संबोधनमाह—सूत्रम्—'आमन्त्रणे सिर्धिः ॥ आमन्त्र्यते आहूयते पुरुषोऽनेनेत्यामन्त्रणं तस्मिन् सप्तम्येकवचनम् 'अ इ ए' । सिः प्रथमैकवचनान्तम्। 'स्रोर्वि०' । धिः प्रथमैकवचनान्तम् । 'स्रोर्विसर्गः' 'रात्पो द्विः' पूर्वं 'नामिनो रः' जलतुम्बिकान्यायेन० । त्रिपदं सूत्रमिदं सिद्धम् । आमन्त्रणमिति कोऽर्थः । आभिमुखीकरणम् । अनभिमुखः आसमन्तात् प्रकारेण अभिमुखः क्रियतेऽनेनेति आभिमुखीकरणम्। तस्मिन्नर्थे विहितः कृतो यः सिः प्रथमैकवचनरूपः स धिसंज्ञो भवति । उदाहरणम् । देव प्रथमैकवचने स् ॥ २० ॥

( प्र० ) आमन्त्रणे इति । लिङ्गार्थे प्रथमेत्यतोऽनन्तरमिदं सूत्रम् । तत्रामन्त्रणे इति योगविभागादामन्त्रणे अभिमुखीकरणेऽर्थे प्रथमेति सिद्धिरित्यपरयोगविभागादामन्त्रणार्थकः सिः धिसंज्ञक इत्यर्थः ॥ २० ॥

**समानाद्धेर्लोपोऽधातोः ॥** समानादुत्तरस्य धेर्लोपो भवत्यधातोः(क) ॥ २१ ॥

( च० ) धिसंज्ञायां किं कार्यं तदाह—सूत्रम्—समानाद्धेर्लोपोऽधातोः' ॥ स-

---

( क ) समानादिति । नन्वस्मिन् सूत्रे ह्रस्वादिति कथं नोक्तम्, किं समानादित्यनेनेति चेत्, अग्रे शसोरस्येत्यत्रानुवृत्त्यर्थमेतस्यावश्यकत्वात् ।

न च समानादिति वचनेन कथं ह्रस्वलाभ इति वाच्यम्, गौण्यावृत्त्येति गृहाण ।

अथैवमप्येदोतोतोः कुतो लाभ इति चेत्, अधातु ग्रहणादेव तल्लाभः । अधातुग्रहणादेव कथमिति चेत्, शृणु, अधातुग्रहणं तावद् व्यर्थम्, न च हे श्रीरित्यादावतिव्याप्तिः, ह्रस्वग्रहणेनैव तद्वारणात्, न चाम्शसोरित्यत्रानुवृत्त्यर्थं श्रियमित्यादौ परत्वादियैव तद्बाधात्, न चाचिःवमित्यादिवारणार्थम्, स्याद्यधिकारेणैव तद्वारणसम्भवात्, तस्माद्धातुग्रहणं व्यर्थत्वादेतद् ज्ञापनार्थमेवोपात्तम् ।

लोपग्रहणन्तु व्यर्थमेव, 'रिलोपो' इत्यतोऽनुवृत्त्यैव तल्लाभात्, न च एकयोगनिर्दिष्टत्वेन दीर्घस्याप्यनुवृत्तिः स्यादिति वाच्यम्, "सैषाद्धसे" इत्यत्र केवलस्याऽप्यनुवृत्तेर्दर्शनात् ।

यद्वा लोपग्रहणस्यैवैतज्ज्ञापनम् , अधातुग्रहणं तु स्रितो नुमित्यत्रोपयोगार्थमपि न्याय्यम् । जलमित्यत्र स्याद्यधिकारद्वारणम् ।

मानात् पञ्चम्यन्तम् । 'ङसिरत्' 'सवर्णे दीर्घः'। घेः षष्ठ्येकवचनम् 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः 'अघे जबाः' तस्य दः । 'स्वरहीनं०' लोपः प्रथमैकवचनान्तम् 'सोर्विं०' 'नासिनो रः' जलतुम्बि० । अधातोः न धातुरधातुस्तस्मात् । अधातुशब्दस्य पञ्चम्येकवचनम् । 'ङिति' 'ङसिङसोरस्य' इत्यकारलोपः । 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' चतुःपदं सिद्धम् । समानादुत्तरस्य घेर्लोपो भवति । अत्र समानादिति ह्रस्वसमानात्परस्येति व्याख्येयम् । अन्यथा हे हाहाः, हे हूहूः, हे वातप्रमीः, इत्यादौ विरुध्यति । अधातोः अक्विबन्ताच्छब्दात् । अक्विबन्तोऽधातुरुच्यते क्विबन्तश्च शब्दो धातुरित्यभिप्रायः । अनेन घिलोपः ॥ २१ ॥

( प्र० ) समानाद्दिति । दधात्यनेकानर्थानिति धातुर्यौगिको ज्ञेयः । ततश्च धातोः समानादिति सामानाधिकरण्यम् । अनेकार्थात्समानादित्यर्थः । अतश्चास्मिन्सूत्रे ह्रस्वसमानार्थताऽवसेया । ततश्च हे हाहाः हे हूहूरित्यादावधातोरपि समानान्न हे सोमपमिति कुलविशेषणे एकदेशविकृतमनन्यवद्भवतीति । प्रकृष्टा धीः प्रधीरिति नित्यस्त्रीत्वे नदीसंज्ञायां ह्रस्वत्वे च हे प्रधि इत्यादौ धातोरपि समानाल्लोपः । तथाऽम्शसोरस्येत्यत्रापि ह्रस्वदीर्घसाधारणानुवृत्तेः सोमपमित्यादौ धातोरपि तथा । सो नः पुंस इत्यत्र कृताकारवर्ज्जं ह्रस्वदीर्घसाधारण्येनेति । हाहान् । हूहून् । वातप्रमीन् इत्यादिप्रयोगाः । अत्र च न तथा नुडाम इत्यत्र पुंनपुंसकयोर्ह्रस्वादेव स्त्रियां च नित्यस्त्रीलिङ्गानामिकारान्तोकारान्तानामाबन्तानां च दीर्घादपीति । ततश्च सोमपानां कुलानामित्यादौ धातोरपि समानान्नुट् । केचित्तु तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वेनाधातुसमानपदयोस्तात्पर्यवशात्तादृशोऽर्थस्तत्र तत्र कल्प्य इत्याहुः ॥ २१ ॥

**आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः(क) ॥ हे देव हे देवौ हे देवाः ॥ एवं घटपटस्तम्भकुम्भादयोऽप्यकारान्ताः पुंलिङ्गाः ॥ २२ ॥**

( च० ) पूर्वं हे शब्दः । एतद्धेतुः । अभिमुखस्य भावः आभिमुख्यं सम्मुखत्वं वा तस्याभिव्यक्तये प्रकटीकरणाय हे शब्दः प्राक् आदौ प्रयुज्यते इत्यर्थः । हे देव । द्विवचने 'ओ औ औ' देवौ । बहुवचने देव अग्रे जस् इति स्थिते जकारस्येत्संज्ञायां लोपः । देव अस् 'सवर्णे०' 'स्रोर्विं०' हे देवाः ॥ अन्यानपि शब्दानाह—**एवं घटपटादयः** । अत्र काव्येन विभक्त्यर्थं दर्शयति—

'वृक्षस्तिष्ठति कानने कुसुमिते, वृक्षं लताः संश्रिता,
वृक्षेणाभिहता गजा निपतिता, वृक्षाय देयं जलम् ।
वृक्षादानय मञ्जरीं कुसुमितां, वृक्षस्य शाखोन्नता,
वृक्षे नीडमिदं कृतं शकुनिना, हे वृक्ष किं पश्यसि ॥'

---

( क ) आभिमुख्येति । अभिमुखस्य भाव आभिमुख्यं=सम्मुखीकरणम् । आभिमुख्यस्याभिव्यक्तिः=प्रकटीकरणं तस्यै ।

नाम्नः प्राक् हेशब्दस्य प्रयोगोऽर्थतः शब्दतो वा योज्यः ।

'वीरः सर्वसुरासुरेन्द्रमहितो, वीरं बुधाः संश्रिता,
वीरेणाभिहतः स्वकर्मनिचयो, वीराय नित्यं नमः।
वीरात्तीर्थमिदं प्रवृत्तमतुलं, वीरस्य घोरं तपो,
वीरे श्रीधृतिकीर्तिकान्तिनिचयः, श्रीवीर भद्रं दिश ॥'
'शिष्यः कुरुते पृच्छां बहुना विनयेन तत्वबोधाय।
आगत्य निजस्थानाद्धर्माचार्यस्य पादान्ते ॥' इत्यादि ॥ २२ ॥

अकारान्तानामपि सर्वादीनां तु विशेषः। सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम कतर कतम सम सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् द्वि किम् युष्मत् अस्मत् भवत्। एते सर्वादयस्त्रिलिङ्गाः ॥

( च० ) पुनर्विशेषमाह—अकारान्तानामिति। यद्यपि सर्वादयोऽकारान्तास्तथापि सर्वादीनां विशेषो देवशब्दात्कश्चिद्भेदोऽस्ति ॥ के ते सर्वादय इत्याह—सर्व विश्व यावद्भवत्। विश्वशब्दस्य सकलार्थवाचकत्वे सर्वादित्वं, न तु जगद्वाचकत्वे। जगद्वाचकत्वे कुलशब्दवत्। समः अतुल्यार्थः, किं तु सर्वार्थवाचकः। तुल्यार्थत्वे तु राज्ञा समाय इत्यादौ न सर्वादित्वम्। सिमः समग्रार्थवाचकः। नेमः खण्डवाचकः। पूर्वादीनां तु व्यवस्थायामेव सर्वादित्वम्। स्वाभिधेयापेक्षावधिनियमो व्यवस्थेति विकल्पः। स्वस्याभिधेयो दिग्देशकालस्वभावस्तमपेक्षते तेनैवापेक्ष्यते इति स्वाभिधेयापेक्षः ईदृशो योऽवधेर्मर्यादाया नियमोऽवश्यंभावोऽवधिभावादभ्रंशो व्यवस्थोच्यते। दक्षिणशब्दस्य प्रावीण्ये शृङ्गारनायकवाचकत्वे न सर्वादि कार्यम्। अन्यत्र दक्षिणदेशवाच्यत्वे सर्वादित्वम्। उत्तरशब्दस्य उत्तरदिग्देशवाच्यत्वे सर्वादित्वं, प्रतिवाक्ये तु न सर्वादि कार्यम्। अधरस्य हीनार्थत्वे सर्वादित्वं, न त्वोष्ठवाचकत्वे। स्वशब्दस्य ज्ञातिधनान्यवाचित्वे ज्ञातिधनार्थवर्जं किंतु आत्मात्मीयार्थे वाच्ये सर्वादित्वम्। 'ज्ञातावात्मनि चात्मीये धने स्वाख्या प्रवर्तते' इति स्वा ज्ञातयः स्वानि द्रव्याणि। इत्यत्र सर्वादित्वं न, अन्यत्र तु स्वस्मै रोचते स्वे पुत्राः स्वस्मै पुत्राय देहि। अत्र सर्वशब्दवत्। अन्तरशब्दस्य बहिर्योगे उपसंव्याने च सर्वादित्वं नान्यत्र। 'मध्ये छिद्रे विशेषे च व्यवधाने बहिर्युजि। उपसंव्यानने प्राज्ञाः षडर्थमन्तरं विदुः ॥' अन्तरस्मै गृहाय। नगरबाह्याय चाण्डालादिगृहायेत्यर्थः। पुरि तु न भवति— अन्तरायै पुरे कुप्यति। चाण्डालादिबाह्यपुर्यै इत्यर्थः। वस्त्रान्तरेणापिहितं वस्त्रमुपसंव्यानम्। 'अन्तरीयं निवसनमुपसंव्यानमित्यपि'। तत्रार्थे अन्तरे अन्तरा वा शाटकाः अन्तरस्मै शाटकाय वस्त्रान्तरेण वृताय शाटकायेत्यर्थः। यतः—

'सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाऽभिधा।
पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि।
परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि'।

उभशब्दस्य त्वच्छब्दस्य भवच्छब्दस्य द्विशब्दस्य च तृतीयासमासे तथा द्वेत्वर्थे सर्वादेः सर्वा विभक्तयो भवन्ति तदर्थम्। 'अव्ययात्सर्वनाम्नष्टेः प्रागकच्' इत्यकच्प्रत्य-

-यार्थं च सर्वादिमध्ये ग्रहणम् । यथा उभौ हेतू । उभाभ्यां हेतुभ्याम् । उभयोः हेत्वोः । त्वत् हेतुः । त्वतं हेतुम् । त्वता हेतुना । त्वते हेतवे । द्वौ हेतू । द्वाभ्यां हेतुभ्याम् । द्वयोर्हेत्वोः । भवान् हेतुः । भवन्तं हेतुम् । भवता हेतुनेत्यादि । तथा अज्ञातो उभौ उभकौ । एवं द्वकौ । भवकान् । भवकन्तौ । भवकन्तः । त्वकत् इत्यादि । त्वच्छब्दः प्रायश्छन्दस्येव । एते सर्वादय उच्यन्ते कथ्यन्ते । त्रिलिङ्गाः लिङ्गत्रयधारिणः पुंलिङ्गस्त्रीलिङ्गनपुंसकलिङ्गाः ॥

( प्र० ) अकारान्तत्वेन देववत्प्राप्तावाह । अकारान्तानामपीति । देवशब्दात्कश्चिद्विशेष इत्यर्थः । सर्वादिपठितयोरपि त्वत्त्वशब्दयोश्छान्दसत्वाल्लौकिकप्रयोगाभावादनुपादानम् । उभयशब्दस्य द्विवचनान्तत्वात्सर्वादिकार्यासम्भवेऽपि सर्वनाम्नस्तृतीया चेति सर्वनाम्नो हेतुयोगे तृतीयाविधेरुभाभ्यां हेतुभ्यामित्यादिसिद्ध्यर्थमुपादानम् । अन्यतरशब्दोऽव्युत्पन्न एव न तु डतरान्तः' कियत्तदय एव तद्विधेः । अतो डतरप्रत्ययान्तत्वेन प्राप्तौ पुनरुपादानादन्यतरशब्दस्य सर्वादित्वाभाव इत्यसत् । समशब्दः सर्वपर्यायः । न तुल्यार्थः । एवं सिमशब्दोऽपि । नेमशब्दः खण्डार्थः । एषां च सर्वेषां नामानि सर्वनामानीत्यन्वर्थताविज्ञानात्सर्ववाचित्वे एव सर्वादिकार्यं न संज्ञागौणत्वयोः । तथा लोकात्पूर्वादीनां स्वाभिधेयापेक्षावधिनियमे एव संज्ञागौणत्वयोर्नेति सर्वत्र । अतो दक्षिणा गाथका इत्यादाववधिनियमाभावादुत्तराः कुरव इत्यादौ संज्ञात्वाच्च न । तथा राज्ञः समायेत्यादौ तुल्यार्थत्वेन समस्यापि न । तथा परिधानबहिर्योगार्थस्यान्तरस्यापुरीवाचकस्येत्यन्तरायां पुरीत्यादौ न । तथार्थज्ञात्यन्यवाचिन एव स्वशब्दस्य नेह । स्वाय ज्ञातयेऽर्थाय वा । तथा वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यादौ द्वन्द्वे जसि वा नान्यत्र । तथा तृतीयासमासात्तद्वाक्ययोरपि नेति । मासपूर्वाय मासेन पूर्वायेत्यादि । तथा बहुव्रीहिसमासावयवस्य प्रधानभूतस्यापि सर्वादित्वं नेति । त्वं पिता यस्याहं पिता यस्य स त्वत्कपितृको मत्कपितृक इत्यादि । अन्यथाऽव्ययसर्वनाम्नामकच्प्राक्टेरित्यकचि त्वकत्पितृको मकत्पितृक इति स्यात् । दिक्समासे बहुव्रीहौ च नेति । उत्तरस्याः पूर्वस्याः अन्तरालं दिक् उत्तरपूर्वा तस्यै उत्तरपूर्वस्यै—उत्तरपूर्वायै इत्यादि प्रयोगानुसारतो यथायथमूह्यम् ॥ २६ ॥

तत्र पुंलिङ्गे रूपनयः । अकारान्तः सर्वशब्दः । सर्वः । सर्वौ ॥

**जसी ॥ सर्वादेरकारान्तात्परो जस् ई भवति(क) ॥ २३ ॥ गुरुः शिच्च सर्वस्य वक्तव्यः । 'अ ई ए' सर्वे । सर्वम् । सर्वौ । सर्वान् । पूर्ववत्प्रक्रिया ॥**

---

( क ) जसीति । अत्र लोकेशकरः—

जस् ई इ इति छेदः । नन्विहैकाकारप्रश्लेषः किमर्थमिति चेत्, सत्यम्, प्रथमादिभ्योऽपि विध्यर्थो द्वितीयः ।

अथैवं जसोऽन्त्यस्य सस्यैव किं नेति चेन्न, अन्त्यविधायकषष्ठ्या अदर्शनात्, उभय इति लिङ्गाच्चेति । सप्तमीभ्रमनिवृत्त्यर्थं दीर्घविधिरिति केचित्, तन्मन्दम्, 'उभये' इति निर्देशेन तद्भ्रमनिरासात् ।

ननु अकारमाश्रित्य जात ईकारः कथमेत्वरूपेणाकारस्य विघातकः स्यात्, उच्यते, 'उभये' इति सन्निपातपरिभाषाया अनित्यत्वाभ्युपगमादविघातको भवतीति ।

**ष्रनोणोऽनन्ते** ॥ षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भवति अन्तेस्थितस्य न भवति सर्वानित्यादौ ॥ २४ ॥

**अवकुप्वन्तरेऽपि** ॥ अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण । सर्वाभ्याम् । सर्वैः ॥ २५ ॥

( च० ) तत्र पुंलिङ्गे रूपमाह—सर्वं । सृ गतौ । वप्रत्ययः । सरति प्रसरतीति सर्वः । प्रथमैकवचनान्तम् । 'स्रोर्विं०' ॥ सर्वशब्दात् प्रथमाद्विवचनविवक्षायामौ । सर्व औ । 'ओ औ औ' सर्वौ ॥ बहुत्वे विशेषकृत्यमाह—सूत्रम्—'जसी' ॥ जस् प्रथमैकवचनम् । साङ्केतिकम् । ई प्रथमैकवचनान्तम् । साङ्केतिकम् । वृत्तिः सुबोधा । 'गुरुः शित् सर्वस्य' इति गुरुत्वात्सर्वस्य जस ई भवति ॥ प्रक्रियायां तु—'जसः शी' शित्वात्सर्वस्य । न वरम् । अकारान्तग्रहणं भवच्छब्दनिषेधसूचकम् । अनेन ई । 'अ इ ए' सर्वे ॥ द्वितीयायां देववत् ॥ तृतीयैकवचने सर्व आ । 'टेन' इति इनादेशे कृते 'अ इ ए' ततः सूत्रम्—'ष्रनोणोऽनन्ते' ॥ ष् च र् ऋश्च ष्रृः तस्मात् ष्रः पञ्चम्येकवचनम् । 'ऋतो ङ उः'स ङित् । ङित्वाट्टिलोपः । 'स्वर०' । नः प्रथमैकवचनान्तम् । 'स्रोर्विं०' 'नामिनो रः' जश्त्वम्वि० । णः प्रथमैकवचनम् । 'स्रोर्विं०' 'हवे' 'उ ओ' । अनन्तः न अन्तः अनन्तस्तस्मिन् अनन्ते सप्तम्येकवचनम् । 'अ इ ए' 'अतोऽत्युः' 'उ ओ' 'एदोऽतोऽतः' सिद्धम् । पाठसिद्धा वृत्तिः ; अन्ते पदान्ते स्थितस्य व्यञ्जनस्य नकारस्य णकारो न भवतीत्यर्थः ॥ नन्वत्र रेफस्याग्रे नकारो नास्ति किन्तु मध्ये वकारेकारौ स्तः ; तत्कथं नकारस्य णकारः स्यादित्याह—सूत्रम्—'अवकुप्वन्तरेऽपि' ॥ अवश्च कुश्च पुश्च अवकुपवस्तैरन्तरमवकुप्वन्तरं तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ अपि प्रथमैकवचनान्तम् । 'अव्यया०' 'एदोतोतः' सिद्धम् । अवप्रत्याहारस्यान्तरे कवर्गस्यान्तरे अपिशब्दात् जिह्वामूलीयोपध्मानीयानुस्वारनुम् विसर्गाणामपि व्यवधाने अन्तरे पवर्गस्यान्तरे णत्वं वक्तव्यम् । सर्वेण ॥ सर्वाभ्याम्—'अद्धि' ॥ सर्वैः—'भ्यः' 'अ इ ए' 'एऐ' 'स्रोर्विं०' ॥ २५ ॥

( प्र० ) जसी इति । अत्र केचित् एकमात्रालाघवेन वैयाकरणाः पुत्रोत्सवं मन्यन्ते इति न्यायेन जसि इत्येव पेठुः । दीर्घविधेः प्रयोजनाभावात् । न च दीर्घविधौ द्विमात्रत्वेन गुरुत्वाद्गुरुःशिच्च सर्वस्य वक्तव्य इति सर्वस्य जसः स्यादिति वाच्यम् । तस्य षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य वक्तव्य इत्यन्तविधेरपवादत्वात् । अत्र च षष्ठीनिर्देशाभावान्निर्दिश्यमानस्यादेशा भवन्तीति सर्वस्यैव जसः स्यात् । न च औ इत्युत्तरसूत्रे दीर्घकारानुवृत्तौ केचिन्मते पूर्वविप्रतिषेधेनादावीकारादेशो जरसादेशे च जरसौत्यादिसिद्ध्यर्थं दीर्घविधानमिति वाच्यम् । कृताकृतप्रसङ्गित्वेन जरसादेशस्य नित्यत्वादादौ स एव स्यात् । केचिन्मतोपसङ्ग्रहार्थं धिरीत्यनन्तरसूत्र एव दीर्घविधानौचित्यादाह । अत एव धिरीत्येव क्वचित्पाठः । क्वचिच्चौरीत्यपि सर्वत्र सूत्रपाठादौ जसी इत्येव पाठ इति चेत् । तथापि जसि ई इति छेदः । जसि इति स्थानसप्तमी । अन्ये तु जस इति साङ्केतिकं षष्ठ्यन्तमेवेति । अन्त्यस्य प्राप्तौ सर्वादेशार्थं गुरुकरणम् । तदसत् । गुरुः शिच्च स 'स्येत्य

गुरुशब्दस्यानेकवर्णादेशोपलक्षकत्वस्य श्रेरयङित्यत्र ङित्करणेन ज्ञापनात् । अन्यथा दिव औ इत्यादौ औकारादीनां द्विमात्रत्वेन गुरुत्वात्सर्वादेशप्रसङ्गात् ॥ गुरुरित्यादि । गुरुरनेकवर्णादेशः । ननु गुरुशब्दस्यानेकाक्षरादेशोपलक्षकत्वेन श्रेरप्यनेकाक्षरत्वादत्र सर्वादेशत्वसिद्धौ पृथगुपादानमपार्थकमिति चेत्, सत्यम्, इत्वन्यादेरित्यत्र शित्करणम् "नानुबन्धकृतमनेकाल्त्वम्" इत्यनुबन्धनिमित्तानकवर्णत्वाभावात् । षुरिति । ष् च र् च अ च एषां समाहारः षु तस्मात् षुः । अत्र रेफात्परस्यापि नस्य णत्वाकरणम् समानपद एव णत्वविधिज्ञापकम् ॥ अवेति । अवप्रत्याहारः कुः कवर्गः पुः पवर्गः एतैर्व्यस्तैः समस्तैर्वान्तरे व्यवधानेऽपि पूर्वोक्तनिमित्तान्नस्य णत्वमित्यर्थः । अपिशब्दोऽनुक्तसमुच्चयार्थः । तेन पर्याणद्धमित्यादौ आङ्पदव्यवधानेऽपि णत्वम् । तथा च अनुस्वारविसर्जनीय≍क≍पव्यवधानेऽपि रिङ्गणम् । उरः केण ईर≍केण । उरः पेण उर≍पेणेत्यादि ॥ २५ ॥

चतुर्थ्येकवचने सर्व ए इति स्थिते ॥ **सर्वादेः स्मट्** ॥ सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति(क) । टकारः स्थाननियमार्थः 'ए ऐ ऐ' । सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः ॥ २६ ॥

( च० ) चतुर्थ्येकवचने सर्व अग्रे ए सूत्रम्—'सर्वादेः स्मट्' ॥ सर्वः आदिर्यस्य स सर्वादिस्तस्मात् सर्वादेः पञ्चम्येकवचनम् । 'ङिति' 'ङसिङसोरस्य' ॥ अग्रे स्मट् । प्रथमैकवचनान्तम् । 'हसे पः से०' सिद्धम् । अनेन स्मडागमः सस्वर एव । टित्वादादौ । 'ए ऐ ए' सर्वस्मै ॥ सर्वाभ्याम् । सर्वेभ्यः ॥ २६ ॥

( प्र० ) सर्वादेरिति । अत्र यद्यपि स्मटष्टित्वादकश्च कित्वादाद्यन्तस्थानत्वेनोभयोरविरोधस्तथापि ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय तक्रमित्युक्तेः, कौण्डिन्यस्यापि ब्राह्मणान्तःपातित्वाद्दधिदाने प्राप्तेऽपि साक्षाच्छिष्टेन तक्रदानेन बाध्यते । तथाऽत्रापि तक्रकौण्डिन्यन्यायेन सर्वादेः स्मडेव ॥ २६ ॥

पञ्चम्येकवचने—सर्व अत् इति स्थिते ॥ **अतः** ॥ सर्वादेरकारान्तात्परस्यातः स्मडागमो भवति दीर्घः । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्य । सर्वयोः ॥ २७ ॥

( च० ) सर्वशब्दात्पञ्चम्येकवचने सर्व अस् । 'ङसिरत्' ततः सर्व अत् इति स्थिते । सूत्रम्—'अतः' ॥ षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'ज्योर्चि०' ॥ 'अकारान्तात्सर्वादेः शब्दात्परस्य ङसिस्थाने जातस्य अत् इत्यस्य स्मडागमो भवति । इत्यनेन स्मडागमः । 'सवर्णे०' सर्वस्मात् ॥ द्वित्वे बहुत्वे च देववत् ॥ षष्ठ्येकवचने 'ङस्स्य' सर्वस्य ॥ षष्ठीद्विवचने सर्व ओस् । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'ज्योर्चि०' । सर्वयोः ॥ २७ ॥

---

( क ) सर्वादेरिति । अत्रात इत्यनुवृत्तेरदन्तादिति । अतो भवते इत्यत्र न । सर्वादेरिति किम्, देवाय । अकोप्ययमपवादो येन नाप्राप्तिन्यायात् । 'सर्वादे'रित्यत्र तद्गुणसंविज्ञानबहुव्रीहिः, तेन सर्वशब्दस्यापि लाभः । सर्व आदिर्यस्य स सर्वादिरिति विग्रहः । ननु सर्वादिशब्दस्य समुदायवाचित्वात् कथं तदवयवे सर्वशब्दे इति चेत्, समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदङ्गेष्विति न्यायेन तदवयवे एव सर्वशब्दे तत्कार्यमिति युक्तत्वात् ।

( प्र० ) अत इति । विभक्तिप्रकरणत्वाद्विभक्तेरेव ततश्च सर्वमततीति सर्वात् इत्या. दावत सातत्यगमन इत्यस्य क्विपि तल्लोपे सर्वादेः परस्यापि अतः स्मडभावः । ङसिरद्भि. स्यतो मण्डूकप्लुत्या विभक्तिविपरिणामेन ङसेरित्यनुवृत्तेर्वा ॥ २७ ॥

**सुडामः** ॥ सर्वादेरवर्णान्तात्परस्यामः सुडागमो भवति(क) । सर्वेषाम् ॥ २८ ॥

( च० ) षष्ठीबहुवचने सर्व आम् इति स्थिते । सूत्रम्—'सुडामः' ॥ सुट् प्रथमैकवचनान्तम् । 'हसे पः०' ॥ आमः षष्ठ्येकवचनान्तम् । 'स्वर०' 'स्रोर्वि०' 'चपा अवेः सर्वादेः परस्यामः सुडागमो भवति । इति सुट् टित्वादादौ । उकार उच्चारणार्थः । तत 'ए स्मि बहुत्वे' 'किलात्षः सः कृतस्य' 'स्वरहीनं०' 'मोऽनुस्वारः' । सर्वेषाम् ॥ २८ ।

( प्र० ) सुडाम इति । अत्र यद्यपि सामान्येन सर्वादिभ्यः सुड्विधौ सर्वादिगणान्तर्वर्तिनोऽत्राानुक्तस्यापि भवच्छब्दस्य प्रसङ्गः । अङ्गीत्यतोऽदित्यनुवृत्तावाबन्तानामप्रसङ्गस्तथाप्याबन्तानां सुड्विध्यर्थं आप इत्यनन्तरसूत्रमनुवर्त्तनीयम् । अ आम इति लुप्तपञ्चम्यन्ताद्वर्णप्रश्लेषो वा । विपरीतनिर्देशात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति वां युवामित्यादौ सुट् न ॥ २८ ॥

सप्तम्येकवचने सर्व ङि इति स्थिते ॥ **ङि स्मिन्** ॥ सर्वादेरकारान्तात्परो ङि स्मिन् भवति(ख) । सर्वस्मिन् । सर्वयोः । सर्वेषु । हे सर्व । हे सर्वौ । हे सर्वे । इत्यादि ॥ २९ ॥

( च० ) सप्तम्येकवचने सर्व ङि इति स्थिते । सूत्रम्—'ङि स्मिन्' ॥ ङि प्रथमैकवचनान्तम् । साङ्केतिकम् । स्मिन् प्रथमैकवचनान्तम् । 'हसे पः०' सर्वादेरिति । अतो ङिस्मिन्नादेशः । सर्वस्मिन्निति सिद्धम् ॥ सप्तमीद्विवचने । 'ओसि' 'ए अय्' 'स्वरहीनं' 'स्रोर्वि०' सर्वयोः । सप्तमीबहुवचने–'ए स्मि बहुत्वे' 'किलात्षः०' सर्वेषु ॥ पदद्वयप्रक्रिया देववत् ॥ सम्बोधने । 'समानाद्धेर्लोपोऽधातोः' हे सर्व । हे सर्वौ । हे सर्वे । प्रथमावत् ॥ २९

( प्र० ) डतरडतमाविति । न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति केवलयोस्तयोः प्रयोगासम्भवात् प्रत्ययग्रहणेन तदन्तस्येति तदन्तग्रहणमित्यर्थः ॥ २९ ।

एवं विश्वादीनामेकशब्दपर्यन्तानां रूपं ज्ञेयं डतरडतमौ विहाय । तौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः । विश्वः । विश्वौ । विश्वे । इत्यादि ॥ अन्यः । अन्यौ । अन्ये । इत्यादि ॥ इतरः । इतरौ । इतरे । इत्यादि ॥ क

---

( क ) सुडाम इति । अत्र मण्डूकप्लुत्या "अमृशसोरस्य" इत्यतोऽस्येत्यनुवृत्त्या अदिति नेत्याह- अवर्णान्तादिति । सर्वादेरित्येतावन्मात्रोक्तौ भवत इत्यत्रातिप्रसङ्गः स्यात् । अदन्तादित्युक्तावाबन्तेऽव्याप्तिः ।

( ख ) ङीति । ङकारो जसीत्वकृतेत्वव्यावृत्त्यर्थः । न च विधिसामर्थ्यात्तद्व्यावृत्तिः, विधेः स्मिन्चरितार्थत्वात् औजसो ङि स्मिनि गौरवप्रसङ्गात् । इ स्मिन्निति कृते कृत्रिमत्वादित्संज्ञकस्यैव ग्रहः स्यात्, अतः कस्यापि स्मिनः, तद्भावे न लोपः स्यादिति विधिसामर्थ्यात् सप्तम्येकवचनस्यैव ग्रहणं भविष्यति । एवं तर्हि स्पष्टार्थोऽयम् ।

तरः। कतरौ। कतरे। इत्यादि ॥ एवमेकशब्दपर्यन्तानां रूपं ज्ञेयम् ॥ पूर्वादीनां तु विशेषः। पूर्वः। पूर्वौ ॥ **पूर्वादीनां तु नवानां जस ईकारो वा वक्तव्यः** ॥ पूर्वे-पूर्वाः ॥ पूर्वम्। पूर्वौ। पूर्वान् ॥ पूर्वेण। पूर्वाभ्याम्। पूर्वैः ॥ पूर्वस्मै। पूर्वाभ्याम्। पूर्वेभ्यः ॥ **पूर्वादिभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ** ॥ पूर्वस्मात्-पूर्वात्। पूर्वाभ्याम्। पूर्वेभ्यः ॥ पूर्वस्य। पूर्वयोः। पूर्वेषाम् ॥ पूर्वस्मिन्-पूर्वे। पूर्वयोः। पूर्वेषु ॥ हे पूर्व। हे पूर्वौ। हे पूर्वे-हे पूर्वाः। एवं परशब्दः। परः। परौ। परे-पराः। इत्यादि ॥ एवमन्तरशब्दपर्यन्तानां रूपं ज्ञेयम् ॥ ३१ ॥

(च०) एवं सर्वशब्दरीत्या डतरडतमौ विहाय तद्वर्जानां विश्वादीनामेकशब्दपर्यन्तानां शब्दानां रूपमत्रसेयम्। परं डतरडतमौ विहाय वर्जयित्वा। यतस्तौ प्रत्ययौ तद्धितोद्भवौ अतस्तदन्ताः कतरकतमादिशब्दा ग्राह्याः। अन्यतरस्य पृथग्ग्रहणे अन्यतमस्य प्रतिषेधः। अन्यत्सर्ववत् ॥ विषेषमाह—तु पुनः पूर्वादीनां नवानां शब्दानां जस ईकारो वा वक्तव्यः। वा सर्ववज्जसोत्यर्थः। अन्यत्र पक्षे देववत्। पूर्वे-पूर्वाः, परे-पराः इत्यादि ॥ पुनः पूर्वादीनां नवानां ङसिश्च ङिश्च ङसिङी तयोः ङसिङ्योर्विषये स्मात्स्मिनावादेशौ वा वक्तव्यौ। पञ्चम्या एकवचने एकत्र सर्ववत् एकत्र देववत्। पूर्वस्मात्-पूर्वात्। पूर्वस्मिन्-पूर्वे। अन्यत्र सर्ववत्। पूर्वः पूर्वौ पूर्वे-पूर्वाः। पूर्वम् पूर्वौ पूर्वान्। पूर्वेण पूर्वाभ्याम् पूर्वैः। पूर्वस्मै पूर्वाभ्यां पूर्वेभ्यः। पूर्वस्मात्-पूर्वात् पूर्वाभ्यां पूर्वेभ्यः। पूर्वस्य पूर्वयोः पूर्वेषाम्। पूर्वस्मिन्-पूर्वे पूर्वयोः पूर्वेषु। हे पूर्व हे पूर्वौ हे पूर्वे-हे पूर्वाः। एवं परादयो बोध्याः ॥ ३१ ॥

प्रथमः। प्रथमौ ॥ **प्रथमचरमतयायडल्पार्धकतिपयनेमानां जसि वा** ॥ प्रथमे-प्रथमाः ॥ चरमः। चरमौ। चरमे-चरमाः ॥ शेषं देववत् ॥ नेमे-नेमाः। शेषं सर्ववत् ॥ तयायटौ प्रत्ययौ, तदन्ताः शब्दा ग्राह्याः। तयप्रत्ययान्तो द्वितयशब्दः। द्वितयः। द्वितयौ। द्वितये-द्वितयाः ॥ एवं त्रितयशब्दः। अयट्प्रत्ययान्तो द्वयः त्रयश्च। शेषं देववत् ॥ एवं नेमपर्यन्तानां रूपं ज्ञेयम् ॥ ३२ ॥

(च०) प्रथमचरमेति सुकरम् ॥ प्रथमचरमाल्पार्धकतिपयानां केवलं जसि विकल्पः। शेषं देववत् ॥ तयट् अयट् प्रत्ययान्तानां द्वयद्वितयादीनां जसि रूपद्वयम्। शेषं देववत् ॥ नेमशब्दस्य जसि विकल्पः। शेषं सर्ववत् ॥ नेमानामिति रूपं यत् दृश्यते तत् 'द्वन्द्वे सर्वादित्वं वा' इति न्यायात् सिध्यति ॥ जसि प्रथमे-प्रथमाः। चरमे—चरमाः। शेषं देववत् ॥ तयायटौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः। द्वितये-द्वितयाः। द्वये-द्वयाः। शेषं देवशब्दवत्। उभयशब्दस्य अयट्प्रत्ययान्तत्वेऽपि सर्वादिपाठाज्जसि नविकल्पः किंतु सर्ववत् ॥ ३२ ॥

(प्र०) प्रथमेति। नेमशब्दस्य प्राप्तविभाषात्वाच्छेषं सर्ववत्। अन्येषां त्वप्राप्त-

स्वादेववत् । त्रयीत्यादौ डीवर्थं तयडयटौ । सङ्ख्याया मित्यस्यटित्त्वात्तयडयटावित्ययं पाठः । उभयशब्दस्यायडन्तत्वेन विकल्पप्राप्तावपि सर्वादिषु साक्षात्पाठादव्युत्पन्नत्वाद्वा नित्यमेव । अयटश्चावयवार्थकत्वादुभौ अवयवौ यस्येति विग्रहे एकवचनान्तत्वम् । येषामिति च बहुवचनान्तत्वम् । द्वयोरवयविनोर्द्वयंवयवासम्भवादुभयशब्दस्य द्विवचनाभाव आर्थिकः ॥३२॥

तीयस्य सर्ववद्रूपं ङित्सु वा वक्तव्यम् । द्वितीयः । द्वितीयौ । द्वितीयाः॥ द्वितीयम् । द्वितीयौ । द्वितीयान् ॥ द्वितीयेन । द्वितीयाभ्याम् । द्वितीयैः ॥ द्वितीयस्मै-द्वितीयाय । द्वितीयाभ्याम् । द्वितीयेभ्यः ॥ द्वितीयस्मात्-द्वितीयात् । द्वितीयाभ्याम् । द्वितीयेभ्यः ॥ द्वितीयस्य । द्वितीययोः । द्वितीयानाम् ॥ द्वितीयस्मिन्-द्वितीये । द्वितीययोः । द्वितीयेषु ॥ हे द्वितीय । हे द्वितीयौ । हे द्वितीयाः ॥ एवं तृतीयः ॥

(च०) तीयस्येति ॥ तीयप्रत्ययान्तस्य द्वितीयतृतीयशब्दयुग्मस्य असर्वादित्वेऽपि ङित्सु वचनेषु विकल्पेन सर्ववद्रूपम् । ङित्सु ङेङसिङसिङिषु वा सर्ववत्त्वमित्यर्थः । द्वितीयस्मै-द्वितीयाय । द्वितीयस्मात्-द्वितीयात् । द्वितीयस्मिन्-द्वितीये । शेषं देववत् । एवं तृतीयः ॥

( प्र० ) तीयस्य इति । तीयप्रत्ययान्तप्रातिपदिकस्येत्यर्थः । ततश्च प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति द्वितीयस्यै द्वितीयायै इत्याद्यपि । सजातीयायेत्यादौ तीयप्रत्ययान्तत्वाभावादर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति वा तदभावः ॥

उभशब्दो नित्यं द्विवचनान्तः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयोः । हे उभौ ॥

(च०) उभशब्दो द्विसंख्यावाचकत्वान्नित्यं द्विवचनान्तः । प्रथमाद्वितीयाद्विवचने 'ओ औ औ' । तृतीयाचतुर्थीपञ्चमीद्विवचने 'अद्भि', षष्ठीसप्तमीद्विवचने 'ओसि' 'ए अय्' स्वरहीनं० 'स्रोर्विसर्गः' सिद्धम् ॥

उभयशब्दस्य द्विवचनाभावादेकवचनबहुवचने भवतः । उभयः । उभये ॥ उभयम् । उभयान् ॥ उभयेन । उभयैः ॥ उभयस्मै । उभयेभ्यः । इत्यादि ॥

(च०) उभयशब्दस्य द्विवचनाभावः । द्विवचनान्तप्रयोगदर्शनाभावादिति केचित् । सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथ वाऽभिधा । पूर्वादिश्च व्यावस्थायां समोऽतुल्योऽन्तरोऽपर । परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि' यथा । उभयः उभये । इत्यादि । इति सर्वादयः ॥

अकारान्तः पुंलिङ्गो मासशब्दः ॥ मासस्याल्लोपो वा ॥ मासशब्दस्याकारस्य लोपो वा भवति सर्वासु विभक्तिषु परतः ॥ हसेपः

सेर्लोपः ॥ हसान्तादीबन्ताच्च परस्य सेर्लोपो भवति(क) ॥ माः—मासः । मासौ—मासौ । मासः—मासाः । मासं—मासम् । मासौ—मासौ । मासः—मासान् । मासा—मासेन । 'स्रोर्विसर्गः' 'आदबे लोपश्' माभ्यां—मासाभ्याम् । माभिः—मासैः । मासे—मासाय । माभ्यां—मासाभ्याम् । माभ्यः—मासेभ्यः । मासः—मासस्य । मासोः—मासयोः । मासां—मासानाम् । मासि—मासे । मासोः—मासयोः । मास्सु—मासेषु । हे माः—हे मास । हे मासौ—हे मासौ । हे मासः—हे मासाः ॥ ३४ ॥

( च० ) मासशब्दे विशेषमाह—सूत्रम्—'मासस्याल्लोपो वा' ॥ मासस्य षष्ठ्येकवचनान्तम् । 'ङसूल्य' ॥ अतः अकारस्य लोपः अल्लोपःप्रथमैकवचनान्तम् 'स्रोर्वि०' 'स्वर्णे दीर्घः' ॥ वा तृतीयैकवचनम् । 'अन्यथा०' इवे 'ड ओ' त्रिपदम् । मासशब्दस्याकारस्य लोपो भवति वा विकल्पेन शसादौ स्वरे परे । सर्वविभक्तिषु परत इत्येके । एतदेव सम्मतम् । यतः अदूषितं परमतं स्वमतमेवेति । अनेन सप्तस्वपि विभक्तिष्वकारलोपः ॥ सौ स्वल्लोपे कृते—'हसेपः०' 'स्रोर्वि०'।स्वरादौ तु 'स्वरहीनं०'। भकारादौ 'स्रोर्वि०' 'आदबे लोपश्' । सप्तमीबहुवचने ऽपि 'स्रोर्वि०' 'विसर्ज०' 'स्वरहीनं' एवं हसान्तसाधनम् ॥ स्वरान्तप्रक्रिया देवशब्दवत् । माः मासौ मासः । मासं मासौ मासः । मासा माभ्यां माभिः । मासे माभ्यां माभ्यः । मासः माभ्यां माभ्यः । मासः मासोः मासाम् । मासि मासोः मास्सु । हे माः हे मासौ हे मासः ॥ 'लतुलसानां दन्ताः' इति स्थानसवर्णत्वात् 'झबे जबाः' इति सकारस्य दकारः स्यात् । माद्भ्याम् माद्भिः मात्सु । इत्यपि केचित् ॥ एवमकारलोपपक्षे साधनम् ॥ पक्षे देवशब्दवत् । मासः मासौ मासाः । इत्यादि ॥ एवमकारान्तप्रक्रिया । निर्जरशब्दस्य स्वरादौ विकल्पेन जरसादेशः । निर्जरः । निर्जरसौ निर्जरौ । निर्जरसः निर्जराः । निर्जरसं निर्जरम् इत्यादि ॥ ३४ ॥

( प्र० ) मासस्येति । मासशब्दस्याकारस्य वा लोपो भवति । शसादौ विभक्ताविति केचित् । पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष्, दोष्, यकृत्, शकृत्, उदक, आस्यशब्देभ्यः पद्, दत् नस्, मास्, हृद्, निश्, असन्, यूषन्,

---

(क) हसेप इति । सूत्रमिदं चन्द्रकीर्त्तिसूरिणा वासुदेवेन च स्त्रीलिङ्गे नदीशब्दप्रक्रियायां व्याख्यातम् । इदमस्य व्याख्यानं—हसश्च ईप् च एतयोः समाहारः हसेप् तस्मात् हसेपः । नन्वत्र हसग्रहणं किमर्थं हसान्तात् संयोगान्तलोपे रूपसिद्धेरिति चेन्न, वेधा इत्यत्र परत्वादपवादत्वाद्वा 'रकोरायो०' इत्यनेन सलोपे "अत्वसोः सौ" विति दीर्घासिद्धेः । अथ परं नित्यं च लोपं बाधित्वा निरवकाशत्वादत्वसोरित्यस्यैव प्रवृत्तिरिति चेन्मैवम्, शक्नोतीति शक् इत्यस्यासिद्धेः । संयोगान्तलोपं बाधित्वा 'स्कोरायो' रिति कलोपप्राप्तेः । तस्माद्धसग्रहणम् । अथ गङ्गामिच्छतीति गङ्गीयति, ततः क्विपि अल्लोपयलोपौ गङ्गीरिति । तत्रापः भूतपूर्वप्रकारमाश्रित्य ईपः सिलोपोऽस्त्विति न च वाच्यम्, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषया तदग्रहणात् । ननु निष्कौशाम्बिरित्यत्र ह्रस्वत्वेऽपि ईपमाश्रित्य सेर्लोपोऽस्त्विति चेन्न, तत्र ईईबिति प्रश्लिष्य दीर्घस्यैवेपः सर्वत्र ग्रहणात् । अत्र तस्मादित्यनुवृत्त्या स्यापत्युवृत्त्या वा ईप्साहचर्याद्वा अभैत्सीदित्यादौ न लोपः ।

दोषन्, यकन्, शकन्, उदन्, आसन्नादयः शब्दाः पृथगेव लोकाद्वा शस्प्रभृतिष्वेषामेते आदेशा तथासङ्ख्यमुख्याः । लोपस्यादेशविशेषत्वात्षष्ठीनिर्दिष्टत्वादेवान्त्यस्याकारस्य सिद्धौ अधिकवर्णग्रहणस्याधिककार्यसिद्धे वाशब्दादेषोऽर्थोऽवसेयः । वस्तुतस्तु एतन्मते तु पदादयः पृथक्शब्दा एव ॥ ३४ ॥

आकारान्तः पुंलिङ्गः सोमपाशब्दः । सोमपाः । सोमपौ । सोमपाः । सोमपाम् । सोमपौ ॥

**आतो धातोर्लोपः** ॥ धातुसम्बन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे(क) । सोमपः । क्विबन्ता धातवो यद्यपि शब्दत्वं प्राप्तास्तथापि धातुत्वं न जहति । सोमपा । सोमपाभ्याम् । सोमपाभिः । सोमपे । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपाभ्याम् । सोमपाभ्यः । सोमपः । सोमपोः । सोमपाम् । सोमपि । सोमपोः । सोमपासु । अधातोरिति विशेषणाद्धेर्लोपो नास्ति । हेसोमपाः । हेसोमपौ । हेसोमपाः ॥ एवं कीलालपा, शङ्खध्मा, [मधुपा] विश्वपा [धनदा, वर्चोदा] प्रभृतयः(ख) ॥ ३५ ॥

( च० ) अथ आकारान्तप्रक्रियामाह—तत्राकारान्तः पुंलिङ्गः पुमानेव लिङ्गं विवक्षितं यस्य सः पुंलिङ्गः सोमपाशब्दः । पा पाने । पा सोमपूर्वः । 'क्विप्' इति क्विप् प्रत्ययः क्विपः सर्वापहारी लोपः । नामत्वात्स्यादयः । क्विबन्तत्वाद्धातुत्वं न जहति शब्दत्वं च प्रतिपद्यते । प्रथमैकवचने 'स्रोर्विसर्गः' प्रथमाद्विवचने 'ओ औ औः' प्रथमाबहुवचने 'सवर्णे०' 'स्रोर्विसर्गः' धौ धातुत्वाद्धेर्लोपो न किन्तु 'स्रोर्विसर्गः' हे सोमपाः । हे सोमपौ । हे सोमपाः । द्वितीयैकवचने 'सवर्णे०' 'मोऽनुस्वारः' द्वितीयाद्विवचने 'ओ औ औः' सोमपाः सोमपौ सोमपाः । सोमपां सोमपौ । द्वितीयाबहुवचने सोमपा अस् इति स्थिते । सूत्रम्—'आतो धातोर्लोपः' ॥ आतः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । धातोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' 'स्रोर्वि०' 'इबे०' 'उओ०' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'नामिनो रः' जलतुम्बिका० । सूत्रं सिद्धम् । वृत्तिः सुकरा । अनेन शसादौ स्वरादावाकारलोपः । 'स्वरहीनं०' सकारस्य विसर्गः । आमि 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ हसादावविशेषः । सोमपासु । अत्र क्विलाभावात् 'क्विलात्पः सः कृतस्य' इति न भवति । एवं कीलालपाशङ्खध्माविश्वपाप्रभृतयः ज्ञेयाः । कीलालं रुधिरं पिबतीति कीलालपा राक्षसः ॥ ३६ ॥

( प्र० ) आत इति । तत्राऽधर्मेण पुनरुच्चार्य्याद्धातोरातो लोपः क्वचिदित्यर्थकल्प-

---

( क ) आतो धातोरिति । धातोः किम्, खट्वाः पश्य । न च नामत्वधातुत्वयोर्विरोधात् कथं धातुत्वमिति वाच्यम्, क्विबन्ता विजन्ता विडन्ताश्च धातुत्वं न जहति नामत्वं प्रतिपादयन्तीति वचनादविरोधात् । नन्वस्य धातोरिति किमिति न सूत्रितमिति चेन्न, श्रीपेण कुलेनेत्यादावपि परत्वादकारलोपापत्तेर्दुर्वारत्वात् ।

( ख ) कीलालपेति । "क्षीरे पुष्परसे तोये मद्ये मण्डे घृते स्रजि । सप्तस्वर्थेषु कीलालं कथयन्ति मनीषिणः ।" इति कीलालपदार्थः ।

नात् क्त्वः इन इत्यादावल्लोपः । धातोः किम् । हाहान् । क्विबन्तत्वाच्चास्य सोमपाश-ब्दस्य धातुत्वम् । तदुक्तम् । "शतृशानच्क्विबन्तानां क्तप्रत्ययान्तानां तथैव च । तृजन्तानां च धातूनां धातुत्वं नोपहन्यते ॥" इति । धौतपरस्य तावन्मात्रग्राहकत्वात्सोमपेन कुलेनेत्या-दावप्रसङ्गः । वस्तुतस्तु द्विमात्रोच्चारणसामर्थ्यादेव सवर्णानुपस्थितौ तसन्तमेव सर्वविधिभ्यो लोपविधिर्बलवानिति धिलोपे पश्चात्प्रत्ययलोपे प्रत्ययलक्षणमिति तदाश्रयकार्यम् ॥ ३९ ॥

आकारान्तो हाहाशब्दः । हाहाः हाहौ हाहाः । हाहाम् हाहौ हाहान् । आदन्ताच्छसो नत्वाभाव इत्येके । तेन हाहाः । 'सवर्णे दीर्घः सह' । हाहा हाहाभ्याम् हाहाभिः । 'ए ऐ ऐ' हाहै हाहाभ्याम् हाहाभ्य । हाहाः हाहा-भ्याम् हाहाभ्यः । हाहाः हाहौः । 'अकारान्तेषु आबन्तानामेव नुडागमो नान्येषाम्' इति नियमात् । 'सवर्णे दीर्घः सह' । हाहाम् । हाहे हाहौः हा-हासु । हे हाहाः हे हाहौ हे हाहाः ॥

( च० ) आकारान्तो हाहाशब्दस्तस्य च अक्विबन्तत्वान्न धातुसंज्ञा । अतस्तस्य साधना भिन्नैव । हाहाः । प्रथमैकवचने 'स्तोर्वि०' । हाहौ 'ओ औ औ' । हाहाः । हाहां हाहौ हाहान् । आकारान्तत्वाच्छसो नत्वाभावः इत्येके हाहाः ॥ हाहा 'सव-र्णे०' । हाहाभ्यां हाहाभिः । हाहै 'ए ऐ ऐ' । हाहाभ्यां हाहाभ्यः । हाहाः 'सवर्णे०' 'स्तोर्वि०' । हाहाभ्यां हाहाभ्यः । हाहा हाहौः । 'ओ औ औ' स्तोर्वि०' । हाहाम् । पुंलिङ्गस्य दीर्घसमानत्वान्नुडागमो न किन्तु 'सवर्णे०' 'मोऽनुस्वारः' । हाहे 'अ इ ए' । हाहौः 'ओ औ औ' 'स्तोर्वि०' हाहासु । सम्बोधनं प्रथमावत् ॥

इकारान्तः पुलिङ्गो हरिशब्दः । तत्र प्रथमैकवचने हरि सि इति स्थिते 'स्तोर्विसर्गः' हरिः ॥

( च० ) इकारान्तसाधनमाह—इकारान्तो हरिशब्दः दशार्थवाचकः । यतः—'अ-र्कमर्कटमण्डूकविष्णुवासववायवः । तुरङ्गसिंहशीतांशुयमाश्च हरयो दश' । हृञ् हरणे हृ । 'इखखि' इति इप्रत्ययः । 'गुणः' 'स्वरहीनं०' हरि स् प्रथमैकवचने 'स्तोर्वि०' ॥

**औ यू** ॥ इकारान्तादुकारान्ताच्च पर औकारो यू आपद्यते ई ऊ भवतः । हरी ॥ ३६ ॥

( च० ) सूत्रम्—'औ यू' ॥ औ प्रथमैकवचनान्तं सांकेतिकम् । यू इश्च ऊश्च यू द्वितीयाद्विवचनान्तम् । सांकेतिकम् । इकारान्तात्परस्य औ इत्यस्य ई । उकारान्तात्प-रस्य च ऊ इत्यर्थः । अनेन औस्थाने ई । 'सवर्ण०' ॥ ३६ ॥

हरि जस् इति स्थिते ॥ **ए ओ जसि** ॥ इकारान्तस्य उकारान्तस्य च जसि परे एकार ओकारश्च भवति(क) । 'ए अय्' हरयः ॥ ३७ ॥

---

( क ) ए ओ जसीति । इदुद्भ्यां पर औ यू स्याताम् । ईदूतोर्दीर्घयोर्ग्रहणे ई ऊ इति पदद्वयं बो-ध्यम् । ह्रस्वग्रहणपक्षे तु यु इत्यत्रेतरेतरद्वन्द्वः ।

( च० ) सूत्रम्—'ए ओ जसि' ॥ ए प्रथमैकवचनान्तं सांकेतिकम् । ओ प्रथमै-कवचनान्तम् । सांकेतिकम् । जसि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' सिद्धम् । इकारस्य जसि परे एकारः उकारस्य च ओकारः । अनेन ए 'ए अय्' 'स्वरहीनं०' 'सोर्विं०'॥३७॥

**धौ** ॥ इकारान्तस्य उकारान्तस्य च धिविषये एकार ओकारश्च भव-ति(क) । हेहरे । हेहरी । हेहरयः ॥ हरिम् ॥ हरी । हरीन् ॥ ३८ ॥

( च० ) सम्बोधने । सूत्रम्—'धौ' ॥ धिशब्दस्य सप्तम्येकवचनम् । 'ङेरौ ङित्' ङित्वाट्टिलोपः । एकपदम् । धौ धिविषये इकारस्य एकारः । उकारस्य ओकारः । 'स-मानाद्धेर्लोपो०' इति धेर्लोपे कृते धौ इत्येकारः । 'सर्पे नष्टे सर्पघृष्टिर्न याति' इति न्या-याद्धिलोपेऽपि धिविषयो न याति । हे हरे । हे हरी 'औ यू' हे हरयः । 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'सोर्विं०' ॥

द्वितीयैकवचने । 'अम्शसो०' अकारस्य लोपः । 'मोऽनुस्वारः' द्वितीयाद्विवचने 'औ यू' 'सवर्णे०' द्वितीयाबहुवचने । 'अम्शसो०' 'सो नः पुंसः' 'शसि' इति दीर्घः । हरीन् ॥ ३८ ॥

**टा नाऽस्त्रियाम्** ॥ इकारान्तादुकारान्ताच्च परष्टा ना भवति अस्त्रि-याम्(ख) । हरिणा हरिभ्याम् हरिभिः ॥ ३९ ॥

( च० ) तृतीयैकवचने सूत्रम्—'टा नाऽस्त्रियाम्' ॥ टा प्रथमैकवचनान्तम् । सांकेतिकम् । ना प्रथमैकवचनान्तं सांकेतिकम् । न स्त्री अस्त्री तस्याम् । सप्तम्येकव-

---

( क ) धाविति । अत्र ए ओ धिजसोरिति जसध्योरिति वा एकयोगो न कृतो यथाक्रमं स्थानिनो-रादेशविधानशङ्कानिरासाय ।

यत्तु—योगविभागो विषयसप्तमीलाभार्थ इति, तन्न, विषये सप्तम्या अविधानादित्युक्तं, तच्चिन्त्यम्, विषये सप्तम्या बहुस्थले दर्शनात् । किं च यत्र प्रत्ययोत्पत्तेः पूर्वमेव कार्य्यं विधीयते तत्रैव विषयसप्तमीति व्यवहारः प्राचाम् । यथार्धधातुके "ब्रुञो वच्" "चक्षिङः ख्याञ् दपः" एवं वदता त्वया स्वयमेव विषय-सप्तम्याः स्वीकृतत्वात् ।

( ख ) टानेति । अत्र 'सेना' इति निर्देशात् अस्त्रियामिति प्रश्लिष्टो नञ् अस्तीति मत्वाह—अस्त्रि-यामिति । किमर्थमिदमुच्यतेऽस्त्रियामिति, ना पुंसीत्युच्यते, क्लीबेऽपीष्टत्वात् अमुनेति । नन्वत्र "नामि-स्वरे" इति नुमि नाभावेऽपि समानमेवेति नुमेवास्तु । मैवम् । असति ह्यस्त्रियाग्रहणे 'अमुना' इत्यत्रादस्-टाप्रत्यये त्यदाद्यत्वे मत्वे च 'अमटा' इति स्थिते, परत्वान्नित्यत्वाच्च 'मादू' इत्युत्वं प्राप्नोति । प्रकृतिप्रत्यय-भिन्नत्वेनान्तरङ्गत्वादिनादेशश्च तत्र बलीयस्त्वादिनादेश एव स्यात् । उक्तं हि—

"परं विदुः पूर्वपरापपत्तौ परस्य नित्यस्य च नित्यमेव ।
नित्यान्तरङ्गोपगमेऽन्तरङ्गस्तत्समाङ्घ्रिविधिः प्रातिपदो बलीयान्" ॥ इति ।

अत एव वक्ष्यति 'अद्गीत्यात्वं पश्चादुकार' इति ।

तदेवमिनादेशे एत्वे पश्चादुत्वे चामुनेति स्यादिति कुत्र नुम् स्यात् । कुत्रतराश्च नाभावः ।

सति पुनरस्त्रियामिति ग्रहणे क्लीबे नुमाबाधित सकलविषयो नाभावः । स्वसामर्थ्यात्तु दुर्बलमप्युत्वं प्र-वर्त्य प्रवर्त्तते । तदेवं क्लीबे प्राक् प्रवृत्त्या जातबलमुत्वं पुंस्यपि प्रागेव प्रवर्त्तते ततो नाभावः । अत एव वक्ष्यति—'मत्वे उत्वे च कृते टा ना स्त्रियामिति' । 'हरिणा' इति । अवकुविति णत्वम् ।

नम् । 'स्त्रियां य्वोः' इति ङेशम् । 'स्त्रोर्ङ्वोः' 'स्वरहीनं०' 'सवर्णे०' 'मोऽनुस्वारः' सिद्धम् । इकारान्तादुकारान्ताच्च शब्दात्परो यः टा इति विभक्तिवचनरूपस्तस्य स्थाने ना इति भवति । पुंलिङ्गे नपुंसकलिङ्गे तु न भवति ॥ अनेन टा इत्यस्य ना 'रुर्नो णो०' इत्यादावविशेषः ॥ ३९ ॥

ङिति ॥ इकारान्तस्य उकारान्तस्य च ङिति परे एकार ओकारश्च भवति(क) । 'ए अय्' । हरये । हरिभ्याम् हरिभ्यः ॥ ४० ॥

( च० ) सूत्रम्—'ङिति' ङ् इत् अनुबन्धो यस्य स ङित् तस्मिन् ङिति । सप्तम्येकवचनान्तम् । 'स्वरहीनं०' एकपदम् इकारान्तस्य ङेङसिङस्ङिष्वेकारः उकारस्य ओकारः । अनेन चतुर्थ्येकवचने रि इत्यस्य रे । 'ए अय्' 'स्वरहीनं०' हरये ॥ ४० ॥

ङस्य ॥ एदुद्भ्यां परस्य ङसिङसोरकारस्य लोपो भवति(ख) । हरेः । हरिभ्याम् । हरिभ्यः ॥ हरेः । हर्योः । हरीणाम् ॥ ४१ ॥

(च०) पञ्चम्येकवचने षष्ठ्येकवचने च । 'ङिति' इत्यनेन एकारे कृते ॥ सूत्रम्—'ङस्य' ॥ एकारेणोपलक्षितः अः ङः तस्य । केचित्तु 'ङसिङसोरस्य' एवं सूत्रं पठन्ति । एकारौकाराभ्यां परस्य पञ्चमीषष्ठ्येकवचनसम्बन्धिनोऽकारस्य लोपो भवति । अनेन अकारलोपः । 'स्त्रोर्विसर्गः' षष्ठीद्विवचने । 'इ यं स्वरे' 'रात्परो द्विः' जलतुम्बिका० । 'स्वरहीनं०' । षष्ठीबहुवचने 'नुडामः' 'नामि' 'रुर्नो णो०' 'स्वरहीनं' मोऽनुस्वारः ॥ ४१ ॥

( प्र० ) ङस्येति । ङकारोपलक्षितो अः ङस्तस्य स च ङसिङसोरेवेत्यभिप्रेत्योक्तं ङसिङसोरकारस्येति ॥ ४१ ॥

ङेरौ डित् ॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च डित् (ग) ॥४२॥

डिति टेः ॥ डिति परे टेर्लोपो भवति । हरौ । हर्योः । हरिषु ॥ एवं अग्निगिरिरविकविप्रभृतयः पुंलिङ्गा ॥ ४३ ॥

(च०) सूत्रम्—'ङेरौ डित्' ॥ ङेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङसिङसोरस्य' 'स्त्रोर्वि०' औ प्रथमैकवचनान्तं सांकेतिकम् 'नामिनो रः' । डित प्रथमैकवचनान्तम् । 'हसेपः से०' सिद्धम् । इकारोकाराभ्यां परस्य सप्तम्येकवचनस्य ङि इत्यस्य औ भवति । स च डित्संज्ञकः । डित्प्रयोजनमाह-सूत्रम्-'डिति टेः' । ड् इत् यस्य स डित् तस्मिन् सप्तम्येकवचनान्तम् । 'स्वरहीनं०' । टेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्त्रोर्वि०'

---

( क ) ङितीति । ङ् इयस्याऽसौ ङित्तस्मिन् । ङे ङसि ङस् ङि प्रत्यये इत्यर्थः ।

( ख ) ङस्येति । ङकारग्रहणेन ङसिङसोर्ग्रहणम् । एदोताऽत इति सूत्रमनुवर्त्तते लोपश्च इति च । एदोऽतः परस्य ङस्याकारस्य लोपश्च स्यात् । ङकारस्य इत्संज्ञायामकारः परत्वेन लभ्यते । एदोत इति किम्, रायः, ग्लावः । अस्येति किम् , हरये, भानवे । ङस्यातः किम्, हरयः, भानवः ।

( ग ) ङेरावीति । इदुद्भ्यां परस्य सप्तम्येकवचनस्य औः स्याद् स च डित्संज्ञकः ।

ननु 'ङे डौ' इत्येव वक्तव्यं किं डिच्छब्देनेति चेन्न, डिद्ग्रहणं 'अतो ङ ङः' इत्यादौ डिदित्यस्यानुवृत्त्यर्थम् । इदुद्भ्यां किम्, रायि, गवि । तपरत्वं किम्, वातप्रमी, हुह्वी ।

वृत्तिः कण्ठ्या । ङकार इत् यस्य तस्मिन्नादेशे तस्यां विभक्तौ प्रत्यये च परे टेर्लो भवति । इति डित्वाट्टिलोपः । 'स्वरहीनं०' । केचित् 'ङिति' इत्येकारे कृते 'यदागे स्तद्गुणवती'ति न्यायात् ङेरौकारमिच्छन्ति । हरौ इति सिद्धम् ॥ द्विवचने पूर्ववत् सप्तमीबहुवचने । 'क्विलात्षः सः' ॥ एवं हरिशब्दवत् अग्न्यादयोऽपि शब्दा ज्ञेयाः अग्निरविकपिगिरिमुनिकलिमाधिनिधिसंधिविधिप्रभृतयः ॥ ४२-४३ ॥

उकारान्ताश्च विष्णुवायुभानुप्रभृतयोऽप्येतैरेव सूत्रैः सिद्ध्यन्ति । भानुः भानू । भानवः । भानुम् । भानू । भानून् । भानुना । भानुभ्याम् । भानुभिः । भानवे । भानुभ्याम् । भानुभ्यः । भानोः । भानुभ्याम् । भानुभ्यः भानोः । भान्वोः । भानूनाम् । भानौ । भान्वोः । भानुषु । हेभानो हेभानू हेभानवः । इत्यादि ॥ एवं विष्णुवायुप्रभृतयः ॥

(च०) उकारान्ताश्च वेणुविष्णुभान्वादयोऽप्येतैरेव सूत्रैः सिध्यन्ति । भानुशब्द 'औ यु' इत्यनेन औ इत्यस्य ऊ 'सवर्णे०' भानू । जसि 'ए ओ जसि' 'अव्' भानवः धौ च 'समानाद्धेर्लोपः०' इति उकारस्य ओकारः । तृतीयैकवचने 'टा ना स्त्रियाम्' डि चतुर्थ्येकवचने 'ङिति' इति उकारस्यौकारः 'ओ अव्' ॥ पञ्चमीषष्ठ्योरेकवचने 'ङस्ङ रयकारलोपः । सप्तम्येकवचने 'ङेरौ डित्' ॥ ओसि 'उवम्' । सुपि 'क्विलात्ष' सः०' ( उकारान्तः पुंलिङ्गस्तितउशब्दः । तितउः तितऊ तितावः । 'ए ओ जसि' 'ओ अव् 'सवर्णे०' । तितउं तितऊ तितऊन् । तितउना तितउभ्यां तितउभिः । तितावे तितउभ्य तितउभ्यः । तितओः तितउभ्यां तितउभ्यः। तितावोः तितओः तितऊनाम् तितऔ ति तवोः तितउषु । हे तितओ हे तितऊ हे तितावः ) ॥

इकारान्तस्यापि सखिशब्दस्य भेदः । सखि सि इति स्थिते ॥

**सेर्डाऽधेः** ॥ सखिशब्दस्य सेरधेर्डा भवति(क)। डित्वाट्टिलोपः । सख अधेरिति विशेषणादेकारो धिविषये । हेसखे ॥ ४४ ॥

(च०) इकारान्तस्यापि सखिशब्दस्य हरिशब्दापेक्षया भेदो विशेषोऽस्ति तमाह षणदाने । सनोति ददातीति सखा । सनेडखिप्रत्ययः । डित्वाट्टिलोपः सखि इति जा तम् । अग्रे सि । सूत्रम्-'सेर्डाऽधेः' ॥ से षष्ठ्येकवचनम् । ङस् 'ङिति' 'ङस्य' 'स्रो विं०' ॥ डा प्रथमैकवचनान्तम् सांकेतिकम् । 'नामिनो रः' जलतुम्बि० । न धिः अधि स्तस्य अधेः षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' 'स्रोर्विसर्गः' 'सवर्णे दीर्घः०' ॥ सखिशब्द सम्बन्धिनो धिवर्जितस्य सेर्डा भवति ॥ अनेन सेर्डा । डित्वाट्टिलोपः—'ङिति टेः' 'स्रो

(क) 'ऐ सख्युः' इत्यतः सख्युरिति षष्ठ्यन्तमनुवर्त्तमानं सेरित्यनेन सम्बन्धात् सखिशब्दार्थस्यैक वाच्ये विहितस्य सेरित्यर्थं प्रत्याययतीति मत्वाऽऽह—सखिशब्दस्येति । तदर्थस्यैकत्वे विहितस्येत्यर्थ तेन शोभनः सखा यस्य सः सुसखिरित्यत्र न भवति, अन्यपदार्थस्यैकत्वे सेर्विहितत्वात् । गौणमुख्यन्याये वात्र न भवति । अतएव शोभनः सखा 'ससखा' इत्यत्र भवतीति,—माधवः । अत एव तदन्तादि चिन्त्यम् ।

धि०' सेडाऽधेरिति सूत्रमध्ये अधेरिति पदग्रहणात् धिविषये डा आदेशो न भवति । किंतु 'समानाद्धेर्लोपो०' इति धिलोपं विधाय पश्चात् 'धौ' इति सूत्रेण एकार एव भवति । हे सखे इति सिद्धम् ॥ ४४ ॥

( प्र० ) अधेरिति । ऐ सख्युरित्यत्राधेरित्यनुवृत्तेस्तस्य च विभक्तिविपरिणामेन सप्तमीबहुवचनान्तत्वेन धिवर्जितेषु पञ्चस्वित्यर्थादौकाराभावेऽपीत्यर्थः । अन्यथा सख्युरित्यस्य दुर्वारत्वात् ॥ ४४ ॥

**ऐ सख्युः** ॥ सखिशब्दस्यैकारादेशो भवति धिवर्जितेषु पञ्चसु परेषु(क)॥ **षष्ठीनिर्दिष्टादेशस्तदन्तस्य ज्ञेयः**॥ आयादेशः । सखायौ ॥ ४५ ॥

(च०) प्रथमाद्विवचने सूत्रम्—'ऐ सख्युः' ॥ ऐ प्रथमैकवचनान्तं सांकेतिकम् । सख्युः इति षष्ठ्येकवचनम् । 'ऋकृके' 'इ यं स्वरे' 'स्वरहीनं०' 'ऋतो ङ उः' टिलोपः । 'स्वरहीनं०' 'स्रोर्वि०' द्विपदम् । 'सेडधेः' इति सूत्रादधेरिति पदम् 'ऐ सख्युः' इत्यत्राकर्षणीयम् । तेन सखिशब्दस्य धिवर्जितेषु पञ्चसु स्यादिषु वचनेषु परेषु ऐकारादेशो भवति । 'शत्रुवदादेश' इति वचनात्सर्वस्यापि न कथमैकारः । तत्रोच्यते—'षष्ठीनिर्दि०' षष्ठ्या विभक्त्या निर्दिष्टः कथितः उच्चरितः सूत्रमध्ये यः शब्दस्तस्य प्राप्त आदेशस्तदन्त्यान्तस्य भवति न तु सर्वस्य । यथा 'ऐ सख्युः' इत्यत्र सखिशब्दस्य षष्ठ्या निर्दिष्टत्वात् सखिशब्दस्य प्राप्त ऐकारादेशः सखिशब्दस्यान्त्यो य इकारस्तस्य भवति । ननु पञ्चस्विति ग्रहणात् सौ परे एकारादेशः कथं न क्रियते तत्राह—सौ परे तु ऐकारादेशे कृतेऽप्यकृतेऽपि डादेशस्य नित्यत्वात् डादेश एव स्यात् नत्वैकारः ॥ अथवा 'ऐ सख्युः' इति सूत्रे विपरीतकरणात्सौ परे ऐकारो न क्वचित् 'औकारादिचतुर्षु परेषु' इत्येवास्ति । अनेन इकारस्यैकारः 'ऐ आय्' 'स्वरहीनं०' ॥ एवं प्रथमाबहुवचने । द्वितीयाद्विवचने । एतेष्वपि ज्ञेयम् ॥ ४५ ॥

( प्र० ) षष्ठीनिर्दिष्टस्येति । षष्ठ्या निर्दिष्टः षष्ठ्यन्तत्वेनोद्दिष्टस्तस्य य आदेशः स तस्यान्तस्य स्यादित्यर्थः। सखायमित्यत्र परत्वात्कृताकृतप्रसङ्गित्वेन नित्यत्वाच्चादावैकारे समानत्वाभावान्नाम्शसोरस्येत्यकारलोपः ॥ ४५ ॥

**द्विवचनस्यावा वा छन्दसि** ॥ द्विवचनस्यौकारश्छन्दस्याकारमापद्यते । सखाया । सखायः ॥ सखायम् ॥ सखायौ ॥ सखीन् ॥ ४६ ॥

(च०) द्विवचनस्य औ आ वा छन्दसि । द्विवचनस्य प्रथमाद्विवचनस्य औ इत्यस्य छन्दसि वेदे वा आ भवति । सखाया ॥ सम्बोधने अधेरिति विशेषणादेकवचने ऐकारो न । तत्र हरिशब्दवत् । 'समानाद्धेर्लोपो०' 'धौ०' शेषं प्राग्वत् । द्वितीयाबहुवचने हरिवत् ॥ ४६ ॥

सखि टा इति स्थिते ॥ **सखिपत्योरीङ्** ॥ सखिपतिशब्दयोरिङा-

---

( क ) पञ्चस्विति । इतोःपञ्चस्वित्यतोऽनुवृत्तेः सि औ जस् अम् औ इत्यर्थः । यद्येवं सावपि प्राप्नोति । नैवम् । परेण डादेशेन बाधितत्वाद् विषम उपन्यासः ।

गमो भवति टाङेङिषु परतः(क) । दीर्घत्वान्ना न भवति । सख्या ॥ ४७ ॥ आगमजमनित्यम् ॥ आगमजं कार्यं अनित्यं स्यात् वा छन्दसि । सखिना सखिभ्याम् सखिभिः । सख्ये सखिभ्याम् सखिभ्यः ॥ ४८ ॥

(च०) तृतीयादौ विशेषमाह—सूत्रम्—'सखिपत्योरिक्' ॥ सखिश्च पतिश्च सखिपती तयोः सखिपत्योः' षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'स्वरहीनं' सोर्विसर्गः' । ईक् प्रथमैकवचनान्तम् । 'हसेपः०' सखिपतिशब्दयोः टाङेङिषु परतः ईगागमो भवति । कित्वादन्ते । दीर्घत्वान्ना न भवति । ततो दीर्घः । ईकारान्तत्वात् 'टा ना स्त्रियाम्' इति सूत्रेण टास्थाने ना न भवति । किंतु 'सवर्णे०' 'इयं स्वरे' सख्या पत्या इति सिद्धम् ॥ पुनरागमजमनित्यम् । आगमाज्जातमागमजं कार्यमनित्यं क्वचिन्न भवति । इति न्यायात्क्वचिदीकारागमो न भवति । तेन छन्दसि सखिना पतिना इति रूपं भवति । तत्र 'टानाऽस्त्रियाम्' । चतुर्थ्येकवचने ईगागमः । 'सवर्णे०' इयं स्वरे' 'स्वरहीनं०' सख्ये ॥ ४८ ॥

( प्र० ) सखिपत्योरिति । ए टाङ्योरित्यतष्टाङ्योरिति ङेइत्युत्तरसूत्राच्च तस्यानुवृत्तेर्ङेः अपीत्यभिप्रेत्योक्तं टाङेङिषु परत इति ॥

दीर्घत्वादिति । यद्यपि ह्रस्वविधावपि कृताकृतप्रसङ्गित्वात्प्रथमं सवर्णदीर्घत्वेऽपि ना न स्यात्तथापि तद्विधेर्न्यायासिद्धत्वज्ञापनात्सप्तम्येकवचने प्रथममौकारः । "सखिना वानरेन्द्रेण" "अन्यत्र पतिना सह" इत्याद्यार्षप्रयोगसिद्ध्यर्थमाह । आगमजमिति । आगमाज्जायते इति आगमजं तदनित्यमित्यर्थः । अनित्यमागमानुशासनमिति परिभाषया इति भावः ॥ ४८ ॥

ऋङ्ङे ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे । सख्यृ अस् इति स्थिते ॥४९॥ ऋतो ङ उः॥ ऋकारान्तात्परस्य ङसिङसोरकारस्य उकारो भवति स च डित्(ख)। डित्त्वाट्टिलोपः । सख्युः । सखिभ्याम् । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने 'ङेरौ डित्' इत्यौकारे कृते 'सखिपत्योरीक्' इतीगागमः । सख्यौ । सख्योः । सखिषु ॥५०॥

(च०) पञ्चमीषष्ठ्योरेकवचने विशेषमाह—सूत्रम्—'ऋङ्ङे' ॥ ऋक् प्रथमैकवचना-

---

( क ) सखिपत्योरिति । टाङ्योरिति सूत्राद् टाङ्योरित्यनुवर्त्तते । तथा च टाङ्योरेवानेन ईक् । सख्ये इति सिद्ध्यर्थं तु 'ङे' इति सूत्रान्तरम् । तथा च ङयि परे सखिपत्योरीगागमो भवतीति तस्यार्थः । दीर्घविधिर्नात्वादिप्रतिषेधार्थः, इत्यभिप्रेत्याह—दीर्घत्वादिति । यद्यपि ह्रस्वकरणेऽपि विधानसामर्थ्यान्नात्वादिप्रतिषेधो लभ्यते, तथापि ङौ ङिः सवर्णदीर्घे सखी इत्येव स्यादिति दीर्घकरणात् प्रथममौत्वाटिलोपयोः प्रसक्तयोः पश्चादेकदेशविकृतन्यायेन ईगागमे कृते सख्याविति रूपसिद्ध्यर्थं दीर्घविधानस्यावश्यकत्वात् । अत एव ईदिह न कृतः । 'सखिपत्योर्या' इत्यपि न सूत्रितम् । सख्या सख्ये इति सिद्धावपि ङौ 'सख्यि' इति रूपापत्तेः ।

( ख ) ऋत इति । अत्र ऋमात्राद् ङसिङसौ न सम्भवतः इति सामर्थ्यात्तदन्तग्रहणमित्याह—ऋकारान्तादिति । 'ऋतो ङ' इति सूत्रणीये ङग्रहणं वर्णमात्रविधौ यदादेशस्तद्वद्भवतीति न प्रवर्त्तते इति ज्ञापनार्थम् इति लोकेशकरः ।

न्तम् । 'हसेपः०' । ङकारेणोपलक्षितः अः ङः तस्मिन् ङे । सप्तम्येकवचनान्तम् । 'अ इ ए, अथवा—'जमे जमा वा' 'ऋङ्डे' सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे । 'इ यं स्वरे' सख्यृ अस् इति स्थिते सति सूत्रम्—'ऋतो ङ उः' ॥ ऋतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ङकारेणोपलक्षितः अः ङः तस्य षष्ठ्येकवचनान्तम् । सांकेतिकम् । उः प्रथमैकवचनान्तम् । 'स्रोर्वि०' सूत्रमिदं सिद्धम् । ऋकारा० वृत्तिः कण्ठ्या । अनेनोभयत्राप्यकारस्योकारः सचोकारः डित्संज्ञकः कल्प्यः । डित्वाट्टिलोपः । 'डिति टेः' 'स्वरहीनं०' 'स्रोर्विसर्गः' 'इ यं स्वरे' 'स्वरहीनं०' 'स्रोर्वि०' ॥ षष्ठीबहुवचने 'नुडामः' 'नामि०' 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ सप्तम्येकवचने 'ङेरौ डित्' इत्योकारे कृते डित्वाट्टिलोपे च कृते 'यदादेशस्तद्वद्भवति' इति न्यायात् 'सखिपत्योरीक्' इति ईगागमः । 'इ यं स्वरे' ॥ शेषं हरिवत् । एवं सखिशब्दसाधनम् ॥ ९० ॥

( प्र० ) ऋङ्डेः इति । अत्र यदि ङ इति चतुर्थ्येकवचनमभिप्रेतं स्यात्तर्हि ङेइत्यस्यानुवृत्तेरेव पुनर्ग्रहणं न कुर्यात्तस्मात् ङकारोपलक्षितः अः ङस्तस्मिन् ङे इत्यभिप्रेत्याह—ङसिङसोर्ङकार इति । ऋतः तपरकरणेन तावन्मात्रस्यैव ग्रहणादुन्योग्रं इत्यादौ ग्रृ इत्येतस्मादीर्घत्वादुत्वाभावः । ऋङ्डे इत्यत्र ह्रस्वो वेत्यतो वानुकर्षणाल्लोकाच्च खीतिशब्दाभ्यामपि ग्रहणम् । ततश्च सुखमात्मन इच्छति सुखीयति सुखीयतीति सुखीः तस्य सुख्युः । एवं सुतमात्मन इच्छति सुतीयति सुतीयतीति सुतीः तस्य सुत्युः । तथा सह खेन वर्तते इति सखः तमिच्छतीति सखी तस्य सख्युः । तकारस्थानजाद्वर्णादपीष्यते । लूनमिच्छति लूनीयति लूनीयतीति लूनीः तस्य लून्युः । वेति केचित् । सुख्युः सुत्युः लून्युः । ननु सखिशब्दस्य सप्तम्येकवचने आदावीगागमे दीर्घत्वादौत्वाभावः । आदावौत्वे टिलोपे च एकदेशविकृतन्यायेन ईगागमे निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेनौत्वनिवृत्तिः स्यादित्यतो निमित्ताभावन्यायस्यानित्यत्वमभिप्रेत्याह सप्तम्येकवचन इति । अयं भावः—औत्वस्य डित्वाट्टिलोपे निमित्तयोरिदुतोरभावेन सर्वत्रौत्वनिवृत्त्यापत्त्या तद्विधिवैयर्थ्यापातादनित्यत्वं न्यायस्यावसीयते । लोकेऽपि निमित्तदण्डाद्यभावे घटाद्यनपायदर्शनाच्च । शोभनः सखा सुसखेत्यादौ समासेऽपि सखिशब्दप्राधान्ये पञ्चसु तत्कार्यदर्शनादन्यत्र सुसखिना कृतम् अतिसखिरागच्छतीत्यादौ तत्कार्याभावः ॥ ९१ ॥

पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । पतिः । पती । पतयः । पतिम् । पती । पतीन् । तृतीयादौ तु सखिशब्दवत्प्रक्रिया । पत्या । पतिभ्याम् । पतिभिः । पत्ये । पतिभ्याम् । पतिभ्यः । पत्युः । पतिभ्याम् । पतिभ्यः । पत्युः । पत्योः । पतीनाम् । पत्यौ । पत्योः । पतिषु । हे पते । हे पती । हे पतयः ॥ **पतिरसमास एव सखिशब्दवद्वक्तव्यष्टादौ स्वरे परे ॥ षष्ठीयुक्तश्छन्दसि वा** । सीतायाः पतये नम इत्यादिप्रयोगदर्शनात् । ततः समासान्तस्य नादयो भवन्ति । प्रजापतिना । प्रजापतये इत्यादि ॥

( च० ) पतिशब्दसाधनमाह—पतिशब्दस्य प्रथमाद्वितीययोः साधना हरिशब्दवत्। तृतीयादौ तु सामान्येन सखिशब्दवत् । पत्या, पत्ये, पत्युः पत्युः, पत्यौ ॥ तत्रापि विशे... समाह—असमास एव समासरहित एव पतिशब्दः सखिशब्दवत्साध्यः । समासान्तस्य ... पतिशब्दस्य नादयो भवन्ति । 'टा नाऽस्त्रियाम्' 'ङिति' 'ङेरौ ङित्' 'ङस्य' इत्यादि सूत्राणि भवन्ति । यथा प्रजानां पतिः प्रजापतिरिति तत्पुरुषसमासे कृते द्वितीयां यावद्धरि... शेषः । तृतीयादौ तु 'टानाऽस्त्रियाम्' इत्यादिना सूत्रसमुच्चयेन हरिशब्दवत्साधनेत्यर्थः । प्रजापतिना । प्रजापतिभ्याम् । प्रजापतिभिः । प्रजापतये प्रजापतेः प्रजापतेः प्रजापतौ इति । धौ हे प्रजापते । 'समानाद्धेर्लोपो०' हे प्रजापती 'औ यू' । हे प्रजापतयः 'ए ओ जसि' । सिद्धम् ॥

( प्र० ) पतिरसमास एवेति सखिवदित्यनेन सखिशब्दस्यासमास एवेगादिकार्यं यथा तथा तत्सहोक्तस्य पतिशब्दस्यापीत्यर्थः । अन्यथा सखिकार्यातिदेशे डादेरपि प्रसङ्गः स्यात् ... हरिशब्दादिवत्पाक्षिकद्विवचनान्तत्वे सिद्धे वचनारम्भसामर्थ्यान्नित्यद्विवचनान्तत्वप्राप्तौ नित्यग्रहणं स्पष्टार्थम् ॥

द्विशब्दो नित्यं द्विवचनान्तः । औ इति स्थिते ॥ **त्यदादेष्टेरः स्यादौ** ॥ त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ त्यादीनां घेरभावः ॥५१॥

( च० ) द्विशब्दः संख्यावाचकत्वात् नित्यं द्विवचनान्त एव । द्विवचनमन्ते यस्य स द्विवचनान्तः द्वि० सप्तविभक्तिद्विवचनेष्वपि सूत्रम्—'त्यदादेष्टेरः स्यादौ' ॥ त्यत् आदिर्यस्य स त्यदादिस्तस्य । त्यदादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्तोर्वि०' षष्ठ्येकवचनम् । प्राग्वत् । 'विसर्जनी०' 'ष्टुभिः ष्टुः' 'स्वरहीनं०' । अः प्रथमैकवचनान्तम् । 'सोर्वि०' 'नामिनो रः' 'स्वरहीनं०' । स्यादौ सप्तम्येकवचनम् 'ङेरौ ङित्' ... स्वादिष्टलोपः । 'स्वरहीनं०' ४ त्यद् तद् यद् एतद् इदम् द्वि किम् युष्मद् अस्मद् ... त्यदादयः । त्यदादेः शब्दस्य टेः 'अन्त्यस्वरादिष्टिः' इति संज्ञाप्रक्रियोक्तलक्षणायाः स्यादौ विभक्तौ परतोऽकारो भवति । अनेन द्वि इत्यस्य द्व सर्वत्र । रूपद्वये 'आ औ औ' । रूपत्रये 'अभि' । षष्ठीसप्तम्योर्द्विवचने 'ओसि' 'ए अय्' 'स्वरहीनं०' ॥ त्यादादीनां सम्बोधनाभावः । सिद्धोऽयं द्विशब्दः ॥ ५१ ॥

( प्र० ) त्यदादेः ; इति । त्यशब्दे नैकदेशेन समुदायोपलक्षणात् त्यद् आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । नन्वस्य त्यदादित्वाद्दस्य म इति मः स्यादिति चेत् । स... त्यम् । ऋदन्ते इत्यादाविवात्रापि दकारसहिताकारस्य मकारसहिताकारविधेरत्र च वकार... युक्तत्वात्तदभावः ॥ ५१ ॥

त्रिशब्दो नित्यं बहुवचनान्तः । त्रि अस् इति स्थिते 'ए ओ जसि' त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ॥ त्रि आम् इति स्थिते ॥ **त्रेरयङ्** ॥ त्रिशब्दस्यायङादेशो भवति नामि परे ॥ **ङिदन्त्यस्य वक्तव्यः** ॥ त्रयाणाम् । त्रिषु ॥ ५२ ॥

( च० ) इकारान्तस्त्रिशब्दस्त्रिसंख्यावाचकत्वान्नित्यं बहुवचनान्तः। बहुवचनमन्ते यस्य सः । प्रथमाबहुवचने त्रि अस् इति स्थिते । 'ए ओ जसि' 'ए अय्' 'स्वर०' । शसि 'अम्शसोरस्य' 'सो नः पुंसः' त्रीन् । त्रिभिः त्रिभ्यः त्रिभ्यः । आमि विशेषः । पूर्वं नुडागमः । ततः सूत्रम्—'त्रेरयङ्' ॥ त्रिशब्दस्य षष्ठ्येकवचनम् । 'ङिति' 'ह्रस्वस्य' 'लोपि०' । अयङ् प्रथमैकवचनान्तम् । 'हसे पः०' 'नामिनो रः' सिद्धम् । त्रिशब्दस्य अयङ् इत्यादेशो भवति नुट्सहित आमि परे ॥ ङित् ङकारेत् आदेशः अन्तस्य भवतीति वचनादिकारस्येत्यर्थः । नन्वत्र 'षष्ठीनिर्दिष्टस्य' इत्यनेनान्तस्या· देशप्राप्तौ पुनर् 'ङिदन्तस्य' इति किमर्थमुक्तम् । तत्राह—'गुरुः शिच्च सर्वस्य' इत्यनेन 'षष्ठीनिर्दिष्टस्य' इत्यस्य बाधः । अयङिति बह्वक्षरत्वेन गुरुरादेशस्तेन सर्व- स्यैव भवति । तन्निवारणार्थं ङिदन्तस्येति । ङित् ङकारेत् य आदेशः स गुरुरपि अन्तस्यैव भवति । इकारस्य अय् इत्यादेशः । 'नामि०' इति दीर्घः । 'रूर्णोणो०' 'स्वरहीनं०' 'मोऽनुस्वारः' त्रिशब्दस्य बहुवचनान्तत्वेऽपि 'त्रेः' इत्येकवचनं शब्दनिर्देशात् । अथवा त्रेरित्येकवचननिर्देशात् असमासान्तत्वेत एव अयङादेशः ॥ समा· सान्तत्वे तु न । यथा प्रियास्त्रयो येषां ते प्रियत्रयः तेषां प्रियत्रीणाम् ॥ एवमतिक्रान्ता· स्त्रीनिति अतिक्रान्तास्त्रयो यैस्ते इति वा अतित्रयस्तेषामतित्रीणामित्यादौ न अयङा· देशः ॥ सप्तमीबहुवचने 'किलात्षः सः' । हे त्रयः ॥ ९२ ॥

( प्र० ) त्रेरिति । त्रिशब्दस्य बहुवचनान्तत्वेऽपि शब्दनिर्देशादत्रैकवचनम् ॥ अनेकवर्णादेशत्वेन गुरुत्वात्सर्वस्य प्राप्तावाह–ङिदन्तस्येति । गौणत्वे तु प्रियत्री· णामित्येव ॥ ९२ ॥

कतिशब्दो नित्यं बहुवचनान्तस्त्रिषु लिङ्गेषु सरूपः । कति जस् इति स्थिते ॥ **कतिशब्दात्परयोर्जश्शसोर्लुक् वक्तव्यः** ॥ **लुकि न तन्निमित्तम्** ॥ लुकि जाते सति तन्निमित्तं कार्यं न स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । त्रिषु (चायं) सरूपः ॥ ५३ ॥

( च० ) का संख्या येषां ते कति । किं शब्दात् डतिप्रत्ययः । 'शेषा निपात्याः कत्यादयः—' इति सिद्धस्य कतिशब्दस्य बहुवचनान्तस्यापि जश्शसोर्विशेषमाह—'कति· शब्दात्परयोजश्शसोर्लुग्वक्तव्यः' डतिप्रत्ययान्तादिति वा ॥ अनेन जश्शसोर्लोपः कर्तव्यः । 'लुकि न तन्निमित्तम्' इति लुकि कृते सति यस्य लुक् क्रियते स एव निमित्तं कारणं यस्य ईदृशं यत्कार्यं तन्न भवति । तेन 'ए ओ जसि' इति ए, 'शसि' इति दीर्घ· त्वं च न भवति । शेषं सुगमम् । कतिशब्दस्य सम्बोधनाभावः ॥ एवं कतिसाहचर्यात् यतिततिशब्दाभ्यां परयोर्जश्शसोर्लुक्वक्तव्यः । 'यति ते नाग शीर्षाणि तति ते नाग वेदनाः' इत्युदाहरणम् । कतिशब्दस्य त्रिष्वपि लिङ्गेषु सदृशरूपाणि ॥ ९३ ॥

( प्र० ) कतिशब्दादिति । का सङ्ख्या येषामिति शेषा निपात्याः कत्यादय इति डत्यन्तत्वे निपातितात्कतिशब्दात् डतेश्चेति सूत्रेण जश्शसोर्लुगित्यर्थः । सूत्रे च रः स·

ङ्ख्याया इत्यतः सङ्ख्याया इत्यनुवृत्तेः सङ्ख्यार्थात् डत्यन्तादित्यर्थावगमाद्यातेर्डतिरिति डत्यन्तादपि यतिशब्दान्न लुक् । अत एव "यति ते नाग शीर्षाणि तति ते नाग वेदनाः" इत्यादौ या सङ्ख्या येषां ते यति सा सङ्ख्या येषां ते ततीत्यादावपि सङ्ख्यार्थडत्यन्त स्वाज्जश्शसोर्लुक् लुकि न तन्निमित्तमित्येकाराभावः ॥त्रिषु चायं स्वरूप इति । वाच्य लिङ्गत्वेन त्रिलिङ्गत्वम् । बहुवचनान्तत्वेन बहुवचनाभावादिकृतविशेषाभावात्सरूपत्वम् समानरूपत्वमित्यर्थः । अयमित्युपलक्षणं पञ्चन्प्रभृतीनाम् । तथोक्तम् । "ष्णान्तसङ्ख्याव्ययडतियुष्मदस्मत्सदृक्त्रिषु ।" इति ॥ ९३ ॥

ईकारान्तः पुंलिङ्गः सुश्रीशब्द ॥ सुश्रीः ॥ य्वोर्धातोरियुवौ स्वरे धातोरिकारोकारयोरियुवौ भवतः स्वरे परे(क) । सुश्रियौ सुश्रियः । सुश्रियम् सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्याम् सुश्रीभिः । सुश्रिये सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रीभ्याम् सुश्रीभ्यः । सुश्रियः सुश्रियोः सुश्रियाम् सुश्रियि सुश्रियोः सुश्रीषु । हे सुश्रीः हे सुश्रियौ हे सुश्रियः ॥ ५४ ॥

( च० ) इकारान्तानुक्त्वा ईकारान्तानाह—ईकारान्तः पुंलिङ्गः सुश्रीशब्दः श्रिञ् सेवायाम् । सुपूर्वः । क्विप्प्रत्ययः । 'प्रच्छादेर्दीर्घता' इति दीर्घः । क्विपः सर्वापहारी लोपः । सुष्ठु श्रयन्त्येनमिति सुश्रीः । 'क्विबन्ता धातुत्वं न जहति शब्दत्वं च प्रतिपद्यन्ते' इति स्यादयः । प्रथमैकवचने 'स्रो०' ॥ द्विवचने सूत्रम्—'य्वोर्धातोरियुवौ स्वरे०' ॥ ई च ऊ च य्वौ तयोः य्वोः षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'उ वम्' 'स्वरहीनं०' 'रोर्वि०' । धातोः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' इयुवौ प्रथमाद्विवचनान्तम् । 'स्वरहीनं' 'नामिनो रः' । स्वरे सप्तम्येकवचनम् । 'अ इ ए' ॥ धातोरीकारस्य स्वरे परे इय् ऊकारस्य च उव् । 'इ यं स्वरे' इति सूत्रात्स्वरे इत्यनुवृत्ते सत्यां पुनः स्वरग्रहणं स्वरकार्यान्तरव्यावृत्त्यर्थम् । अमृशसोरस्य' 'नुडामः' इति निषेधार्थं विभक्तिवर्जस्वरनिषेधार्थं च ॥ ततोऽत्र विभक्तिस्वर एव ग्राह्यः । तेन श्रीअर्थं श्र्यर्थमित्यादावियु न, किं तु 'इ यं स्वरे' इति यत्वम् । अनेन स्वरादावियु । 'स्वरहीनं०' हसादावविशेषः । सुपि । 'क्विला०' ॥ सम्बोधने धातुत्वान्न घिलोपः । किं तु 'रोर्वि०' हे सुश्रीः हे सुश्रियौ हे सुश्रियः ॥ ९४ ॥

( प्र० ) य्वोरिति । अत्र यद्यपि य्वोरिति ह्रस्वदीर्घसाधारणं तथपि ह्रस्वेकारोकारान्तक्विबन्तधातुप्रयोगाभावादीकारयोरित्युक्तम् । अत एव।न धातोरित्यत्र ते एवानुवर्तमानं य्वोरिति धातोश्चेवर्णोवर्णयोरिति साधारण्येनाभिधास्यति । अमि शसि।च परत्वादियुवावेव । विभक्तिप्रकरणत्वाद्विभक्तिस्वरे एव । नस्वर्थमित्यादौ । ईकारान्तमध्येऽपि स्वयम्भूशब्दस्य उवप्रसङ्गादुक्तिः ॥ ९४ ॥

---

( क ) य्वोरिति । यत्वापवादोऽयम् । इश्च उश्च यू तयोर्य्वोः । व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति परिभाषया य्वोरिति ह्रस्वयोरिह ग्रहणे सावर्ण्याद्दीर्घयोश्च । नाम्नो धातोरिवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वर इत्यर्थः । धातोः किम् । वातप्म्यौ । हूह्वौ । स्यादौ किम्, श्र्यर्थम्, भ्वर्थम् ।

तथैव सुधीशब्दः। सुष्ठु ध्यायतीति सुधीः। सुधियौ। सुधियः। सुधियम्। इत्यादि॥ एवमूकारान्तः स्वयम्भूशब्दः। स्वयं भवतीति स्वयम्भूः। स्वयम्भुवौ। स्वयम्भुवः। स्वयम्भुवम्। स्वयम्भुवौ। स्वयम्भुवः। स्वयम्भुवा। स्वयम्भूभ्याम्। स्वयम्भूभिः। स्वयम्भुवे। स्वयम्भूभ्याम्। स्वयम्भूभ्यः। स्वयम्भुवः। स्वयम्भूभ्याम्। स्वयम्भूभ्यः। स्वयम्भुवः। स्वयम्भुवोः। स्वयम्भुवाम्। स्वयम्भुवि। स्वयम्भुवोः। स्वयम्भूषु। हेस्वयम्भूः। हेस्वयम्भुवौ। हेस्वयम्भुवः। इत्यादि॥

(च०) एवं सुधीशब्दः। ऊकारान्तः स्वयम्भूशब्दोऽप्येवमेव। एवमूकारान्तो लूशब्दः लूञ् छेदने इत्यस्माद्धातोः। लूः। लुवौ। लुवः इत्यादि॥

सेनानीशब्दस्याविशेषो हसादौ। स्वरादौ तु विशेषः। य्वौ वा॥ धातोरवयवसंयोगः पूर्वो यस्मादिकारादुकाराच्च नास्ति तदन्तस्यानेकस्वरस्य ईकारस्य ऊकारस्य च यकारवकारौ भवतः स्वरे परे वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्जयित्वा(क)। वाग्रहणादियं विवक्षा। सेनानीः सेनान्यौ सेनान्यः। सेनान्यम् सेनान्यौ सेनान्यः। सेनान्या सेनानीभ्याम् सेनानीभिः। सेनान्ये सेनानीभ्याम् सेनानीभ्यः। सेनान्यः सेनानीभ्याम् सेनानीभ्यः। सेनान्यः सेनान्योः। सेनान्यादीनां वामो नुड्वक्तव्यः॥ सेनानीनाम्—सेनान्याम्। सेनानी ङि इति स्थिते॥५५॥ आम् ङेर्नियश्च॥ आवन्तादीबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति। सेनान्याम् सेनान्योः सेनानीषु। हे सेनानीः हेसेनान्यौ हेसेनान्यः॥ एवं ग्रामणीप्रभृतयः॥ ५६॥

(च०) णीञ् प्रापणे। 'आदेः ष्णः स्नः' नीः सेनापूर्वः। सेनां नयतीति सेनानी। क्विप्प्रत्ययान्तः। सेनानीशब्दस्येकारान्तधातोरपि हसादावविशेषः। स्वरादौ तु विशेषस्तमेव सूत्रद्वारा व्याख्याति। 'य्वोर्धातोरियुवौ स्वरे०' अनेन। 'इ यं स्वरे' 'उ वम्' इत्येतयोर्बाधो जातः। सेनानीशब्दस्येकारान्तत्वे 'य्वोर्धातो०' इत्यस्य बाधनार्थं पूर्वं

(क) य्वौवेति। अत्र य्वोरित्यतो धातोर्य्वोरिति चानुवर्त्तते। तत्र यथाश्रुतमर्थः स्यात् धातोर्य्वोर्य्वौ भवत इति ततः पूर्वसूत्रं निर्विषयमेव स्यात्। अथ वचनप्रामाण्यात्तदपि स्यादेवमपि विषयवैपरीत्यं स्यात्। तस्मादिदं विशिष्टविषयमिति मत्वाऽऽह—धातोरित्यादि। यस्मादीकारादूकाराद्धातोरवयवसंयोगः पूर्वो नास्ति तदन्तस्या धात्ववयवसंयोगपूर्वेदूदन्तस्यानेकस्वरस्य नास्त्येकःस्वरो यस्मिन्नसौ तस्य शब्दस्यावयवौ यावीदूतौ तयोः क्रमाद् य्वौ भवत इत्यर्थः। किं सर्वत्र नेत्याह—वर्षाभ्विति। वर्षाभूपुनर्भूभ्यामतिरिक्तमन्यत्र स्वयंभ्वादौ स्थितं भूशब्दं सुधीशब्दं च वर्ज्जयित्वा परिहृत्येत्यर्थः।

ननु सूत्रं य्वौवेत्यनुवृत्तिरपि य्वोर्धातोः स्वर इति तदतिरिक्तोऽयमर्थः कुतो लभ्यत इत्याह—वाग्रहणादिति। निपातानामनेकार्थकत्वादिति भावः।

'य्वौ वा' इति सूत्रं पठ्यते। य् च व् च य्वौ प्रथमाद्विवचनान्तम्। वा तृतीयैकव चनान्तम्। 'अव्यया०' ॥ यस्मादीकारादूकाराच्च पूर्वमादौ वर्तमानो धातोरवयवः योगः सुश्री यवक्रीवत् व्यक्षरादिसंयोगोऽस्ति तदन्तस्य स एव धात्ववयवसंयोगपूर्वकत्व रहितः इकारः उकारो वा अन्ते यस्य स तदन्तस्तस्य पुनरनेकस्वरस्य द्वयादिद्वि त्रिस्वरपूर्वस्य शब्दस्य संबन्धिनः ईकारस्य यकारः। ऊकारस्य च वकारः ॥ ननु 'णीञ् प्रापणे' धातुरेकस्वरः कथमनेकस्वरत्वम्। उच्यते—कारकपूर्वस्यापि क्विबन्तग्रहणे ग्रहणादनेकस्वरत्वम्। अत्र वाशब्दो व्यवस्थावाचको न तु विकल्पार्थस्तेन वर्षाभूपुनर्भू न्भूकारभूकरमू एभ्योऽतिरिक्तोऽन्यो यो भूशब्दः स्वयंभू-दृन्भू-कमलभू-नाभिभू-अब्जभू सरोभू आत्मभू-मनोभू-काराभू-प्रभृतिकस्य संभवे सत्यपि 'य्वौ वा, इति न भवति। किं "य्वोर्धातोरियुवौ स्वरे' इति भवति ॥ तथा सुधीशब्दस्यापि संभवे सत्यपि 'य्वौ वा' इति न भवति। किं तु 'य्वोर्धातोरियुवौ स्वरे' इत्येव भवति। अत एतौ वर्जयित्वा अपर ईकारो कारयोः पूर्वोक्तलक्षणयोर्यकारवकारौ भवतः। वाग्रहणादियं विवक्षा ज्ञेया। कुतः निपात नामनेकार्थत्वात्। धातोः संयोगपूर्वकत्वे सुश्रियौ यवक्रियौ कटप्रुवौ इत्यादौ न यकार कारौ। किं तु इयुवावेव ॥ एकस्वरे तु नीः नियौ। धीः धियौ। लूः लुवौ। भूः भूवौ भुवः इत्यादौ न यकारवकारौ ॥ बहुव्रीहिसमासे अनेकस्वरस्यापि इयुवौ भवतः। यथा सुधी सुधियौ सुधियः। परमधिय इत्यादि ॥ धात्ववयवसंयोगपूर्वकत्वे एव यकारवकारौ न भव तः। तेन उन्नीः उन्न्यौ उन्न्यः। इत्यादौ स्वाभाविकधात्ववयवसंयोगपूर्वकत्वाभावा यत्वं न भवति ॥ वर्षाभू, पुनर्भू, दृन्भू, कारभू, इत्यत्र भूशब्दस्य वत्वम्। अन्यत्र उवेव। वाशब्दस्य व्यवस्थावाचकत्वात् इयं विवक्षा लभ्यते ॥ अनेन स्वरादौ स प्र कारः। 'स्वर०' ॥ आमि विशेषः। सेनान्यादीनामामः षष्ठीबहुवचनस्य नुडागमो वच व्यः। अनेन एकत्र नुडागमः। 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ अन्यत्र 'य्वौ वा' इति य कारः 'स्वरहीनं०'। सप्तम्येकवचने सूत्रम्—'आम् ङेः' आम् प्रथमैकवचनान्तम्। 'ड पः०' ङेः षष्ठ्येकवचनान्तम्। 'ङिति' 'ङस्य' 'सोर्विसर्गः' ॥ केचित्तु 'आम् ङेर्नियः' इति सूत्रं पठन्ति तन्मतं साधु। यतो नीशब्दादित्यनुवृत्तिर्न दृश्यते। आवन्तात् स्त्री ङेः आप्प्रत्ययान्तान्नीशब्दाच्चोत्तरस्य ङेः सप्तम्येकवचनस्य आम् भवति। अनेन आमि कृते 'य्वौ वा' इति यकारः। 'स्वरहीनं०' 'मोऽनुस्वारः'। धातुत्वाद्ङेर्लोपो न। शे षकरम्। एवं ग्रामणी अग्रणी प्रधीशब्दप्रभृतयोऽपीकारान्ता धातुशब्दा ज्ञेयाः ॥ ९६ ॥

( प्र० ) य्वौ वेति। धातोरवयवैर्यः संयोगः स यस्मादीकारदूकारात्पूर्वो नास्ति तौ धातोरीकारोकारौ अन्ते यस्य एवंविधो योऽनेकस्वरः शब्दस्तस्य यावीकारोकारौ तयोर्यकारवकारौ भवत इत्यर्थः। वर्षाभूपुनर्भूभ्यामतिरिक्तोऽन्यो यो भूशब्दान्तः सुधी शब्दश्च तं वर्जयित्वा केवलभूशब्दस्यानेकस्वरत्वाभावादेवाप्राप्तेस्तदन्तप्राप्तौ प्रतिषेधः एवंविधे नियामकापेक्षायामाह;—वाग्रहणादिति। वाशब्दस्य व्यवस्थितविकल्पार्थत्वा दित्यर्थः। विवक्षेत्यनेन प्रयोगानुसारतो यथेष्टं व्यवस्थाविज्ञानात्। दृन्भूकाराभूभ्यामप्य न्यत्र येत्यवरेयम्। तथा गतिकारकेतरपूर्वस्यैव। नेह। शुद्धधियौ। परमधियौ। गति संज्ञा च गतिश्चेत्यादिना लोकतोऽवगन्तव्या। उन्न्यावित्यादावुपसर्गधात्ववयवयोः संयो

ग्रान्तत्वान्न निषेधः । "सेनानीनामहं स्कन्दः" इत्याद्यार्षप्रयोगार्थमाह । सेनान्यादीनामिति । छन्दस्येव । आदिशब्दात् गोनामित्याद्यपि ॥

आऽङेरिति । अत्रापः नियश्चेत्यनुवर्त्तते ॥ ९१–९६ ॥

एवमूकारान्तो यवलूशब्दः । यवलूः यवल्वौ यवल्वः । यवल्वम् यवल्वौ यवल्वः । यवल्वा यवलूभ्याम् यवलूभिः । यवल्वे यवलूभ्याम् यवलूभ्यः । यवल्वः यवलूभ्याम् यवलूभ्यः । यवल्वः यवल्वोः यवल्वाम् । यवल्वाम्–यवल्वि यवल्वोः यवलूषु । हेयवलूः हेयवल्वौ हेयवल्वः ॥ एवं वर्षाभूपुनर्भूप्रभृतयः ॥

(च०) ऊकारान्ताश्च यवलूखलपूहन्भूकरभूकारभूवर्षाभूपुनर्भूप्रभृतयोऽप्येवम् । परं सप्तम्येकवचने नीशब्दाभावात् ङेराम् न भवति । तेन यवल्वि पुनर्भ्वि वर्षाभ्वि इति रूपम् ॥ वर्षासु भवतीति वर्षाभूर्मण्डूकः । यवान् लुनातीति यवलूः । एते क्विप्प्रत्ययान्ताः ॥

ईकारान्तो वातप्रमीशब्दः । वातप्रमीः वातप्रम्यौ वातप्रम्यः । वातप्रमीम् वातप्रम्यौ वातप्रमीन् । वातप्रम्या वातप्रमीभ्याम् वातप्रमीभिः । वातप्रम्ये वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रमीभ्याम् वातप्रमीभ्यः । वातप्रम्यः वातप्रम्योः वातप्रम्याम् । वातप्रमी वातप्रम्योः वातप्रमीषु । हेवातप्रमीः हेवातप्रम्यौ हेवातप्रम्यः ॥

अमि वातप्रमीमाहुः शसि वातप्रमीनिति ।
ङौ तु वातप्रमी शेषं ग्रामणीसदृशं भवेत् ॥

(च०) ईकारान्तो वातप्रमीशब्दः । वातप्रमीशब्दस्य प्रथमैकवचने 'स्रोर्वि०' वातप्रम्यौ । धातुत्वाभावात् 'य्वौ वा' इति न, किं तु 'इ यं स्वरे' वातप्रमीं वातप्रम्यौ वातप्रमीन् । वातप्रम्या वातप्रमीभ्यां वातप्रमीभिः । वातप्रम्ये वातप्रम्यः वातप्रम्यः वातप्रम्याम् । सप्तम्येकवचने 'सवर्णे दीर्घः' वातप्रमी वातप्रम्योः वातप्रमीषु । हे वातप्रमीः । 'अमि वातप्रमीं रूपम् । शसि वातप्रमीनिति । ङौ तु वातप्रमी शेषं, ग्रामणीसदृशं विदुः ॥

तथैवोकारान्तो हूहूशब्दः । हूहूः हूह्वौ हूह्वः । हूहूम् हूह्वौ हूहून् । हूह्वा हूहूभ्याम् हूहूभिः । इत्यादि ॥

(च०) एवम् ऊकारान्तो हूहूशब्दः । हूहूः हूह्वौ 'उवम्' हूह्व । स्वरे परे सर्वत्र 'उवम्' । शसि हूहून् । आमि हूह्वाम् । ङौ हूह्वि ॥

ऋकारान्तः पितृशब्दः । पितृ सि इति स्थिते ॥ सेरा ॥ ऋकारान्तात्परस्य सेरा भवति स च डित्(क) । डित्त्वाट्टिलोपः । पिता ॥२७॥ अर् पञ्चसु ॥

(क) सेरिति । अत्र ऋतो ङ डरित्यत ऋत इत्यनुवर्त्तते । तत्र ऋमात्राद् सिर्न सम्भवतीति साम-

ऋकारस्यार् भवति पञ्चसु स्यादिषु परेषु(क) । पितरौ । पितरः । पितृ सि इति स्थिते ॥५८॥ धेरर् ॥ ऋकारान्तात्परस्य धेरर् भवति स च डित् । डित्त्वाट्टिलोपः ॥ हेपितः । हेपितरौ । हेपितरः ॥ पितरम् । पितरौ पितॄन् ॥ ऋत पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्यः । ऋतो ङ उः ॥ पितुः । पितृभ्याम् । पितृभ्यः । पितुः । पित्रोः । पितॄणाम् ॥५९॥ ङौ ॥ ऋकारस्यार् भवति ङौ परे । पितरि । पित्रोः । पितृषु । एवं जामातृभ्रात्रादयः॥६०

( च० ) ऋकारान्तानाह--ऋकारान्तः पितृशब्दः । पा रक्षणे पाति रक्षतीति पिता पितृशब्दो निपातसिद्धो न तृप्रत्ययान्तः । पितृशब्दात् प्रथमैकवचने सूत्रम्—'सेरा'। सेः षष्ठ्येकवचनान्तम् 'ङिति' 'ङस्य' 'स्नोर्विसर्गः' । आ प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' ॥ ऋकारान्ता० इति । ऋकारान्तात्परस्य सेः आ इत्यादेशः स्यात् स च आ डित्संज्ञकः । डित्त्वाट्टिलोपः । 'स्वरहीनं०' ॥ ५७ ॥ सूत्रम्—'अर् पञ्चसु' [अर् प्रथमैकवचनम् सि । 'हसेपः सेः' ॥] पञ्चन्शब्दस्य सप्तमी वहुवचनम् । 'नाम्नो नो०' स्यादिषु पञ्चसु वचनेषु परेषु ऋकारो अर् भवति । स्थानाशून्यार्थसेरपि ग्रहणम् ॥ सि विषये तु 'सेरा' इत्याकारप्राप्तौ 'अर् पञ्चसु' इत्यर्प्राप्तौ च विशेषत्वान्नित्यत्वाच्च सेरा एव भवति ॥ केचित्तु प्रथमं 'अर् पञ्चसु' इत्यरं विधाय ततो यदादेशस्तद्वद् भवतीति 'सेरा' इति सेरा । ततष्टिलोपः । 'स्वरहीनं०' पिता ॥ पितृशब्दात् प्रथमाद्विवचने बहुवचने च अनेन अर् । 'स्वरहीनं०' ॥५८॥ धौ कृत्यमाह—सूत्रम्—'धेरर्' ॥ धेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्नोर्वि०' अर् प्रथमैकवचनान्तम् । 'हसे पः०' 'नामिनो रः' ॥ ऋकारान्ता० इति धेः अर् आदेशो भवति । स च डित् । डित्त्वाट्टिलोपः । 'स्वरहीनं०' 'स्नोर्वि०' शेषं सुकरम् ॥ द्वितीयावहुवचने—'अम्शसोरस्य' 'सो नः पुंसः' 'शसि' ॥ तृतीयायां चतुर्थ्यां चैकत्वे । 'ऋरम्' 'स्वरही०' ॥ हसादावविशेषः । पञ्चमीषष्ठ्योरेकवचने 'ऋतो ङ उः' 'ङिति टेः' इति टिलोपः । 'स्वरहीनं०' 'स्नोवि०' ॥ षष्ठीसप्तम्योर्द्विवचने ॥ 'ऋरम्' 'स्वरहीनं० ' ॥ षष्ठीवहुवचने 'नुडामः' 'नामि०' 'ऋनॄणो०' ॥ सप्तम्येकवचने सूत्रम्-'ङौ' । सप्तम्येक वचनम् ॥ 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' एकपदम् ॥ अनेन अर् 'स्वरहीनं०' ॥ सप्तमीवहुवचने 'किलात्षः सः०' ॥ एवं जामातृभ्रात्रादयः शब्दाः साध्याः ॥ जामाता जामातरौ जामातरः ॥ भ्राता भ्रातरौ भ्रातरः ॥ देवा देवरौ देवरः ॥ सव्येष्टा सव्येष्टरौ सव्येष्टरः इत्यादि ॥ ६० ॥

( प्र० ) सेरा इति । अत्र यद्यपि परत्वात्पञ्चस्वित्यर् प्राप्नोति तथापि तल्लोपप्रसङ्गसम्भवान्निरवकाशत्वाच्च आ एव । पञ्चसु कर्तृणी कुले इत्यादौ परत्वान्नुमा बाधान्नार्प्रसङ्ग ॥६

एवं नृशब्दः ॥ सेरा । ना । नरौ । नरः । नरम् । नरौ । नॄन् ।

र्थाच्चदन्तस्य ग्रहणमित्याह—ऋकारान्तादिति । तथा ङेरौडिदित्यनुवर्त्तत इत्याह—स चेति ।

( क ) अर्पञ्चस्विति । अत्र ऋत इति पञ्चम्यन्तमप्यनुवर्तमानमादेशापेक्षया षष्ठ्यन्तं स्यादित्याह ऋकारस्येति । स्यादिष्विति । एतच्चाधिकाराल्लभ्यते ।

त्रा नृभ्याम् । नृभिः । त्रे । नृभ्याम् । नृभ्यः । ऋतो ङ उः । नुः । नृभ्याम् । नृभ्यः । नुः । त्रोः ॥

**नुर्वा नामि दीर्घः** ॥ नृशब्दस्य नामि परे पूर्वस्य दीर्घो वा भवति(क) । नृणां नॄणाम् । ङौ नरि । त्रोः । नृषु । हेनः । हेनरौ । हेनरः ॥ ६१ ॥

(च०) नृशब्दोऽपि पितृशब्दवत् । ना नरौ नरः । नरं नरौ नॄन् । न्रा नृभ्याम् नृभिः । न्रे नृभ्यां नृभ्यः । नुः नृभ्यां नृभ्यः । नुः न्रोः । आमि विशेषमाह—सूत्रम्—'नुर्वा०' ॥ इति । नुरिति नृशब्दस्य षष्ठ्येकवचनम् । 'ऋतो ङ उः' । वा तृतीयैकवचनम् । 'अव्ययो०' मध्ये 'नामिनोरः' । नामि सप्तम्येकवचनान्तम् । स्वरहीनं०' । दीर्घः प्रथमैकवचनान्तम् । 'स्रोर्वि०' सिद्धम् ॥ नृशब्दस्य नामि परे दीर्घो वा वक्तव्यः । नृणां नॄणाम् । नरि न्रोः नृषु । हेनः हेनरौ हेनरः । इति सिद्धम् ॥ ६१ ॥

( प्र० ) नृणामेको गम्यस्त्वमसि पयसामर्णव इव । " इत्यादिप्रगसिद्ध्यर्थमाह । नुर्वेति । नृशब्दस्य नामि परे वा दीर्घ इत्यर्थः । नुर्वेतिसूत्रमर्थतो व्याख्यातमस्तु ॥ ६१ ॥

'पिता माता ननन्दा वा सव्येष्टृ-भ्रातृ-यातरः ।
जामाता दुहिता देवा न तृनन्ता इमे नव ॥'

कर्तृशब्दस्य पञ्चसु विशेषः ॥

**स्तुरार्** ॥ सकारतृप्रत्ययसंबन्धिन ऋकारस्याऽऽर् भवति पञ्चसु परेषु(ख) । कर्तार् सि इति स्थिते । यदादेशस्तद्वद्भवति । सेरा । डित्वाट्टिलोपः । कर्ता । कर्तारौ । कर्तारः । घेरर् । हेकर्तः हेकर्तारौ हेकर्तारः । कर्तारम् । कर्तारौ । कर्तॄन् । कर्त्रा । कर्तृभ्याम् । कर्तृभिः । कर्त्रे । कर्तृभ्याम् । कर्तृभ्यः । ऋतो ङ उः । कर्तुः कर्तृभ्याम् कर्तृभ्यः । कर्तुः कर्त्रोः कर्तॄणाम् । कर्तरि कर्त्रोः कर्तृषु । इत्यादि पूर्ववत्प्रक्रिया ॥ एवं नप्तृहोतृक्षत्तृधातृगोप्तृप्रशास्तृपोतृउद्गातृप्रभृतयः ।

---

( क ) नुर्वेति । नामिति नित्ये प्राप्ते विकल्पार्थं नृशब्दस्य नामि वा दीर्घो वक्तव्य इत्यर्थः । नृणां नॄणामिति उभयत्र नुटि पाक्षिको दीर्घः णत्वम् ।

( ख ) स्तुरिति । स च तृ च स्तृ, द्वन्द्वैकत्वम् , आगमशास्त्रस्यानित्यत्वान्नुमभावः छान्दसं पुंस्त्वं वा । उक्तं च छन्दसि सर्वे विधयो विकल्प्यन्त इति । तत्र स्तुरिति षष्ठी ऋतान्नुवर्त्तमानेन सम्बध्यते । सम्बन्धश्च सकारेण संयोगः, तृप्रत्ययेन समवायः । तदयमर्थः—सकारसंयुक्तो य ऋकारस्तृप्रत्ययावयव इति । अमुमेवार्थं संहृत्याह—सकारेत्यादि । सकारेण संयोगसम्बन्धवतः तृप्रत्ययेन समवायसम्बन्धवत ऋकारस्येत्यर्थः ।

स्वसा नप्ता च नेष्टा च त्वष्टा कर्ता तथैव च ।
होता पोता प्रशास्ता च ह्यष्टौ स्वस्रादयः स्मृताः ॥ ६२ ॥

(च०) डुकृञ् करणे । कृ । 'तृचुणौ' तृप्रत्ययः । 'गुणः' 'राघपो०' 'स्वरहीं०' कर्तृ । करोतीति कर्ता । कर्तृशब्दस्य पञ्चसु विशेषस्तमेवाह—सूत्रम्—'स्तुरार्' ॥ सूच तृच स्तृ तस्य स्तुः । षष्ठ्येकवचनम् । 'ऋतो ङ उः' टिलोपः 'स्तोर्वि०' । आर् 'हसेपः' 'नामिनो०' सिद्धम् । सकारसम्बन्धिन ससहितस्य ऋकारस्य सकारोपलक्षितस्येत्यर्थः । तृप्रत्ययान्तसम्बन्धिन इति 'तृचुणौ' इत्यादि कृत्प्रत्ययोत्पन्नतृप्रत्ययस्य च ऋकारस्य स्यादिषु पञ्चसु परेषु आर् भवति । सकारसम्बन्धी ऋकारः स्वसृशब्द एव । तेन प्रियतिसृशब्दादावार् न स्यात् । प्रियतिसा, प्रियतिस्रौ । प्रियतिस्रः इत्यादि । अनेन द्वितीयाद्विवचनान्तं यावत् आर् । तत्र प्रथमैकवचने कर्तार् स् इति स्थिते । ऋकाराऽसम्भवे कथं सेराकारस्त्राह—यदादेशस्तद्वद्भवति यो यस्यादेशः स तद्वदेव भवतीत्यर्थः । ऋकारस्यार् आदेशः सः ऋकारवज्ज्ञेयः । ततः । 'सेरा' टिलोपः । सर्वत्र 'स्वरहीनं०' ॥ सम्बोधने । 'स्तुरार्' ततः । 'घेरर्' टिलोपः 'स्वरहीनं०' 'स्तोर्वि०' हे कर्तः । शेषं सुकरम् ॥ शसि-'अशसोरस्य' 'सो नः पुंसः' 'शसि' ॥ तृतीयादौ पितृशब्दवत् । यथा तृतीयैकवचने । 'ऋरम्' कर्त्रा कर्तृभ्यां कर्तृभिः । चतुर्थ्येकवचने 'ऋरम्' 'स्वरहीनं०' कर्त्रे कर्तृभ्यां कर्तृभ्यः । पञ्चमीषष्ठ्योरेकवचने । 'ऋतो ङ उः' स च ङित ङित्वाट्टिलोपः । 'स्वरहीनं०' कर्तुः । कर्त्रोः । 'ऋरम्' 'स्वरहीनं०' ॥ 'नुडासः' 'नामि०' कर्तृणाम् ॥ सप्तम्येकवचने । 'ङौ' 'स्वरहीनं०' कर्तरि । कर्त्रोः 'ऋरम्' । कर्तृषु 'क्लिलात्षः०' । एवं नप्तृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृप्रभृतयोऽपि । तथा अन्येऽपि तृप्रत्ययान्ता अवसेयाः । तृप्रत्ययस्यार्थवतो ग्रहणे नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां ग्रहणं न भवत्यतस्तेषां पृथगुपादानम् । अर्थवतो ग्रहणे नानर्थकस्येति ज्ञापकात् ॥ व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम् । सिद्धे सत्यारम्भो नियमायेति ॥ ६२ ॥

(प्र०) स्तुरिति । सूच तृश्च स्तृ तस्यः स्तुः । आगमानुशासनस्यानित्यत्वान्नुम्भावः लिङ्गवचनव्यत्ययौ वा । ऋतो ङ उरित्यत ऋत इत्यनुवृत्तेस्तस्य च तपरत्वात्तावन्मात्रग्रहणे तिस्रः । चतस्रः । प्रियतिस्रौ प्रियचतस्रावित्यादौ । ऋकारस्य ऋकारातिदेशादार् । ततश्च सकारसम्बन्धिस्वसृशब्दस्य ऋकारः ॥ ६२ ॥

**उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वघिषु तृप्रत्ययान्तता वा वक्तव्या ॥** क्रोष्टृ सि इति स्थिते स्तुरार् । सेरा । क्रोष्टा क्रोष्टारौ क्रोष्टारः । क्रोष्टारम् क्रोष्टारौ । शसि तृप्रत्ययवद्भावाभावात् क्रोष्टून् । अमि शसि तृप्रत्ययवद्भावो वेति केचित् । क्रोष्टुम् क्रोष्टून् ॥ **तृतीयादौ स्वरादौ तृप्रत्ययान्तता वा वक्तव्या(क)** ॥

(क) तृतीयादाविति । क्रोष्टुशब्दो वा तृप्रत्ययान्तः प्रयोक्तव्यस्तृतीयादौ स्वरे । तृप्रत्ययान्तक्रोष्टुशब्दस्य कर्तृवद्रूपम् , उकारान्तक्रोष्टुशब्दस्य भानुवत् । अमि तु तृवद्भावे नुडागमे च प्राप्ते सत्याह—कृतेति ।

क्रोष्ट्रा-क्रोष्टुना। क्रोष्टुभ्याम्। क्रोष्टुभिः। क्रोष्ट्रे क्रोष्टवे। क्रोष्टुभ्यम्। क्रोष्टुभ्यः। क्रोष्टुः क्रोष्टोः। क्रोष्टुभ्याम्। क्रोष्टुभ्यः। क्रोष्टुः क्रोष्टोः। क्रोष्ट्रोः क्रोष्ट्वोः। कृताकृतप्रसङ्गी यो विधिः स नित्यः। नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान्। इति प्रथमं नुडागमे कृते स्वरादित्वाभावात् तृप्रत्ययवद्भावो न भवति। क्रोष्टूनाम्। क्रोष्टरि क्रोष्टौ। क्रोष्ट्रोः क्रोष्ट्वोः। क्रोष्टुषु। अधिष्विति विशेषणाद्धेक्रोष्टो हेक्रोष्टारौ हेक्रोष्टारः॥

( च० ) क्रुश् आह्वाने। तुम्प्रत्ययः। 'गुणः' 'छशषराजादेः षः' 'ष्टुभिः ष्टुः' क्रोष्टु इति जातम्। उकारान्तस्येत्यादि। यद्यपि क्रोष्टुशब्द उकारान्तस्तथापि तस्य अधिषु धिवर्जितेषु तृप्रत्ययान्तस्येव रूपम्। तृप्रत्ययान्तत्वं वक्तव्यम्। तृप्रत्ययान्तवद्दारादिकमित्यर्थः। ततः पञ्चसु कर्तृवत्। सौ 'स्तुरार्' 'सेरा'। धौ तु भानुवत्। द्वित्वबहुत्वयोः कर्तृवत्। 'स्तुरार्' 'स्वरहीनं०'। शसि विषये तृप्रत्ययो विद्यते यस्य स तृप्रत्ययवान्। यद्वा तृप्रत्ययेन तुल्यं तृप्रत्ययवत्। तस्मात तस्य भावस्तृप्रत्ययवद्भावस्तस्याभावस्तृप्रत्ययवद्भावाभावस्तस्मात क्रोष्टूनिति भानुवत्साध्यः। तृतीयादौ हसादौ त्वविशेषः। स्वरादौ वा तृप्रत्ययान्तता। उकारस्य वा ऋकार इत्यर्थः। ऋत्वे कर्तृवत। उत्वे भानुवत। आमि तु विशेषः। क्रोष्टु आम् इत्यत्र—'नुडामः' इति नुडागमप्राप्तौ, 'तृतीयादौ स्वरादौ०' इति तृप्रत्ययान्तवद्भावस्य च प्राप्तौ नुडाम एव स्यादित्याह—आमि नुडागमे कृते हसादित्वात्तृप्रत्ययभावस्तृप्रत्ययान्तत्वं नास्ति न भवति। अत्राह परः—ननु पूर्वं तृप्रत्ययभावं विधाय पश्चान्नुडागमः क्रियतां तत्रोच्यते—कृताकृतप्रसङ्गी० कृते अकृतेऽपि प्रसङ्गः प्रयोगप्राप्तिरस्यास्तीति कृताकृतप्रसङ्गी एवंभूतो यो विधिः स नित्यः। नित्यानित्ययोर्नित्यो विधिर्बलवानिति। एवमभिप्रायः—तृप्रत्ययभावे कृतेऽपि अकृतेऽपि नुडागमो नित्यः तदागमे च हसादित्वं सिद्धमेव। अतः स्वरान्तत्वाभावाद्वा तृप्रत्ययान्तत्वं न किंतु क्रोष्टूनामित्येकमेव रूपम्। 'नुडामः' 'नामि०'॥ सप्तम्येकवचने 'तृतीयादौ वा०' इत्येकत्र तृप्रत्यये कृते 'ङौ' इत्यर्। 'स्वरहीनं०' क्रोष्टरि। द्वितीये उकारान्तत्वात 'ङेरौ ङित्' टिलोपः। 'स्वरहीनं०' क्रोष्टौ। शेषं सुकरम्। संबोधने अधिष्विति विशेषणात् 'समानाद्धेर्लोपो०' 'धौ' हे क्रोष्टो हे क्रोष्टारौ हे क्रोष्टारः॥

( प्र० ) उकारान्तस्यापीतिपञ्चस्वित्यस्य सेरप्युपलक्षणत्वात्प्रियक्रोष्टृणामित्यादि। शसि तृप्रत्ययवद्भावाभावादतिप्रत्ययवद्भवस्याभावस्तस्मात् पञ्चसु तृप्रत्ययवद्भावो विधीयते। तृतीयादौ स्वरादौ च वेत्यवशिष्टे शसि तदभाव इत्यर्थः॥

ननु क्रोष्टूनामित्यत्र कथं पक्षे तृप्रत्ययान्तत्वाभाव इत्यत आह। कृता-

---

कृतं चाकृतं च कृताकृते कृताकृतयोः प्रसङ्गोऽस्यास्तीति कृताकृतप्रसङ्गी यो विधिः स नित्यो विधिर्भवति। तृवद्भावे कृतेऽकृते च नुड्विधिर्नित्यः, तृवद्भावस्तु अनित्यः। नित्यश्च अनित्यश्च नित्यानित्यौ तयोर्नित्यानित्ययोर्विध्योर्मध्ये नित्यो विधिर्बलवान् बलिष्ठः। दीक्षितास्तु,—आमि परत्वात् तृज्वद्भावे प्राप्ते नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेति नुडेव। तेन वारीणां तिसृणां क्रोष्टूनामिति।

कृतप्रसङ्गीति । यः कृतेऽपि प्रसज्यते अकृतेऽपि प्रसज्यते स विधिर्नित्य इत्यर्थः । नि-त्यानित्ययोर्मध्ये नित्यविधिर्बलवानिति स एव "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्य-न्ते" इति हसादित्वम् ॥

ऋकारान्ता ऌकारान्ता एकारान्ताश्चाप्रसिद्धाः । कौमारास्तृप्रत्ययान्तस्य क्रुशेर्धातोः पृथग्रूपमाहुः । अप्रसिद्धा इति वृद्धव्यवहारे न त्वभिधानादौ । तेन 'एर्विष्णुरविमारुते' इत्येकाक्षरमालायाम्, तथा अनेकार्थमञ्जर्याम् ॠर्दै-त्यमातरि स्याद्दैव्यामस्तु ऌतान्तरे । वाय्वादित्ये महीध्रे च विष्णवे ऐ प्र-कीर्तितौ ॥ अत्र ॠकारस्य स्वरादौ ॠरम् । ॠः रौ रः । ॠं रौ ॠन् । रा ॠभ्याम् ॠभिः । हेॠः हेरौ हेरः । इत्यादि ॥ ऌवर्णस्य सावर्ण्यात्पि-तृशब्दवत्प्रक्रिया । ला अलौ अलः । अलम् अलौ ॡन् । ला ऌभ्याम् ऌभिः । ले ऌभ्यां ऌभ्यः । उः ऌभ्यां ऌभ्यः । उः लोः ॡणाम् । लि लोः ऌषु । हे अल् हेअलौ हे अलः ॥ इति ऌशब्दरूपाणि ॥ एकारा-न्तस्य तु उद्यंश्चासौ एः रविश्चेति विग्रहे कृते विभक्तिलोपे कृते उद्यदेः इति समस्तं नाम । उद्यदेः उद्यदयौ उद्यदयः । हेउद्यदेः हेउद्यदयौ हेउद्य-दयः । समानत्वाभावान्न धि लोपः । उद्यदयम् उद्यदयौ उद्यदयः । उद्यदया उद्यदेभ्याम् उद्यदेभिः । उद्यदये उद्यदेभ्याम् उद्यदेभ्यः । उद्यदेः उद्यदेभ्याम् उद्यदेभ्यः । उद्यदेः ङस्य इत्यकारलोपः । उद्यदयोः उद्यदयाम् । उद्यदयि उद्यदयोः उद्यदेषु (क) ॥

( च० ) ऋकारान्तानुक्त्वा अन्यानाह—ॠकारान्ता ऌवर्णान्ता एकारान्ताश्चाप्रसि-द्धा अप्रतीताः । कचित् प्रयोगे दृश्यते—'छेरक्' इत्यादौ ॥

( प्र० ) ॠकारान्ता इत्यादि । यद्यपि "ॠर्दैनाविति केऽप्याहुर्दैवयोनिप्रसूश्च ऌः । एर्विष्णुः" इत्यादौ ॠकारादयो दृश्यन्ते तथापि तदन्ता अप्रसिद्धा एव । एतेऽपि प्रचुर-प्रयोगाभावान्नोक्ताः ॥

## एकारान्तः पुंलिङ्गःसुरैशब्दः ॥

**रै स्भि** ॥ रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ पर-तः(ख) सुराः । स्वरादौ सर्वत्रायादेशः । सुरायौ सुरायः । सुरायम् सुरायौ सुरायः । सुराया सुराभ्याम् सुराभिः । सुराये सुराभ्याम् सुराभ्यः । सुरायः

(क) "कौमारा" इत्यारभ्य "उद्यदेषु" इत्येतत्पर्य्यन्तं पाठः कुत्राचित् पुस्तके न दृश्यते ।

(ख) रैस्भीत्यत्र ऐस्भीति न सूत्रितम्, 'ऐकारः स्यान्महेश्वरः' इत्येकाक्षरकोषादित्थैकारान्तेऽपि प्रवृत्त्यर्थम् ।

सुराभ्याम् सुराभ्यः । सुरायः सुरायोः सुरायाम् । सुरायि सुरायोः सुरासु ।
हेसुराः हेसुरायौ हे सुरायः ॥ एवं रैशब्दः ॥ ६३ ॥

( च० ) ऐकारान्तः सुरैशब्दः । सूत्रम्—'रैस्भि' रैं षष्ठ्येकवचनान्तम् । सूच भूच स्भ् तस्मिन् सप्तम्येकवचनम् । 'स्वरहीनं०' ॥ रैशब्दस्य विभक्तिसंबन्धिनि सकारे भकारे च परे अकारो भवति । षष्ठीनिर्दिष्टस्येत्यन्तस्य ॥ प्रथमैकवचने 'स्रोर्विसर्गः' शोभनो राः सुराः । सुष्ठु रा द्रव्यं यस्येति च सुराः । स्वरादौ तु 'ऐ आय्' 'स्वरहीनं०' ॥ समानाभावात् 'अमूशसोरस्य' 'सो नः पुंसः' नुडागमश्च न भवति ॥ ६३ ॥

( प्र० ) रै इति । स् च भ् च स्भ् तस्मिन् स्भि रै इति साङ्केतिकषष्ठ्यन्तत्वात्षष्ठीनिर्दिष्टस्येत्यन्तस्य । अथ वा । राय ए रै इति षष्ठीतत्पुरुषे आयादेशे यलोपे च सन्धिरार्षः । रैशब्दस्यैकार आ भवतीत्यर्थः ॥ ६३ ॥

ओकारान्तः पुंलिङ्गो गोशब्दः । गो सि इति स्थिते ॥

**ओरौ** ॥ ओकारस्यौकारादशो भवति पञ्चसु परेषु(क) । गौः । 'औ आव्' गावौ गावः ॥ ६४ ॥

**आमूशसि** ॥ ओकारस्यात्वं भवति अमि शसि च परे (ख)गाम् 'औ आव्' गावौ गाः । गवा गोभ्याम् गोभिः । गवे गोभ्याम् गोभ्यः । 'ङस्य' इत्यकारलोपः । गोः गोभ्याम् गोभ्यः । गोः गवोः गवाम् ॥ गवि गवोः गोषु । हेगौः हेगावौ हेगावः ॥ ६५ ॥

( च० ) ओकारान्तः पुंलिङ्गो गोशब्दः । दशार्थवाचकः । यतः—'दिग्दृष्टिदीधिति-स्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशधा मतः' । दशस्वप्यर्थेषु गोशब्दः पुंस्त्रीलिङ्गे ज्ञेयः इति हेमाचार्या आहुः ॥ गौडस्तु-'स्वर्गे रश्मौ ज वज्रे च बलीवर्दे च गौः पुमान् । स्त्रि सौरभेयीदृग्बाणदग्वाग्भूष्वप्सु भूम्नि च' ॥ इति विशेषमाह । गम्लृ गतौ । गम् । गच्छतीति गौः । गमेर्डोप्रत्ययः । डित्वाट्टिलोपः । 'स्वरहीनं' गो इति जातम् । गोशब्दस्य पञ्चसु विशेषः । सूत्रम्—'औरौ' ॥ ओः षष्ठ्येकवचनान्तम् । 'ङस्य' इत्यकारलोपः 'स्रोर्विसर्गः' । औ प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' ओकारान्तशब्दसंबन्धिन औकारस्य ओकारादेशो भवति पञ्चसु परेषु । अम् विषये तु—'आमूशसि' आ प्रथमैकवचनान्तं सांकेतिकम् । अम् च शस् च अम्शस् तस्मिन् सप्तम्येकवचनान्तम् । 'स्वरहीनं' ॥ 'सवर्णे०' ॥ ओकारस्यामि शसि च

---

( क ) ओराविति । ओकारान्ताद्विहितेषु पञ्चसु स्यादिषु इति बोध्यम् । तेन हेभानो हेभानवः इत्यादौ नातिप्रसङ्गः । उकारान्ताद्विहितौ सिजसावत्र नत्वोकारान्तात् । नन्वोरित्युक्ते उवर्णस्य कुतो न ग्रहणमिति चेन्न, द्विगुः उत ऊरित्यादिनिर्देशेन ओकारस्यैव ग्रहणात् ।—इति लोकेशकरः ।

( ख ) "आमूशसि" इत्यत्र 'वसोर्वउ' रित्यादिनिर्देशात् नोवर्णशङ्का, स्याद्यधिकारात् अचिनवामित्यत्रातिप्रसङ्गोऽपि न । ओतः किम्, ग्लावम् ।

परे आकारो भवति । 'सवर्णे०' 'मोऽनुस्वारः' ॥ द्वित्वे 'औ आव्' ॥ बहुत्वे आकारे कृते 'सवर्णे०' 'स्रो०' । यदादेशस्तद्वद्भवतीति ओकारस्यासमानत्वान्न 'सो नः पुंसः' इति सस्य नः । टादौ स्वरादौ 'ओ अव्' ॥ हसादावविशेषः । पञ्चमीषष्ठ्येकवचने 'ङस्य' इति सूत्रेण अकारलोपः । 'स्रोर्वि०' ॥ केचित्तु आमि 'ऋगन्ते' 'गोराम्' इति सूत्रान्तरेण नुडागममप्याहुः छन्दसि । गोनां गवाम् ॥ शेषं सुगमम् ॥ एवं द्योशब्दः स्त्रीलिङ्गे । त्रिलिङ्गे तु गौणत्वे सुद्योशब्दः । सुष्ठु शोभना द्यौः स्वर्गो यस्य स सुद्योः इन्द्रः । 'ओरौ' सुद्यौः सुद्यावौ सुद्यावः इत्यादि ॥ ६९ ॥

( प्र० ) आऽम्शसि इति । आ अम् शसि समानपदस्य कृताकारवर्जपरस्वरव्याख्यानाद्वा इत्यत्र नत्वाप्रसङ्गः ॥ ६९ ॥

इति सारस्वतप्रसादे स्वरान्ताः पुँल्लिङ्गाः । ७ ।

---

औकारान्तः पुंलिङ्गो ग्लौशब्दः(क) । तस्य हसादावविशेषः । स्वरादौ आवादेशः । ग्लौः ग्लावौ ग्लावः । हेग्लौः हेग्लावौ हेग्लावः । ग्लावम् ग्लावौ ग्लावः । ग्लावा ग्लौभ्याम् ग्लौभिः । ग्लावे ग्लौभ्याम् ग्लौभ्यः ग्लावः ग्लौभ्याम् ग्लौभ्यः। ग्लावः ग्लावोः ग्लावाम् । ग्लावि ग्लावो ग्लौषु इत्यादि ॥ इति स्वरान्ता पुंलिङ्गाः ॥ ७ ॥

( च० ) औकारान्तः पुंलिङ्गो ग्लौशब्दश्चन्द्रार्थः । ग्लै हर्षक्षये । ग्लायति कृष्णपक्षे इति ग्लौः । औणादिको डौप्रत्ययः । 'डिति टेः' 'स्वरहीन०' ग्लौः इति जातम् तस्य हसादावविशेषः । स्वरादौ तु सर्वत्र । 'औ आव्' ग्लौः ग्लावौ ग्लावः ।

इति स्वरान्तपुंलिङ्गसाधनम् ॥ ७ ॥

---

## * स्वरान्ताः स्त्रीलिङ्गाः ८ । *

अथ स्वरान्ताः स्त्रीलिङ्गाः कथ्यन्ते ॥ तत्र आबन्तस्त्रीलिङ्गो गङ्गाशब्दः। गङ्गा सि इति स्थिते ॥

आपः ॥ आबन्तात्परस्य सेर्लोपो भवति(ख) । गङ्गा ॥१॥

औरी ॥ आबन्तात्पर औरीकारमापद्यते ॥ 'अ इ ए' । गङ्गे गङ्गाः॥२

---

( क ) ग्लौः—चन्द्रः, 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरवचनात् ।

इति कवितार्किकोत्कलनवकिशोरशास्त्रिकृतायां मनोरमायां समाप्तः स्वरान्तपुंलिङ्गः ।

( ख ) आप इति । आ अबिति प्रश्लेषादाकाररूपस्यैवापो ग्रहणादातिगङ्ग इत्यादौ नातिप्रसङ्गः खट्वामतिक्रान्तोऽतिखट्वः; इत्यत्रातिप्रसङ्गवारणाय "आदन्तादिति वाच्यम्, तथा च—एकदेशविकृतस्यानन्यत्वादिति तस्यावन्तत्वेऽपि आदन्तत्वाभावान्न सिलोपः ।

( च० ) अथ स्वरान्तस्त्रीलिङ्गसाधनमुच्यते । अकारान्तः शब्दः स्त्रीलिङ्गे नास्ति । तत्रावन्तो गङ्गाशब्दः । प्रथमैकवचने सूत्रम्—'आपः' ॥ आप्शब्दस्य पञ्चम्येकवचनम् । 'स्वरहीनं०' 'स्त्रोर्विसर्गः' । 'आवतः स्त्रियाम्०' इति सूत्रेण यआप्प्रत्ययः कृतः तदन्ताच्छब्दात्परस्य सेर्लोपो भवति । अनेन सेर्लोपः ॥ द्वित्वे सूत्रम्—'औरी' ॥ औः प्रथमैकवचनान्तम् । सांकेतिकम् । ई प्रथमैकवचनान्तं सांकेतिकम् ॥ आबन्तादिति वृत्तिः कण्ठ्या । न वरम् । औकार ईत्वमापद्यते प्राप्नोति । अनेन औस्थाने ई 'अ इ ए' ॥ बहुत्वे 'सवर्णे०' 'स्त्रोर्वि०' ॥ १–२ ॥

( प्र० ) आप इति । आरूपः आप् आप् तस्मात् । तदन्तादित्यर्थः । ततश्च खट्वामतिक्रान्तोऽतिखट्वः अतिखट्वेनेत्यादावेकदेशविकृतस्यानन्यत्वादाबन्तत्वेऽपि तत्कार्याभावः ॥ १–२ ॥

**घिरिः** ॥ आबन्तात्परो घिरिर्भवति । हेगङ्गे हेगङ्गे हेगङ्गाः ॥ ३ ॥

( च० ) धौ तु सूत्रम्—'घिरिः' ॥ घिः प्रथमैकवचनान्तम् । 'स्त्रोर्वि०' ॥ इः प्रथमैकवचनान्तम् । 'स्त्रोर्वि०' 'नामिनो रः' ॥ केचित्तु—'घिरी' इति दीर्घमीकारं पठन्ति । ततः 'औ' इत्यस्मिन् सूत्रे दीर्घईकारानुवृत्तिं गृह्णन्ति 'ततो जरसी' इति रूपं साधयन्ति ॥ 'आबन्ता०' ॥ अनेन घिस्थाने इः । 'अ इ ए' ॥ ३ ॥

**अम्बादीनां धौ ह्रस्वः** ॥ अम्बादीनां धौ परे ह्रस्वो भवति ॥ हेअम्ब । हेअम्बे । हेअम्बाः ॥ यथाम्बा शब्दो द्विस्वरो मात्रर्थः । एवं ये द्विस्वरा मात्रर्थास्तेषां धौ परे ह्रस्वता स्यात् । हेअक्क । हेअक्के । हेअक्काः ॥ हेअल्ल । हेअल्ले । हेअल्लाः ॥ ४ ॥

( च० ) अम्बादीनां धिविषये विशेषमाह 'अम्बा०' ॥ अम्बादीनां धौ ह्रस्वो भवति । ततः 'समानाद्धे०' हे अम्ब हे अम्बे हे अम्बाः । एवं हे अक्क हे अल्ल हे अत्त । एते त्रयः एकार्थाः गृहमध्यस्थवृद्धस्त्रीवाचकाः । अम्बादीनां द्विस्वराणामेव धौ ह्रस्वता । तेन हे अम्बाले हे अम्बिके इत्यादौ न ह्रस्वः ॥ ४ ॥

( प्र० ) अम्बादीनामित्यत्रादिशब्देन मात्रार्थकस्वादक्काल्लादि च संग्रहः । अम्बिकादीनां तु अम्बादिभ्यो भिन्नत्वात्तदप्रसङ्ग ॥ ४ ॥

गङ्गाम् । गङ्गे । गङ्गाः ॥

**टौसोरे** ॥ आबन्तस्य टौसोः परयोरेत्वं भवति ॥ 'ए अय्' गङ्गया । गङ्गाभ्याम् । गङ्गाभिः ॥ ५ ॥

**ङितां यट्** ॥ आबन्तात्परेषां ङेङसिङस्ङि इत्येतेषां ङितां वचनानां यडागमो भवति । टकारः स्थाननियमार्थः ॥ गङ्गायै । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गयोः । गङ्गानाम् । 'आम्ङेनियश्च' गङ्गायाम् । गङ्गयोः । गङ्गासु । एवं श्रद्धामेधाविद्या-

विशालामालाहेलादोलाप्रभृतयः ॥ ६ ॥

( च० ) द्वितीयैकवचने 'अमृशसोरस्य' 'मोनुस्वारः' ॥ द्वित्वे प्रथमावत् ॥ शसि 'अमृशसोरस्य' 'स्रोर्वि०' । पुंलिङ्गाभावात् 'सो नः पुंसः' इति न भवति ॥ तृतीयैकवचने सूत्रम्—'टौसोरे' ॥ टा च ओस् च टौसौ तयोः टौसोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' । ए प्रथमैकवचनान्तम् । साङ्केतिकम् । 'नाम्निनो रः' सिद्धमिदम् । आप्प्रत्ययान्तस्य टा इति तृतीयैकवचने ओस् इति षष्ठीसप्तमीद्विवचने परे ए भवति षष्ठीनिर्दिष्टस्येत्यन्तस्य । अनेन ए 'ए अय्' 'स्वरहीनं०' ॥ हसादौ त्वविशेषः ॥ चतुर्थ्येकवचने सूत्रम्—'ङितां यट्' ङ् इत् येषां ते ङितस्तेषां ङितां षष्ठीबहुवचनान्तम् 'स्वरहीनं०' 'मोऽनुस्वारः' ॥ यट् प्रथमैकवचनान्तम् । 'हसेपः०' । 'आबन्ता०' आप्रत्ययान्ताच्छब्दात्परेषामग्रे वर्तमानानां ङितां ङेङसिङसूङि इत्येतेषां वचनानां यडागमो भवति । टित्वादादौ । अनेन यडागमः सस्वर एव । टित्त्वाद्यडादौ । 'ए ऐ ऐ' षष्ठ्येकवचने यडागमे कृते 'सवर्णे०' 'स्रोर्वि०' ॥ षष्ठीद्विवचने 'टौसोरे' 'ए अय्' 'स्वरहीनं०' ॥ बहुत्वे नुडागमः । 'स्वरहीनं०' 'मोनुस्वारः' ॥ सप्तम्येकवचने । 'आम्ङेः' ततो यदादेशस्तद्वद्भवतीति न्यायात् । यडागमः । 'स्वरहीनं०' 'मोऽनुस्वारः' शेषं छकारः एवं श्रद्धादयो ज्ञेयाः ॥ ९–६ ॥

( प्र० ) ङितमिति । ङ् इत् येषां ते ङितस्तेषामित्यभिप्रेत्याह । ङेङसिङसूङि त्यादि । देशनियमार्थः । देशस्य स्थानस्य नियमार्थं इत्यर्थः ॥ ९–६ ॥

सर्वादीनां तु ङित्सु विशेषः ॥

**आबतः स्त्रियाम्** ॥ अकारान्तान्नाम्नः स्त्रियां वर्तमानाद्दाप् प्रत्ययो भवति । पकारः सिलोपार्थः । 'सवर्णे दीर्घः सह' । सर्वा सर्वे सर्वाः सर्वां सर्वे सर्वाः । सर्वया सर्वाभ्याम् सर्वाभिः । सर्वा ङे इति स्थिते ॥७॥

**यटोच्च** ॥ आबन्तात्सर्वादेः परस्य यटः सुडागमो भवति, पूर्वस्य चापोऽकारो भवति ॥ सर्वस्यै सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः सर्वाभ्याम् सर्वाभ्यः ॥ सर्वस्याः सर्वयोः सर्वासाम् । 'आम्ङेर्नियश्च' सर्वस्याम् सर्वयोः सर्वासु । हेसर्वे हेसर्वे हसर्वाः ॥ एवं विश्वादीनां सर्वाशब्दवद्रूपं ज्ञेयम् ॥८॥

( च० ) आबन्तः सर्वाशब्दः । तस्य तृतीयां यावत् गङ्गाशब्दवत् । सर्वा सर्वे सर्वाः । सर्वां सर्वे सर्वाः । सर्वया सर्वाभ्यां सर्वाभिः । ङित्सु द्विवचनेषु विशेषः । 'ङितां यट्' इति यडागमे कृते सूत्रम्—यटोच्च । यटः षष्ठ्येकवचनान्तम् 'स्वरहीनं०' 'स्रोर्विसर्गः' अत् प्रथमैकवचनान्तम् 'हसेपः०' 'अतोऽत्युः' 'उ ओ' 'एदोतोऽतः' च प्रथमैकवचनान्तम् 'अव्यया०' 'स्तोः श्चुना श्चुः' ॥ 'आबन्ता०' । अनेन यटः सुडागमः । टित्वादादौ पूर्वस्य च आपः आप्प्रत्ययाकारस्य अकारो भवति । चतुर्थ्येकवचने—'स्वरहीनं०' 'ए ऐ' सर्वस्यै । पञ्चमीषष्ठ्योरेकवचने—'ङितां यट्' 'यटोच्च' आकारस्य अकारः । 'स्वरहीनं०' 'सवर्णे०' 'स्रोर्वि०' ॥ सप्तम्येकवचने—'आम्ङेः' आमि कृते । 'ङितां यट्' 'यटोच्च'

'स्वरहीनं०' 'सवर्णदी०' 'मोऽनुस्वारः'। षष्ठीसप्तम्योर्द्विवचने 'ओसि' 'ए अय्' 'स्वरहीनं०' 'सोर्विसर्गः'। षष्ठीबहुवचने 'छडामः' 'स्वरहीनं०' 'मोऽनुस्वारः'। सम्बोधने तु गङ्गावत्। एवमावन्ताः सर्वादयोऽन्येऽपि विश्वा, उभा, अन्या, अन्यतरा, इतरा, कतरा, कतमा, समा, सिमा, नेमा, एका, पूर्वा, परा, दक्षिणा, उत्तरा, अपरा, अधरा, स्वा, अन्तरा ॥ उभयशब्दस्य तु, ईप्प्रत्ययः उभयी उभय्यौ उभय्यः ॥ नदीवत् ॥ द्वितीयातृतीयाशब्दयोर्ङित्सु वा सर्वादित्वम्। द्वितीयस्यै द्वितीयायै-द्वितीयस्याः-द्वितीयायाः द्वितीयस्यां-द्वितीयायाम्। तृतीयस्यै-तृतीयायै तृतीयस्याः, तृतीयायाः तृतीयस्यां-तृतीयायाम्॥ द्विशब्दस्य 'त्यदादेष्टे०' इत्यकारे कृते 'आवतः स्त्रियाम्' ततो गङ्गाशब्दद्विवचनवत्साध्यः। द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः। एवम् उभे उभे ॥ ७-८ ॥

आकारान्तो जराशब्दः॥ जरा। **जरायाः स्वरादौ जरस् वा वक्तव्यः**॥ जरसौ-जरे। जरसः-जराः। जरसं-जराम् जरसौ-जरे जरसः-जराः। जरसा-जरया जराभ्याम् जराभिः। जरसे-जरायै जराभ्याम् जराभ्यः। जरसः-जरायाः जराभ्याम् जराभ्यः। जरसः-जरायाः जरसोः-जरयोः जरसां-जराणाम्। जरसि-जरायाम् जरसोः-जरयोः जरासु। हेजरे-हेजरसौ-हेजरे हेजरसः-हेजराः॥ अयम् तदन्तविधिरत्रेष्यते। एकदेशविकृतमनन्यवद्भवतीति न्यायात्। केचित्तादाविनं अत आच्चेतीच्छान्ति। जरसः स्वरादौ निर्जरस्यापि भवति। निर्जरः निर्जरसौ-निर्जरौ निर्जरसः-निर्जराः। निर्जरसम्-निर्जरम् निर्जरसौ-निर्जरौ निर्जरसः-निर्जरान्। निर्जरसिना निर्जरसा निर्जरेण निर्जराभ्याम् ॥ **भिस् ऐस् वक्तव्यः**॥ निर्जरसैः-निर्जरैः। निर्जरसे-निर्जराय निर्जराभ्याम् निर्जरेभ्यः। निर्जरसः-निर्जरसात्-निर्जरात् निर्जराभ्याम् निर्जरेभ्यः। निजरसः-निर्जरस्य निर्जरसोः-निर्जरयोः निर्जरसाम्-निर्जराणाम्। निर्जरसि-निर्जरे निर्जरसोः-निर्जरयोः निर्जरेषु। हे निर्जर हे निर्जरसौ-हे निर्जरौ हे निर्जरसः-हे निर्जराः ॥

( च० ) आवन्तस्यापि जराशब्दस्य विशेषः। 'जरायाः०' जराशब्दस्य स्वरादौ जरस वा वक्तव्यः। 'गुरुः शिष्य सर्वस्य वक्तव्यः' साधनं स्वरादावेकस्मिन् पक्षे गङ्गावत्। द्वितीयपक्षे जरस् आदेशे कृते 'स्वरहीनं०'। शेषं सुकरम्। जरा जरसौ जरे जरसः जराः इत्यादि ॥ सोमपाक्षीरपादयस्त्वाप्प्रत्ययान्ता न, किं तु आकारान्ताः क्विबन्तास्तेषां साधनारूपाणि च पुंलिङ्गवत् ॥

( प्र० ) जराया इत्यत्र तदन्तविधेरिष्टत्वादेकदेशविकारेऽपि निर्जराजराशब्दयोः पुन्नपुंसकयोरपि जरस्वक्तव्यत्वाद्वाशब्दाद्वा। हे जरे इत्यत्र जरसभावः ॥

इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दः। तस्य प्रथमाद्वितीययोः हरिशब्दव-

त्प्रक्रिया । बुद्धिः । 'औ यू' बुद्धी । बुद्धयः । हे बुद्धे हे बुद्धी हे बुद्धयः । बुद्धिम् । बुद्धी । बुद्धीः । स्त्रीलिङ्गत्वान्नत्वनात्वाभावो विशेषः । बुद्ध्या बुद्धिभ्याम् बुद्धिभिः ॥

**इदुद्भ्याम्** ॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङिद्वचनानां वा अडागमो भवति ॥ इ यं स्वरे । 'ए ऐ ऐ' बुद्ध्यै । 'ङिति' 'ए अय्' । बुद्धये बुद्धिभ्याम् बुद्धिभ्यः । बुद्ध्याः । 'ङस्य' बुद्धेः । बुद्धिभ्याम् । बुद्धिभ्यः । बुद्ध्याः—बुद्धेः । बुद्ध्योः । बुद्धीनाम् ॥ ९ ॥

**स्त्रियां योः** ॥ इश्च उश्च युः तस्मात् । इवर्णान्तादुवर्णान्ताच्च स्त्रियां वर्तमानात्परस्य ङेरामादेशो भवति ॥ बुद्ध्याम् । अडागमाभावे आमोऽप्यभावः । 'ङेरौ ङित्' बुद्धौ बुद्ध्योः बुद्धिषु ॥ एवं मतिभूतिधृतिकान्तिगतिरुचिप्रभृतयः ॥ १० ॥

( च० ) इकारान्तो बुद्धिशब्दस्तस्य द्वितीयाद्विवचनं यावत् हरिशब्दवत्प्रक्रिया 'औ यू' 'ए ओ जसि' इत्यादि ॥ शसि–'अम्शसोरस्य' 'शसि' इति दीर्घः । 'स्रो०' । स्त्रीलिङ्गत्वान्नत्वस्य नात्वस्य चाभावः । 'सो नः पुंसः' इति सूत्रेण नकारो न । तृतीयैकवचने अस्त्रियामिति वचनात् 'टा नाऽस्त्रियाम्' इत्यस्य न प्रवृत्तिः किं तु 'इ यं स्वरे' 'स्वरहीनं०' ङित्सु रूपद्वयम् । एकत्र हरिवत् । 'ङिति' 'ङस्य' 'ङेरौ ङित्' 'ङिति' इत्यादि सूत्राणि । अन्यत्र सूत्रम्—'इदुद्भ्याम्' इच्च उच्च इदुतौ ताभ्याम् इदुद्भ्याम् पञ्चमीद्विवचनान्तम् । सिद्धम् एकपदम् । स्त्रियां वर्त० वृत्तिः कण्ठ्या ॥ अत्र 'नित्यं स्त्रियां वर्तमानाभ्यामिकारोकाराभ्याम्' इति व्याख्येयम् । तेन शुचिशब्दोऽनियतलिङ्गो हरिवज्ज्ञेयः । न तु विकल्पः ॥ अनेन चतुर्थीपञ्चमीषष्ठ्येकवचने वा अडागमः । टित्वादादौ । 'इ यं स्वरे' 'ए ऐ ऐ' पञ्चमीषष्ठ्योरेकवचने—'इ यं स्वरे' 'स्वर०' 'सवर्णे' 'स्रो०' ॥ सप्तम्येकवचने सूत्रम्–'स्त्रियां योः' स्त्री सप्तम्येकवचनम् 'आम्ङेर्नियश्च' 'हिंतामट्' 'स्त्रीभ्रुवोः०' 'स्वरहीनं०' 'मोऽनुस्वारः' इश्च उश्च युस्तस्मात् योः पञ्चम्येकवचनम् । 'ङिति' 'ङस्य' 'स्रोर्विसर्गः' इश्च उश्च० सुकरम् । स्त्रीलिङ्गे वर्तमानात् इवर्णान्ताद् उवर्णान्ताच्च शब्दात्परस्य ङेराम् आदेशो भवति । वर्णग्रहणान्नदीवधूजम्ब्वादीनामपि ङेराम् । अट्साहचर्यात् यस्मिन् पक्षे अडागमस्तस्मिन्नेव ङेराम् भवति । अत एवाग्रे वक्ष्यति 'अडागमाभावे आमोऽप्यभावः' इति । अनेन ङेराम् न । 'इदुद्भ्याम्' इति अडागमः । 'इ यं स्वरे' 'स्वरहीनं०' 'सवर्णे०' 'मोऽनुस्वारः' ॥ सप्तमीबहुवचने—'किलात्षः सः०' ॥ शेषं सुकरम् । सम्बोधने हरिवत् । 'समानाद्धेर्लोपोऽधातोः' 'धौ' एवं मतिभूतिधृतिरुचिप्रभृतयोऽपि इकारान्ता एतै रेव सूत्रैः सिद्ध्यन्ति ॥ ९-१० ॥

( प्र० ) ईदुद्भ्याम् । युव इत्यतो वानुवृत्तेर्नित्यस्त्रीलिङ्गानामेव नानियतलिङ्गानां शुचिमृदुपटुप्रभृतीनां शाकटायनास्त्वेषामपीच्छन्ति ॥ ९ ॥

स्त्रियां स्त्रोरिति विगृह्य व्याचष्टे । इश्च उश्चेति नुमभावश्चानित्यत्वात् । व्यत्ययो वा अत्रापि नित्यस्त्रीलिङ्गयोरित्येव अडागमाभावे आमोऽव्यभावे वक्तव्य इत्यर्थः ॥ १० ॥

एवं धेनुरज्जुदनुप्रभृतयोऽप्युकारान्ताः स्त्रीलिङ्गा एतैरेव सूत्रैः सिध्यन्ति । धेनुः धेनू धेनवः । धेनुम् धेनू धेनूः । स्त्रीलिङ्गत्वान्नत्वाभावः । धेन्वा धेनुभ्याम् धेनुभिः । धेन्वै-धेनवे धेनुभ्याम् धेनुभ्यः । धन्वाः-धेनोः धेनुभ्यां धेनुभ्यः । धेन्वाः-धेनोः धेन्वोः धेनूनाम् । धेन्वां-धेनौ धेन्वोः धेनुषु । हेधेनो हेधनू हेधेनवः । एवं रज्ज्वादीनां रूपम् ।

( च० ) एवम् उकारान्ता धेनुरज्जुप्रभृतयाऽपि ज्ञेयाः ॥ ८ ॥

ईबन्तः स्त्रीलिङ्गो नदीशब्दः ॥ "हसेपः सेर्लोपः" ॥ हसान्ताद् ईबन्ताच्च परस्य सेर्लोपो भवती ॥ नदी ॥

धौ ह्रस्वः ॥ इवर्णोवर्णयोरधातोः स्त्रीशब्दस्य च स्त्रियां धौ परे ह्रस्वो भवति । हेनदि ॥ नद्यौ । नद्यः । नदीम् नद्यौ नदीः । नद्या नदीभ्याम् नदीभिः ॥ ११ ॥

ङितामट् ॥ स्त्रियां वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै । नदीभ्याम् । नदीभ्यः । नद्याः । नदीभ्याम् । नदीभ्यः। नद्याः । नद्योः । नदीनाम् । नद्याम् । नद्योः । नदीषु ॥ १२॥

( च० ) ईकारान्तेषु ईबन्तो नदीशब्दः ॥ सूत्रम्—'हसेपः सेर्लोपः' हसश्च ईप् च हसेप् तस्मात् हसेपः पञ्चम्येकवचनम् 'स्त्रो०' 'स्वरहीनं०' । सेः षष्ठ्येकवचनान्तम् । 'ङिति' 'ढस्य' 'स्त्रो०' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' 'नामिनो रः' जलतुम्बि० हसान्ताद्व्यञ्जनान्ताच्छब्दात्परस्य ईप्प्रत्ययान्ताच्च शब्दात्परस्य सेर्लोपो भवति । हसान्ताच्च अग्रे हसान्तपुंलिङ्गे भविष्यन्ति । अत्र तु ईबन्तात् । नदीशब्दात्प्रथमैकवचने सि । अनेन सिलोपः । द्वित्वबहुत्वयोः—'इ यं स्वरे' 'स्वरहीनं०' ॥ धौ तु सूत्रम्—'धौ ह्रस्वः' ॥ धौ सप्तम्येकवचनान्तम् । 'ङेरौ ङित्' टेर्लोपः । 'स्वरहीनं०' । ह्रस्वः प्रथमैकवचनान्तम् । 'स्रोर्वि०' ॥ इवर्णोवर्णयोः । अधातोरिति धातुवर्जशब्दस्य अक्विबन्तस्येत्यर्थः ॥ अत्र अनियुवन्ता ईकारोकारान्ता नित्यस्त्रीलिङ्गाः शब्दाः स्त्रीशब्दश्च एतत्सम्बन्धिनोरेव इवर्णोवर्णयोरिति व्याख्येयम् । अनियुवन्ता इति किम् । हे भ्रूः । हे श्रीः । हे भूः । शेषं कण्ठ्यम् । अत्र वर्णग्रहणं ह्रस्वे कृते 'धौ' इति सूत्रस्य प्रतिषेधार्थम् । अनेन ह्रस्वः । 'समानाद्धेर्लोपः०' हे नदि हे नद्यौ हे नद्यः । अमि—'अमृशसोरस्य' 'मोऽनुस्वारः' । द्वितीयाद्विवचने 'इ यं स्वरे' 'स्वरहीनं०' शसि—'अमृशसोरस्य' 'स्त्रो०' ॥ नदीशब्दात् तृतीयैकवचने टा । 'इयं स्वरे' 'स्वरहीनं०' ॥ चतुर्थ्येकवचने सूत्रम्—'ङितामट्' ङ् इत् येषां ते ङितस्तेषां ङिताम् । षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' । अट्

प्रथमैकवचनान्तम् । 'हसेपः०' ॥ स्त्रियामिति । स्त्रीलिङ्गे वर्तमानाभ्यामोकाराभ्यां परेषां ङितां ङे ङसि ङस् ङि इत्येतेषामडागमो भवति । अनेन अडागमः । 'इ यं स्वरे' 'ए ऐ' पञ्चमीषष्ठ्योरेकवचने अडागमः । 'इ यं स्वरे' 'स्वरहीनं०' 'सवर्णे०' 'स्रोर्विं०'। षष्ठीसप्तम्योर्द्विवचने । 'इ यं स्वरे' ॥ षष्ठीबहुवचने नुडागमः 'स्वरहीनं०' 'मोऽनुस्वारः'॥ सप्तम्येकवचने । 'स्त्रियां य्वोः' 'ङितामट्' 'इ यं स्वरे' ॥ सप्तमीबहुवचने ॥ 'किलात्सः०' एवं नदीशब्दवत् गौरीसरस्वतीब्राह्मणीकुमारीनारीसारङ्गीप्रभृतयः एतैरेव सूत्रैः साध्याः ॥ ११-१२ ॥

( प्र० ) हसेप इति । हसश्च ईप् च हसेप् तस्मात् लव्वक्षरत्वात्पूर्वत्वं सौत्रं वा। अत्रापि ईरूपः ईप् इति ईप्विवक्षया । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिरित्यादौ सिलोपाभावः । यद्यपि हसान्तात्संयोगान्तलोपेनापि सिद्धिस्तथापि ' कक् लौल्ये इत्यादीनां ककारान्तानां क्विपि स्कोराद्योश्चेति विशेषस्य कलोपविधेः प्रसङ्गेनानिष्टं स्यात । धौ इति । वेयुव इत्यतो वानुकर्षणान्नित्यस्त्रीलिङ्गानां स्त्रीवर्जमनियुवन्तानामिति व्यवस्थाऽवसेया । अधातोरिति तु अनियुवन्तोपलक्षणार्थम् । अन्यथा प्रकृष्टा धीः प्रधीरिति विग्रहे नित्यस्त्रीत्वे प्रधीशब्देकारस्य धातोर्ह्रस्वता न स्यात । इयुवन्तत्वाच्च। हेश्रीः हेभूरित्यादौ न ह्रस्वत्वम् । "विमानना सुभ्रु कुतः पितुर्गृहे" इत्यादिप्रयोगाद्धौ सुभ्रूः स्त्रीवत । ह्रस्व इति केचित । ननु ह्रस्वत्वे इकारान्तत्वात् धाविति स्यादिति चेदसत्यम् । वेयुव इत्यतो वानुवृत्तेर्व्यवस्थाया न ह्रस्वविधानसामर्थ्याच्च । अन्यथा ए ओ इत्येव कुर्यात् स्त्रियां य्वोरित्यतो ह्रस्वदीर्घसाधारणानुवृत्तेरिवर्णोवर्णयोरित्युक्तम् ।

ङितामिति । यद्यपि स्त्रियां य्वोरित्यतो ह्रस्वदीर्घसाधारणानुवृत्तिस्तथापीदुद्भ्यामित्यनेन ह्रस्वाभ्यां विकल्पेन विधानात्परिशेषादिकारान्तादुकारान्ताच्चेत्युक्तम् । अत्रापि नित्यस्त्रीलिङ्गानामित्यर्थावसायात्सुनद्यै सुभूम्ये इत्यादावभावः ॥ ११-१२ ॥

लक्ष्मीशब्दस्येबन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः। हेलक्ष्मि हेलक्ष्म्यौ हेलक्ष्म्यः । शेषं नदीवत् ॥

> अवीलक्ष्मीतरीतन्त्रीधीह्रीश्रीणामुदाहृतः ।
> सप्तानामेव शब्दानां सेर्लोपो न कदाचन ॥ १ ॥

( च० ) ईकारान्तो लक्ष्मीशब्दस्तस्य ईबन्तत्वाभावादीप्प्रत्ययान्तत्वाभावात 'हसेपः०' इति सेर्लोपो न भवति । यतः—'लक्षेरी मुट् च' इति सूत्रेण ईकारान्तत्वात ॥ ततः प्रथमैकवचने—'स्रोर्विसर्गः' । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । 'इ यं स्वरे' 'स्वरहीनं०' 'स्रोर्विं०' ॥ सम्बोधने—हे लक्ष्मि । 'धौ ह्रस्वः' 'समानाद्धेर्लो०' ॥ शेषं नदीतुल्यम् ॥ यतः—'अवी लक्ष्मी तरी तन्त्री तन्द्री धी ह्री श्रियां पुरः । भीशब्दाच्च न सेर्लोपः स्त्रीलिङ्गे स्यात्कदाचन ॥

( प्र० ) लक्ष्मीशब्दस्येति । लक्षेरी मुडेतीप्प्रत्ययान्तत्वादित्यर्थः । तदुक्तम् । "अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादितः । सप्तानामपि शब्दानां सिलोपो न कदाचन" ॥

स्त्रीशब्दस्येवन्तत्वात्सेर्लोपोऽस्ति । स्त्री । **स्त्रीभ्रुवोः** ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ भवतः स्वरे परे । स्त्रियौ स्त्रियः । हेस्त्रि हेस्त्रियौ हे-स्त्रियः ॥ १३ ॥

**वाम्शसि** ॥ स्त्रीशब्दस्य अमि शसि च परे वा इय् भवति ॥ स्त्रियं-स्त्रीम् । स्त्रियौ । स्त्रियः-स्त्रीः । स्त्रिया । स्त्रीभ्याम् । स्त्रीभिः । स्त्रियै । स्त्रीभ्याम् । स्त्रीभ्यः । स्त्रियाः । स्त्रीभ्याम् । स्त्रीभ्यः । स्त्रियाः । स्त्रियोः । स्त्रीणाम । स्त्रियाम् स्त्रियोः स्त्रीषु । इत्यादि ॥ १४ ॥

( च० ) स्त्रीशब्दस्येवन्तत्वात् ईप्प्रत्ययान्तत्वात् सेर्लोपोऽस्ति । ष्टयै धातुः स्त्यै धातुश्च शब्दसंघातयोः । 'स्त्यायतेः स्त्रीत्वे ड्रट्' इति रप्रत्ययः । डित्वाट्टिलोपः । 'संयोगान्तस्य०' इति यकारलोपः 'स्वरहीनं०' ततः 'टृन्नितः' इतीप् । प्रथमैकवचने-'हसेपः०' द्वित्वे सूत्रम्—'स्त्रीभ्रुवोः' ।। स्त्री च भ्रूश्च स्त्रीभ्रुवौ तयोः स्त्रीभ्रुवोः षष्ठीद्विवचनान्तम् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' ॥ स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः । स्त्रीशब्दस्य इय् । भ्रूशब्दस्य उव् । अनेन इय् । 'स्वरहीनं०' बहुत्वेऽप्येवम् । द्वितीयैकवचने सूत्रम्—'वाऽम्शसि' ॥ वा तृतीयैकवचनान्तम् । 'अव्यया०' । अम् च शस् च अम्शस् तस्मिन् अम्शसि सप्तम्येकवचनान्तम् । 'सवर्णे दीर्घः०' ॥ अमि शसि च परे वा विकल्पेन इयुवौ भवतः । अत्र स्त्रीशब्द एव सम्भाव्यते । भ्रूशब्दस्य 'भ्रूम्' इति रूपस्यादृश्यमानत्वात् । उव्ग्रहणं तु सम्बन्धैक्यात् । अनेन एकत्र इय् 'स्वरहीनं०' 'मोऽनुस्वारः' । अन्यत्र 'अम्शसोरस्य' 'मोऽनुस्वारः' ॥ द्वित्वे प्रथमाद्वित्ववत् । शसि—'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'स्रोर्वि०' । अन्यत्र 'अम्शसो०' 'स्रोर्वि०' ॥ तृतीयैकवचने 'स्त्रीभ्रुवोः' 'स्वरहीनं०' स्त्रियाः स्त्रीभ्यां स्त्रीभिः । शेषं चतुर्थ्यादौ नदीवत् । अस्यायमर्थः—ङेङसिङस्ङिषु ङितामट्' कृत्वा इय् कर्तव्य इत्यर्थः । स्त्रीशब्दाच्चतुर्थ्येकवचने ङे 'ङितामट्' 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'ए ऐ ऐ' स्त्रियै स्त्रीभ्यां स्त्रीभ्यः । पञ्चम्येकवचने स्त्री अस् 'ङितामट्' 'स्त्रीभ्रुवोः' 'स्वर०' 'सवर्णे दीर्घः०' 'स्रोर्वि०' । स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः । षष्ठ्येकवचने स्त्री अस् । 'ङितामट्' 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'सवर्णे दीर्घः०' 'स्रोर्वि०' स्त्रियाः । षष्ठीद्विवचने स्त्री ओस् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'स्रोर्विः०' । षष्ठीबहुवचने स्त्री आम् । 'नुडामः' 'रषृनोंणो०' 'स्वरहीनं०' 'मोऽनुस्वारः' स्त्रीणाम् । अत्र 'स्त्रीभ्रुवोः' 'नुडामः' इत्युभयोः प्राप्तौ विशेषत्वात् नुडागम एव भवति । सप्तम्येकवचने स्त्री ङि । 'ङितामट्' 'स्त्रियां योः' इत्याम् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' 'सवर्णे०' 'मोऽनुस्वारः' स्त्रियाम् । सप्तमीद्विवचने ओस् । 'स्त्रीभ्रुवोः' 'स्वरहीनं०' स्त्रियोः । सप्तमीबहुवचने स्त्रीसु । 'किलात्षः सः०' स्त्रीषु । हे स्त्रि । धौ ह्रस्वः०' 'समानाद्धे०' हे स्त्रियौ हे स्त्रियः ॥ १३-१४ ॥

( प्र० ) स्त्रीशब्दस्येति । स्त्यायतेः स्त्रीत्वे ड्रट् इति ड्रटि टित्वादीबन्तत्वादित्यर्थः ॥ स्त्रीभ्रुवोरिति । भ्रमु अनवस्थाने अस्मात् प्रत्यये धातोरुवर्णाभावादुवावप्राप्तावारम्भः वाम्शसीत्यत्र यद्यपि स्त्रीभ्रुवोरित्यत एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा

निवृत्तिरिति भ्रूशब्दस्याप्यनुवृत्तिस्तथापि वाशब्दस्य व्यवस्थायामिति नास्य विकल्पः। वेयुव इत्यत्र वाशब्दस्य व्यवस्थितार्थत्वेन स्त्रीशब्दस्येयन्तत्वेऽपि अटो विकल्पाभावा- न्नित्यमटि शेषं नदीवदित्युक्तम् ॥ १३-१४ ॥

**श्रीशब्दस्य भेदः । ईकारान्तः श्रीशब्दः ॥ श्रीः । श्रियौ । श्रियः । श्रियम् । श्रियौ । श्रियः । श्रिया । श्रीभ्याम् । श्रीभिः ॥**

**वेयुवः ॥ इयुवन्तास्त्रियां वर्तमानात्परेषां ङितां वचनानां वा अडा- गमो भवति, न तु स्त्रीशब्दस्य विकल्पेन । श्रियै-श्रिये । श्रीभ्याम् ॥ श्रीभ्यः । श्रियाः-श्रियः । श्रीभ्यां श्रीभ्यः ॥ श्रियाः-श्रियः । श्रियोः । श्रियाम् । श्रयादीनां वामो नुट् वक्तव्यः । श्रीणाम् । श्रीयाम् । अडा- गमाभावे आमोप्यभावः । श्रियि श्रियोः श्रीषु । हेश्रीः हेश्रियौ हेश्रियः ॥ एवं धीह्रीप्रभृतयोऽप्यनीवन्ताः ॥ १५ ॥**

( च० ) अथ श्रीशब्दः । प्रथमैकवचने श्री सु । 'स्त्रोविं०' श्रीः ॥ प्रथमाद्विवचने श्री औ—'य्वोर्धातो०' 'स्वरहीनं०' श्रियौ । जसि—'य्वोर्धातो०' 'स्वरहीनं' श्रियः। द्वितीयैकवचने श्री अम् 'य्वोर्धातो०' 'स्वरहीनं०' श्रियं श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः । चतुर्थ्यादौ श्रीशब्दस्य विशेषमाह—सूत्रम्—'वेयुवः' ॥ वा तृतीयैकवचनान्तम् । 'अव्यया०' । इय् च उव् च इयुव् तस्मात् इयुवः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' मध्ये 'अ इ ए' ॥ नित्यं स्त्रियां वर्तमानात् इयन्तादुवन्ताच्च शब्दात्परेषां ङितां वचनानां विकल्पेन अडागमः स्यात्, न तु स्त्रीशब्दस्य । यतः कालापके 'स्त्री नदीवत्' । तथा हैमे 'वेयुवोऽस्त्रियाः' इति ॥ पूर्वम्—'य्वोर्धातोः०' 'वेयुवः' इति । अनेन एकत्र अडा- गमः । 'स्वरहीनं०' 'ए ऐ ऐ' । अन्यत्र य्वोर्धातो०' 'स्वरहीनं०' ॥ षष्ठीपञ्चम्योरेकव- चने । एकत्र 'वेयुवः' इति अडागमः । 'य्वोर्धातो०' 'स्वरहीनं०' 'सवर्णे दीर्घः०' 'स्त्रो- विं०' ॥ 'सवर्णे०' अन्यत्र 'य्वोर्धातो०' स्वरहीनं०'पक्षे पञ्चमीषष्ठ्योरेकवचने 'य्वोर्धा- तोः०' 'स्वरहीनं०' 'स्त्रोविं०' ॥ षष्ठीसप्तम्योर्द्विवचने । 'य्वोर्धातो०' इत्यनेन इय्। 'स्वरहीनं०' 'स्त्रोविं०' ॥ षष्ठीबहुवचने श्रयादीनां श्रीधीभीभ्रूप्रभृतीनामामः षष्ठीबहुव- चनस्य वा नुट् वक्तव्यः । अनेन नू । 'रषृभ्यो नो णः०' अन्यत्र इय् । स्वरहीनं०' 'मोऽनुस्वा- रः' ॥ सप्तम्येकवचने रूपद्वयम् । एकत्र 'स्त्रियां 'य्वोः' इति ङेराम् । 'य्वोर्धातो०' इति इय् 'यदादेशस्तद्वद्भवतीति 'वेयुवः' इत्यडागमः 'स्वरहीनं०' । ननु अडागमाभावेऽपि ङेराम् कथं न भवतीत्याह—अडागमाभावे आमोऽप्यभावः । यत्र प्रयोगे अडागमो न तत्र आमोऽप्यभावः । ङेराम् न भवतीत्यर्थः । शेषं कण्ठ्यम् ॥ धातुत्वाद्धेर्लोपो न किन्तु 'स्त्रोविं०' हे श्रीः । द्वित्वे बहुत्वे 'य्वोर्धातो०' इति इय् । एवं धीह्रीभीप्रभृतयो- ऽपि स्त्रीलिङ्गा अनीवन्ताः ईप्प्रत्ययरहिताः शब्दाः साध्याः ॥ सुश्रीसुधीसेनानीग्रामण्या- दयः पुंलिङ्गवत् । 'वेयुवः' इत्यत्र 'नित्यं स्त्रियाम्' इत्युक्तत्वात् स्त्रीवाचकत्वेऽपि सु- श्रिये सुधिये इत्यादौ न विकल्पः ॥ १६ ॥

( प्र० ) येयुव इति । इय् च उव् च इयुव् तस्मात् । येन विधिस्तदन्तस्येति इयुवन्तादित्युक्तम् । अत्रापि नित्यस्त्रीलिङ्गनियमात्तश्रियै नद्यै इत्यादावप्रसङ्गः । श्रथादीनामित्यत्र श्रीशब्दस्य प्रकारवाचित्वान्नित्यस्त्रीलिङ्गानां स्त्रीवर्जमियुवन्तानामुपादानात्स्त्रीनां भ्रूणामित्यादिसिद्धिः । कुमारीमात्मन इच्छति कुमारीयति कुमारीयतीति कुमारीत्यादौ स्त्रीप्रत्ययान्तप्रकृतिकान्नामधातोः क्विपि प्रकृतिवदिति वचनात्कुमार्यै ब्राह्मणायेत्याद्यूह्यम् ॥ १९ ॥

एवं भूशब्दो भ्रूशब्दश्च ॥ वधूजम्ब्वादीनां तु नदीवद्रूपं ज्ञेयम् । वधूः । वध्वौ । वध्वः । हेवधु । हेवध्वौ । हेवध्वः । शेषं नदीवत् ॥ एवं जम्बूः जम्ब्वौ जम्ब्वः । हेजम्बु इत्यादि ॥

( च० ) एवम् ऊकारान्तो भूशब्दः । भूः 'स्रोर्विं०' भुवौ भुवः । 'य्वोर्धातो०' ॥ भ्रूशब्दस्य तु 'भ्रमु चलने' । औणादिको डूप्रत्ययः । डकारष्टिलोपार्थः । भ्रमति चलतीति भ्रूः इति अक्विबन्तत्वात् अधातुत्वाच्च 'य्वोर्धातो०' इति न भवति, किन्तु 'स्त्रीभ्रुवोः' इति सूत्रेण उवादेशः । भ्रूः भ्रुवौ भ्रुवः । भ्रुवं भ्रुवौ भ्रुवः । भ्रुवा भ्रूभ्यां भ्रूभिः । 'येयुवः' 'स्त्रीभ्रुवोः' भ्रुवै भ्रुवे भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रूभ्यां भ्रूभ्यः । भ्रुवाः भ्रुवः भ्रुवोः भ्रुवां भ्रूणां । भ्रुवां भ्रुवि भ्रुवोः भ्रूषु । इयुवन्ताद्धौ न ह्रस्वता । हे भ्रूः । यद्वा धौ परे तु सुभ्रूशब्दः स्त्रीवदिति केचित् । तेन ह्रस्वः—हे सुभ्रु ॥ भ्रूशब्दस्य धौ वा ह्रस्वता । तेन सुभ्रूः ॥ वधूजम्बूश्वश्रूशब्दादीनां नदीशब्दवत्प्रक्रिया । परं सिविषये 'स्रोर्विस ँः' वधूः । वध्वौ वध्वः 'उवम्' ॥ वधूं 'अमृशसोरस्य' 'मोऽनुस्वारः' ॥ वध्वौ वधूः । वध्वा वधूभ्यां वधूभिः । 'ङितामट्' वध्वै । वध्वाः । स्त्रियां य्वोः' 'ङितामट्' 'उवम्' वध्वाम् । हे वधु ॥ एवं चमू-तनू-जम्बू-कण्डू-कच्छू-यवागू-दिधीषू-कद्रू-चम्पू-कर्कन्धू-करभोरू-प्रभृतयः ॥ स्वयम्भूप्रमुखाः पुंवत् ॥

ऋकारान्तो मातृशब्दस्तस्य पितृवत्प्रक्रिया । 'सेरा' । माता मातरौ मातरः । 'घेरर्' हेमातः हेमातरौ हेमातरः । मातरम् मातरौ । स्त्रीलिङ्गत्वाच्छसि नत्वाभावो विशेषः । शसीति दीर्घत्वम् । मातॄः । इत्यादि ॥ स्वसृशब्दस्य कर्तृशब्दवत्प्रक्रिया, स्त्रीलिङ्गत्वान्नत्वाभावो विशेषः । ( स्वसा स्वसारौ स्वसारः । स्वसारम् स्वसारौ । शसि स्वसॄः । हेस्वसः हेस्वसारौ हेस्वसारः ) ॥

( च० ) ऋकारान्तो मातृशब्दस्तस्य पितृशब्दवत्प्रक्रिया । 'अर् पञ्चसु' इत्यर् न वरम् । शसि दीर्घ एव भवति । परं स्त्रीलिङ्गत्वात् 'सो नः पुंसः' इति नत्वं न भवति । धौ 'घेरर्' ॥ एवं दुहितृयातृननान्दृशब्दाः । स्वसृशब्दस्तु कर्तृशब्दवत् । 'स्तुरार्' 'सेरा' शसि स्त्रीलिङ्गत्वान्नत्वाभावः 'सो नः पुंसः' इति न भवति इति विशेषः । स्वसॄः । तृतीयादौ 'ऋरम्' 'स्वरहीनं०' ॥ एवं पितृष्वसृमातृष्वसृशब्दौ ॥

( प्र० ) मातृशब्दस्य ऋकारान्तत्वेन नूण ईबितीप्राप्तावपि स्वसादिपाठान्न । ते

च "स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥" इति । विचारविशेषश्च तत्रैव वक्ष्यते ॥

इति सारस्वतप्रसादे स्वरान्ताः स्त्रीलिङ्गाः । ८ ।

---

रैशब्दस्य सुरैशब्दवत्प्रक्रिया । राः रायौ रायः । हेराः ॥ गोशब्दस्य पूर्ववत् ॥ नौशब्दस्य ग्लौशब्दवत्प्रक्रिया । नौः नावौ नावः । हेनौः हेनावौ हेनावः ।

इति स्वरान्तस्त्रीलिङ्गप्रक्रिया ॥ ८ ॥

---

( च० ) रैशब्दः सुरैशब्दवत् । राः । 'रै स्मि' रायौ रायः इत्यादि । रैशब्दः पुंलिङ्गे वर्तते । तथा अमरकोषे 'अर्थरैविभवा अपि' इति पुंलिङ्गे एव उक्तः । अत्र तु स्त्रीलिङ्गे एव उक्तस्तच्चिन्त्यम् ॥

गोशब्दः पुंवत् । 'ओरौ' गौः गावौ गावः । 'आम्शसि' गाम् गावौ गाः । गोभ्यां गोभिः इत्यादि । अत्रापि गोशब्दो दृशार्थवाची । एवं द्योशब्दोऽपि ॥ नौशब्दः ग्लौशब्दवत् । नौ, नावौ नावः ।'

इति स्वरान्तस्त्रीलिङ्गसाधनम् ॥८॥

---

# * स्वरान्ता नपुंसकलिङ्गाः९ । *

अथ स्वरान्ता नपुंसकलिङ्गाः प्रदर्श्यन्ते ॥ तत्राकारान्तः कुलशब्दः तस्य प्रथमाद्वितीयैकवचने ॥ **अतोऽम्** ॥ अतः अम् । अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवत्यचौ(क) । अमो ग्रहणं लुग्व्यावृत्त्यर्थम् । 'अमशसोरस्य' कुलम् ॥ १ ॥

---

( क ) अतोऽम् । अप्रश्लिष्टेऽपि निर्देशेऽमेवादेशो न मकारमात्रम् । तथा सति लाघवासन्देहार्थ इति निर्देश्यं स्यादत आह;—स्यमोरम् भवतीति । ननु किमर्थममादेशः क्रियते ममात्रमेव क्रियताम्, द्वितीयैकवचने मकारस्य मकारे प्रयोजनाभावादन्त्याभावे अन्त्यसदेशस्येत्यकारस्य प्रसङ्गः स्यात् । एकस्य संयोगान्तलोपाददोषः । "नाप्यजरं कुलमस्ति" इत्यत्र स्वरे जरसादेशो यथा स्यादिति वाच्यं सन्निपातलक्षणपरिभाषया तस्याप्रवृत्तेः । एवं तर्हि द्वितीयैकवचने सन्नेवाम् लुकोऽप्रवृत्तेरवातिष्ठते सूचनार्थम् । तथा चैवं वचनव्यक्तिः सेरामादेशो भवति, अमोऽपि सन्नेवाम् अवतिष्ठते इति न लुका निवर्तते इत्यर्थः । तेन अजरसं कुलं पश्येत्यत्रापूर्वविध्यसम्भवात् सान्निपातलक्षणपरिभाषाया अप्रवृत्तेर्जरसः सिध्यतीति सर्वमभिप्रेत्याह;—अमो ग्रहणमिति । ग्रहणमुपादानमादेशे अकारसहितमकारोपादानं द्वितीयैकवचने नपुंसकात् स्यमोरिति लुको वारणार्थमित्यर्थः ।

अन्ये तु ग्रहणमुच्चारणमनुवृत्त्यासम्बन्धनं पुनस्तद्विधानेन सिद्धे सत्यारम्भो नियमार्थमिति नियमेनाऽमेव यथा स्यात् लुङ्माभूदित्येवं लुको निवृत्तिव्याघातोऽस्य प्रयोजनं भवतीत्यर्थ इति व्याख्यायामा

( च० ) अथ स्वरान्तनपुंसकलिङ्गसाधनम् ॥ तत्र अकारान्तः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने सूत्रम्—'अतोऽम्' ॥ अतः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' । अम् प्रथमैकवचनान्तम् । 'हसेपः से०' मध्ये 'अतोऽत्युः' 'ङ ओ' 'एद्रोतोतः' ॥ अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोः सि अम् इत्येतयोरम् भवति । अघौ घेरम् न भवतीत्यर्थः । ननु स्यमोम् क्रियतां, किम् अम् इत्यकारग्रहणेन । सत्यम् । अजरसमित्यादिसाधनार्थम् ॥ अमोऽम्करणे हेतुमाह—अमो ग्रहणं लुग्व्यावृत्त्यर्थं अम्स्थाने पुनर्यदू अम्करणं तत् 'नपुंसकात्स्यमोर्लुक्' इति सूत्रनिषेधार्थम् । अयमर्थः—अकारात्परयोः स्यमोर्लुग् न भवतीति भावः । अनेन स्यमोरम् 'अम्शसोरस्य' 'मोऽनुस्वारः' ॥ १ ॥

( प्र० ) अतोमिति । तपरकरणं सुखमुखोच्चारणार्थम् । अकारान्तस्य ह्रस्वत्वेन व्यावर्त्यत्वाभावात् । "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः" इति लुको बाध इत्यर्थः । अनेकाक्षरत्वेन गुरुत्वात्सर्वस्यैवामः स्यान्नान्त्यमकारमात्रस्य । नन्वत्र म् एव विधीयताम् । सेरन्त्यस्याभावादाद्यन्तन्यायेन सर्वस्य स्यात् । अमोऽप्यन्तस्यैव भविष्यति । म्विधिसामर्थ्याच्च लुगभावोऽपि भविष्यतीति चेत्सत्यम् । अमो मस्य म्विधौ कुलं यातीत्यादावनुस्वारोऽपि न स्यात् । म्विधिसामर्थ्यात् । अजरसं कुलमित्यादिप्रयोगासिद्धिप्रसङ्गाच्च ॥ १ ॥

**इमौ ॥ नपुंसकलिङ्गात्पर औ ईकारमापद्यते(क)। अ इ ए। कुले ॥२॥**

(च०) प्रथमाद्वितीययोर्द्विवचने सूत्रम्—'इमौ' ई द्वितीयैकवचनान्तम् । 'अम्शसोरस्य' । औ प्रथमैकवचनान्तम् । साङ्केतिकम् । 'स्वरहीनं०' । नपुंसकलिङ्गात्पर औ ईकारमापद्यते । दीर्घ ईकारस्तु वारिणी दधिनी इत्यादिरूपसिद्ध्यर्थम् । अनेन औस्थाने ईकारादेशः । 'अ इ ए' ॥ २ ॥

( प्र० ) ईमौ इति । मधुनी इत्यादौ दीर्घश्रवणार्थं दीर्घविधिः ॥ २ ॥

**जश्शसोः शिः ॥ नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ गुरुः शिश्च सर्वस्य वक्तव्यः ॥ षष्ठीनिर्दिष्टस्येत्यस्यापवादः(ख) ॥ ३ ॥**

( च० ) सूत्रम्—'जश्शसोः शिः ॥ जस् च शस् च जश्शसौ तयोर्जश्शसोः षष्ठीद्विवचनम् । 'स्वरहीनं०' 'सोर्वि०' । शिः प्रथमैकवचनान्तम् । 'सोर्वि०' । नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शिरिति शकारः सर्वादेशार्थः । तेन सर्वस्य जसः शसश्च इर्भवति न त्वन्तस्य । तमेवाह–गुरुः शिश्चेति शकार इद्यस्य स शिदादेशः । गुरुः शिश्च

कुलमस्ति अजरसं कुलं पश्येत्युभयत्रापि सन्निपातलक्षणपरिभाषाया अनित्यत्वाजरसादेशं विदधतो महाभाष्यकारादन्यानुसरन्ति ।

(क) ईमीति । दीर्घोच्चारणं तु वारिणीत्यादौ श्रवणार्थम् । ईमाविति विपरीतोच्चारणं तु वारिणी इत्यादौ पूर्वमीकारः पश्चान्नुमिति सूचनार्थं स्पष्टं प्रतिपत्त्यर्थं वा ।

( ख ) जश्शसोरिति । अशोश्शिरिति वक्तव्ये यज्जश्शसोः शिरिति तत् स्पष्टप्रतिपत्त्यर्थम् । न च शतशो ददाति इत्यादौ शसन्तस्य शिरादेशः स्यादिति वाच्यम्, जसा सह चरितस्य शसो ग्रहणात् ।

सर्गस्य वक्तव्यः। गुरुरनेकाक्षरः 'त्रेरयङ्' इत्यादिकः। तथा शकारेऽच्च य आदेशः। शर्वस्यादेशिनः स्थाने भवति न त्वन्त्यस्य। अनेन जश्शसोः शिः। इ० ॥ ३ ॥

( प्र० ) जश्शसोरिति। जसा साहचर्यात् सानुबन्धग्रहणे न निरनुबन्धस्येति परिभाषया वा शसपि द्वितीयाबहुवचनमेवेत्यतः कुण्डशो ददातीत्यादौ शस्प्रत्ययस्य तदि- तस्य न। जश्शसोरिति षष्ठीनिर्देशादन्त्यस्य प्राप्तावपवादमाह। गुरुरित्यादि। गुरुरने- वर्णादेशः। ननु गुरुशब्दस्यानेकाक्षरादेशोपलक्षकत्वेन शेरप्यनेकाक्षरत्वादत्र सर्वादेशत्वसिद्धौ पृथगुपादानमपार्थकमिति चेत्सत्यम्। इत्वन्यादेरित्यत्र शित्करणम् "नानुबन्धकृतमनेका- ल्त्वम्" इत्यनुबन्धनिमित्तानेकवर्णत्वाभावात् ॥ ३ ॥

**नुमयमः** ॥ नुम् अयमः। नपुंसकस्य नुमागमो भवति शौ परे। यमप्रत्याहारान्तस्य न भवति ॥४॥ **मिदन्त्यात्स्वरात्परो वक्तव्यः**(क)। उकार उच्चारणार्थः। मकारः स्थाननियमार्थः ॥ **नोपधायाः** ॥ नः उ- धायाः(ख)। नान्तस्योपधाया दीर्घो भवति शौ परे, घिवर्जितेषु पञ्चसु परे नामि च। कुलानि। पुनरपि। कुलम्। कुले। कुलानि। शेषं देववत् कुलेन। कुलाभ्याम्। कुलैः। कुलाय। कुलाभ्याम्। कुलेभ्यः। कुलात् कुलाभ्याम्। कुलेभ्यः। कुलस्य। कुलयोः। कुलानाम्। कुले। कुलयोः कुलेषु। हेकुल। हेकुले। हेकुलानि। एवं मूलफलपत्रपुष्पकुटुम्बादयः॥५॥

( च० ) सूत्रम्—'नुमयमः' नुम् प्रथमैकवचनान्तम्। 'हसेपः०' न यम् अ- तस्य अयमः षष्ठ्येकवचनान्तम्। 'स्वरही०' 'स्रोर्विसर्गः' ॥ नपुंसकस्य नुमागमो भवति शौ परे। यमप्रत्याहारोऽन्ते यस्य शब्दस्य तस्य नुमागमो न भवति। यथा अहा- चत्वारि इत्यादौ ॥ मित् मकारेत् प्रत्ययः आगमश्च अन्त्यात्स्वरात्परो वक्तव्यः। उ- उच्चारणार्थः। अनेन नुमागमः। सूत्रम्। 'नोपधायाः' नस्योपधा नोपधा तस्या नो- धायाः षष्ठ्येकवचनान्तम्। 'ङितां यट्' 'सवर्णे दी०' 'स्रोर्वि०'। नान्तस्य श- उपधाया 'अन्त्यात्पूर्व उपधा' इति संज्ञासंधिकथितलक्षणया दीर्घो भवति नपुंसके परे, पुंलिङ्गे घिवर्जितेषु पञ्चसु वचनेषु, नामि च नुट्सहिते आमि परे च। यथा प- नाम्। अनेन उपधाया दीर्घः ॥ घौ 'समानाद्धेर्लोपः०'। हे कुल। द्विवचने 'ईमौ' इ ए' हे कुले। बहुवचने। 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' हे कुलानि। देवशब्दवत्। एवं मूलफलपत्रपुष्पकुण्डकुटुम्बज्ञायधनवनरत्नादयः शब्दाः साध्याः ॥४-

( प्र० ) नोपधायाः। नस्य नान्तस्य उपधा नोपधा तस्याः। नेति साङ्केतिक- न्तम्। पृथगेव वा। अत्र यद्यपि पञ्चस्विति सामान्येनोक्तं तथापि वादीपाः

---

( क ) मिदन्त्यादिति। सन्ध्यक्षराणि नन्दिग्रहादेरित्यादिज्ञापकात्।

( ख ) नोपधाया इत्यत्र 'छन्दसि तु भवति' इति नियमात् सन्धिः। 'छन्दोवत् सूत्राणि भवन्ति' इति वचनात्। क्वचिदुपलभ्यमानोऽपपाठः टीकाविरुद्धत्वात्।

वानुवर्तनात् स्त्रीपुंसयोः पञ्चसु नपुंसके वा सावति विवेकः । अधावित्यपि स्त्रीपुंसयोरेव क्लीबे प्राप्त्यभावात् ॥ ४-९ ॥

श्त्वन्यादेः ॥ श्तु अन्यादेः । अन्यादेर्गणात्परयोः स्यमोः श्तुर्भवति । शकारः सर्वादेशार्थः(क) । उकार उच्चारणार्थः । वावसाने इति पक्षे दत्वमपि भवति । अन्यत् अन्यद् । अन्ये । अन्यानि । पुनरप्येवम् । शेषं सर्ववत् ॥ अन्यतरत्-अन्यतरद् । अन्यतरे । अन्यतराणि । इतरत्-इतरद् । इतरे । इतराणि ॥ कतरत्-कतरद् । कतरे । कतराणि ॥ कतमत्-कतमद् । कतमे । कतमानि । शेषं सर्ववद्रूपम् ॥ [ प्रथमादयः कुलवत् ॥ प्रथमं प्रथमे प्रथमानि ] ॥ ६ ॥

( च० ) सर्वादयोऽपि नपुंसकलिङ्गे प्रथमायां द्वितीयायां च कुशब्दवत् । सर्वं सर्वे सर्वाणि । तृतीयादौ पुंलिङ्गवत् ॥ परमन्यादीनां प्रथमाद्वितीयैकत्वे विशेषः ॥ सूत्रम्—'श्त्वन्यादेः' ॥ श्तु प्रथमैकवचनान्तम् । साङ्केतिकम् । अन्य आदिर्यस्यासौ अन्यादिस्तस्मात् पञ्चम्येकवचनम् । 'ङिति' 'ङस्य' इत्यकारलोपः । 'सोर्वि०' 'उ दम्' 'स्वरहीनं०' ॥ अन्यादेः—अन्य अन्यतर इतर कतर कतम इत्याद्यन्यादेर्गणान्नपुंसकलिङ्गे वर्तमानात्परयोः स्यमोः श्तु इत्यादेशः भवति । शकारः सर्वादेशार्थः । 'गुरुः शिच्च सर्वस्य वक्तव्यः' इति न्यायात् । उकार उच्चारणार्थः । अनेन सेः स्थाने अम्स्थाने च त् इत्यादेशः । द्वित्वबहुत्वयोः कुलशब्दवत् । तृतीयादौ सर्वादिवत् । एवमन्यतरत् इतरत् कतरत् कतमत् एतेऽपि शब्दाः साध्याः ॥ 'जराया जरस् वो' इति वा जरस् । नास्ति जरा यस्य तत् अजरम् अजरसम् अजरे अजरसी अजराणि अजरांसि । शेषं पुंवत् ॥ अत्र यद्यपि क्रमेण पूर्वमाकारान्तः सोमपाशब्दस्तदग्रे इकारान्ता अस्थिदधिसक्थिवारिशब्दाः, तद्वदेव उकारान्ता मध्वादयः, तदग्रे ईकारान्ता ग्रामण्यादयः तद्वदेव ऊकारान्ता यवल्वादयः, तदग्रे ऋकारान्ताः कर्तृप्रमुखाः तदग्रे ऐकारान्तो रैशब्द इति क्रमो युज्यते, परमत्र केषुचित्पुस्तकेषु क्रमवैपरीत्येन लिखितानि सन्ति ॥ ६ ॥

( प्र० ) श्त्वन्यादेरिति । अधावित्यस्यानुवृत्तेर्धेरपि अमोऽपवादः । समानाद्धेर्लोपोऽधातोरित्यत्र कुप्वोः ≍क≍पौ वेत्यतो वानुवृत्तेर्व्यवस्थामाह । अन्यदिति । यस्त्वन्यदित्यत्रामूलुगभाव इवात्रापि श्तुविधानसामर्थ्यादेव लोपाभाव इति । तदसत् । येन नाप्राप्तिन्यायेनाम्लुकोः प्राप्तयोः श्तुविधेस्तदपवादत्वात् । विधानस्य च स्यमोरेव सार्थकत्वात् । आदिशब्देन डतमान्ताः पञ्चोपादीयन्ते । एकतरस्य च एकाच्च प्राचामिति डतरप्रत्ययान्तत्वेऽपि अनेकतरादिस्युत्तरसूत्रे प्रतिषेधान्नानपुंसके धौ वा गुण इत्यनिर्दि-

---

( क ) शकार इति । यद्यपि सेरेकवर्णत्वादेव सर्वादेशः सिद्धो द्वितीयैकवचने तु मस्य तादेशे कृते एकदेशविकृतन्यायेनालोपे सिध्यतीदमिति शकारो व्यर्थ इति प्रतिभाति तथापि स्वविषये मासस्य सर्वस्य स्थाने तु यथा स्यात् इति बोधनार्थः शकारः ।

ह्रस्वादित्वेऽपि गुणसंज्ञया विधीयमाननामिन एव स्थाने भवन्तीति नियमादत्रयो नामि स्थानिनो ज्ञेयाः ॥ ६ ॥

इकारान्तोऽस्थिशब्दः ॥ **नपुंसकात्स्यमोर्लुक्** ॥ नपुंसकलिङ्गात्परयोः स्यमोर्लुग्भवति । अस्थि ॥ ७ ॥

( च० ) इकारान्तो नपुंसकलिङ्गोऽस्थिशब्दः । स्यमोर्विषये सूत्रम्—'नपुंसकात्स्यमोर्लुक्' ॥ नपुंसकात् पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे दी०' । सिश्च अम् च स्यमौ तयोः स्यमोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' । लुक् प्रथमैकवचनान्तम् । 'हसेपः से०' 'नामिनो रः' अवर्णान्तवर्जान्नपुंसकलिङ्गात्परयोः स्यमोर्लुग् भवति । अनेन स्यमोर्लुक् ॥

**नामिनः स्वरे** ॥ नाम्यन्तस्य नपुंसकस्य नुमागमो भवति विभक्तिस्वरे परे(क) । ईमौ । अस्थिनी । अस्थीनि । पुनरप्येवम् ॥ **इवृणां नपुंसके धौ वा गुणो वक्तव्यः** ॥ इश्च उश्च ऋश्च तेषां इवृणाम् उक्तं हि ॥

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥ १ ॥

हे अस्थे-हेअस्थि ॥

( च० ) धौ विशेषमाह—'इवृणां धौ गुणो वा' इश्च उश्च ऋश्च इवरः तेषां इवृणाम् । इकार उकारऋकाराणां स्थाने नपुंसकलिङ्गविषये धौ वा गुणो वक्तव्यः । 'नपुंसकात्स्यमोर्लुक्' इति धिलोपे विहिते इकारस्य एकारो गुणः । हेशब्दस्य प्राक्प्रयोगः अत्र शिष्टसंमतिमाह—उक्तं च वृद्धैः । संबोधने० इति । तु इत्यत्रवारणे । माध्यंदिनिराचार्यः उशनसः उशनस्शब्दस्य संबोधने आमन्त्रणे त्रिरूपं रूपत्रयं वष्टि अभिलषति इच्छति वा कथयति । किं तत् त्रिरूपं सान्तं सकारान्तं यथा उशनस् । 'हसेपः०' 'रोर्विसर्गः' हे उशनः । तथा नान्तं नकारान्तम् हे उशनन् । तथा अदन्तमकारान्तं हे उशन इति । तु पुनः इगन्ते इकारोकारऋकारान्ते नपुंसके धिविषये विकल्पेन गुणं कथयति यतः प्रक्रियाकौमुद्याम्—इ उण् ऋलृक् एते इक्संज्ञकाः । यथा हे अस्थि हे अस्थे हे वारि हे वारे । हे मधो हे मधु । हे कर्तृ हे कर्त्तः । कथंभूतो माध्यन्दिनिः । व्याघ्रपदां व्याघ्रपद्गोत्रीयविप्राणां मध्ये वरिष्ठो गरिष्ठः श्रेष्ठः ॥ यमाद्वितीययोर्द्विवचने 'इमौ' इति औस्थाने ई ॥ सूत्रम्—'नामिनः स्वरे ॥' नामिनः षष्ठ्येकवचनान्तम्

(क) नामिनः स्वरे इति । यद्यपि वारिभ्यामित्यादौ नुमि जाते तस्य नाम्नो नो लोपश्चाघिति लोपे कृते सिद्धमिष्टमिति स्वरग्रहणं व्यर्थमिति प्रतिभाति, तथाप्यचाहृत्वनां शसादावित्युक्तलोपप्रयोगार्थं तदागमजस्य नस्य लोपश्च नेति ज्ञापनार्थं वा, तेन भवान् अनड्वान् विद्वान् इत्यादौ लोपश्च नास्ति। तु संयोगान्तलोपस्यासिद्धत्वादेषु न लोपश्च नास्ति, वारिभ्यामित्यादौ तु भविष्यत्येवेति विभाव्येन तर्हि न तन्निमित्तमित्यस्याऽनित्यत्वानित्यत्वाद्धौ परेऽपि नुम् स्यात्। प्रत्ययलक्षणस्वीकारात् तस्याघिति वैधाश्च लोपश्च । अतस्तत्र नुमभावार्थं स्वर इति पदम् ।

'स्वरहीनं०' 'सोर्विसर्गः' । स्वरे सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्वरे परे । अत्र विभक्तिसम्बन्ध्येव स्वरो ग्राह्यः । तेन दधि आनयेत्यत्र न नुम् । अनेन नुमागमः । 'स्वरहीनं०' ॥ बहुत्वे कुलवत् । दीर्घत्वे इकारस्य ईकारः ॥ तृतीयादौ हसादावविशेषः ॥ ८ ॥

( प्र० ) ऋजवस्तु ऋूणां नपुंसके इत्यादि पठन्ति । पूर्वाचार्यसम्मतिमाह उक्तं हीति । मध्यन्दिनस्यापत्यं माध्यन्दिनिः आचार्यः । उशनसः उशनश्शब्दस्य त्रिरूपं त्रयाणां रूपाणां समाहारस्त्रिरूपं त्रीणि रूपाणीत्यर्थः ॥

वष्टि कामयते । तथा इगन्ते इउऋलृवर्णान्ते नपुंसके गुणं च वष्टि । तद्गौरवार्थं व्याघ्रपादगोत्राणां मध्ये वसिष्ठः श्रेष्ठ इत्यर्थः ॥ ८ ॥

**अच्चास्थ्नां शसादौ** ॥ अत् चेत्यव्ययम् । अस्थ्नां अस्थ्यादीनां टादौ नुमागमो भवति, पूर्वस्य इकारस्य चाकारादेशो भवति शसादौ स्वरे परे ॥ शस् आदिर्यस्य सः शसादिः टादिः । शसादावित्यतद्गुणसंविज्ञानो बहुव्रीहिः । यथा चित्रगुर्बहुधनः ॥ ९ ॥

( च० ) स्वरादौ सूत्रम्—'अच्चास्थ्नां टादौ' ॥ अत् प्रथमैकवचनान्तम् । 'हसेपः०' । च प्रथमैकवचनान्तम् । 'अव्यया०' 'स्तोः श्चुभिः श्चुः' 'स्वरहीनं०' । अस्थ्नां षष्ठीबहुवचनान्तम् । 'अच्चास्थ्नां०' इति नुमागमः । इकारस्य अकारः । 'अलोपः स्वरे' 'स्वरहीनं०' मध्ये 'सवर्णे दी०' ॥ टा आदिर्यस्यासौ टादिस्तस्मिन् सप्तम्येकवचनान्तम् । 'ङेरौ ङित्' टिलोपः । 'स्वरही०' ॥ क्वचित्तु शसादाविति पाठः । तत्र शस् आदिर्यस्य स शसादिः अर्थात् टादिः । यद्वा गौणत्वेऽपि प्रियास्थ्नः शुनकान् प्रियदध्नश्च पुरुषान् इत्यादिप्रयोगसिद्ध्यर्थं शसोऽपि ग्रहणं युक्तम् । अस्थ्यादीनाम् अस्थिदधिसक्थिअक्षिशब्दादीनां टादौ स्वरे परे नुमागमो भवति ॥ इकारस्य च अकारः । अनेन स्वरादौ सर्वत्र नुम् इकारस्य च अकारः । 'नामिनः स्वरे' इत्यनेनैव चेन्नुम् क्रियते तदा इकाराभावे जाते 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति नुम्लोपः स्यात् । अतः 'अच्चास्थ्नाम्' इति नुम्करणं पुनरुक्तये न ॥ ९ ॥

( प्र० ) अच्चास्थ्नाम् । शस् आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणात् शसं विहाय टादावित्यर्थः । तदुपादानं च वसोर्व उरित्यादावनुवृत्त्यर्थम् । यत्तु प्रियास्थ्नः शुनः पश्येत्यादौ पुंसि शसि परेऽपि प्राप्त्यर्थं तदिति । तदयुक्तम् । पाणिन्यादिभिर्विरोधात् । अस्थ्नामिति बहुवचनेन अस्थिदधिसक्थि अक्षिशब्दा गृह्यन्ते । अत्र तदन्तविधेरपीष्टत्वात्प्रियदध्ना ब्राह्मणेनेत्याद्यपि । नामिनः स्वर इति नुमि सिद्धेऽपि पुनर्नुम्विधानं टानाद्वियामिति नाभावार्थमिति कश्चित्तदयुक्तम् । विशेषत्वात्परत्वाच्च तदभावात् । नाप्यामि नुडभावार्थम् । नुमः परत्वादेव प्राप्तेः । अत एव नुमस्तस्येति पाठः । वस्तुतः प्रियदध्ना ब्राह्मणेनेत्यादावनपुंसकेऽपि नुम्विध्यर्थं नुमविधेरत्यावश्यकत्वात् ॥ ९ ॥

**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ** ॥ नान्तस्योपधायो अकारस्य

लोपो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च(क)। मकारवकारान्त-संयोगादुत्तरस्य न भवति। अस्था अस्थिभ्याम् अस्थिभिः। अस्थे अस्थि-भ्याम् अस्थिभ्यः। अस्थः अस्थिभ्याम् अस्थिभ्यः। अस्थः अस्थोः अ-स्थाम् ॥ १० ॥

(च०)सूत्रम्-'अल्लोपः स्वरे' ॥ अतः अकारस्य लोपः अल्लोपः प्रथमैकवचनान्तम् 'स्रोर्वि०'। स्वरे सप्तम्येकवचनम्। 'अ इ ए'। अम्वयुक्तात्। मूच वश्च म्वौ ताभ्यां युक्तः संयोगः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात्। 'ङसिरत्' पश्चात् 'एदोऽतोऽतः' शस् आदिर्यस्य स शसादिस्तस्मिन् शसादौ सप्तम्येकवचनान्तम्। 'ङेरौ ङित्' 'चपाचः' सूत्रं सिद्धम् ॥ अत्र तु टादौ स्वरे परे एव अकारस्य लोपो भवति। शस्ग्रहणं प्रियास्थ्नः शुनकान् पश्य तथा राज्ञः इत्यादिप्रयोगसिद्ध्यर्थम्। नान्तस्य नकारान्तस्य उपधाया उपधाभूतस्य अकारस्य लोपो भवति शसादौ स्वरे परे मकारस्य वकारस्य संयोगादुत्तरस्य लोपो न भवति। यथा आत्मनः आत्मना। यज्वनः यज्वना। अनेन स्वरात् अकारलोपः। 'स्वरहीनं०'। तथा अस्थ्ना अस्थिभ्याम् अस्थिभिः। अस्थ्ने ॥ १०।

( प्र० ) अल्लोप इति। योगो युक्तः येन विधिस्तदन्तस्येति मकारवकारान्तयुक्-संयोगस्तस्मादुत्तरस्य न भवतीत्यर्थः। असमानोनाः प्रतिषेध इति अकारः प्रतिषेधार्थः अत्र शसादाविति तद्गुणसंविज्ञानबहुव्रीहे राज्ञ इत्यादिसिद्धिः। नन्वेवं कुलशब्दात् शौ परे नुमि अल्लोपः स्यादिति चेत्सत्यम्। पूर्वविप्रतिषेधेन नोपधाया इति दीर्घविधौ सति अतोऽभावाल्लोपाभावः। वेङ्योरित्यतो वानुकर्षणान्नपुंसके टादौ परेऽन्यत्र शसादाविति वा व्यवस्थावसेया। नुमन्तस्यामीत्यस्य वक्तव्यत्वेन प्रयोगानुसरित्वादस्य मिति ज्ञापकाच्चामि विशेषत्वेन दीर्घप्रसङ्गः ॥ १० ॥

वेङ्योः ॥ वेत्यव्ययम्। नान्तस्योपधाया इङ्योः परयोर्वा अकारस्य लोपो भवति ॥ अस्थि-अस्थनि अस्थोः अस्थिषु ॥ एवं दधिसक्थ्यक्षि-मृतयः शब्दाः ॥ ११ ॥

( च० ) ङौ अल्लोपे विशेषमाह—'वेङ्योः' वा प्रथमैकवचनान्तम्। 'अव्ययाο' ईच ङिश्च ईङी तयोः सप्तमीद्विवचनान्तम्। 'इ यं स्वरे' 'स्वरहीनं०' पश्चात्। 'अ इ' नान्तस्य नकारान्तशब्दस्य ई इति औस्थाने जाते ईकारे परे ङौ च सप्तम्येकवचने परे अकारस्य लोपो भवति। ईकारे परे तु अह्नि अहनि इत्यादौ ज्ञेयम्। ङौ परे अनेन वा अल्लोपः। अस्थि अस्थनि। एवं दधिसक्थिअक्षिशब्दाः। दधि दधिनी दधीनि। दध्ना दधिभ्यां दधिभिः। दध्नि दधनि ॥ एवं सक्थिशब्दः ऊरुवाची। सक्थि सक्थिनी सक्थीनि अक्षिशब्दो नेत्रवाची। अक्षि अक्षिणी अक्षीणि। अक्ष्णा अक्षिभ्याम् इत्यादि ॥ ११ ॥

---

( क ) अम्वयुक्ताच्छसादावित्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः। लम्बकर्ण इति वत्। अतः शसोऽपि ग्रहणम्।

(प्र० ) वेङ्योरिति । ईश्च ङिश्च ईङी तयोः अम्व्युक्तादिति अत्राप्यनुवर्तनीयम् । अत एव वज्वनीत्यादावप्रसङ्गः ॥ ११ ॥

**नपुंसकस्य** ॥ नपुंसकस्य ह्रस्वो भवति स्वरादौ ॥ १२ ॥ 'नामिनः स्वरे' इति नुमागमः । ग्रामणि ग्रामणिनी ग्रामणीनि । पुनरप्येवम् ॥

एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्तते ।
एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते(क) ॥ १ ॥

**टादावुक्तपुंस्कं पुंवद्वा** ॥ उक्तपुंस्कं नाम्यन्तं नपुंसकलिङ्गं टादौ स्वरे परे पुंवद्वा भवति(ख) ॥ ग्रामण्या-ग्रामणिना ग्रामणिभ्याम् ग्रामणिभिः । ग्रामण्ये-ग्रामणिने ग्रामणिभ्याम् ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिनः ग्रामणिभ्याम् ग्रामणिभ्यः । ग्रामण्यः-ग्रामणिनः ग्रामण्योः ग्रामणिनोः ग्रामण्याम् । नुमन्तस्यामि दीर्घः । ग्रामणीनाम् । ग्रामण्याम्-ग्रामणिनि ग्रामण्योः-ग्रामणिनोः ग्रामणिषु । हेग्रामणे—हेग्रामणि हेग्रामणिनी हेग्रामणीनि ॥ १३ ॥

(च० ) ईकारान्तो ग्रामणीशब्दः । सूत्रम्—'नपुंसकस्य' ॥ नपुंसकशब्दस्य षष्ठ्येकवचनान्तम् । 'ह्रस्व' ॥ नपुंसकलिङ्गे वर्तमानस्य दीर्घस्वरान्तस्य शब्दस्य सर्वविभक्तिषु ह्रस्वो भवति । प्रथमाद्वितीयैकवचने अनेन सर्वत्र ह्रस्वः । ई इत्यस्य इ । 'नपुंसकात् स्यमोर्लुक्' ॥ प्रथमाद्वितीयाद्विवचने ह्रस्वः । 'इमौ' 'नामिनः स्वरे' 'स्वरहीनं०' प्रथमाद्वितीयाबहुवचने ह्रस्वः । 'नुमयसः' नोपधायाः' ॥ तृतीयादौ ह्रस्वत्वे कृते हसादावविशेषः । स्वरादौ तु विशेषः ॥ श्लोकः—एक० । यः कश्चित् एक एव शब्दः आप्-प्रत्ययादिरहितः सन् त्रिषु लिङ्गेषु पुंस्त्रीनपुंसकेषु वर्तते एकमेव अर्थमाख्याति वक्ति तद्भाषितपुंस्कमुच्यते । ततः किं कर्तव्यमित्याह—'टादावुक्तपुंस्कं पुंवद्वा' उक्तः पुमान् पुंलिङ्गं येन तदुक्तपुंस्कम् । अर्थरूपाभ्यां तुल्याकारो यः शब्दः पुंसि नपुंसके वर्तमानः उक्तपुंस्कः तथावस्थितमपि निर्दिष्टपुंलिङ्गमेवम्भूतं नाम्यन्तं नपुंसकं टादौ स्वरादौ विभक्तौ परतः पुंवद्वा भवति नपुंसकलिङ्गे वा पुंलिङ्गवत्स्यात् । अनेन तृतीयादौ वा ह्रस्वः । ह्रस्वाभावे

---

(क ) उक्तं च—

"यन्निमित्तमुपादाय पुंसिशब्दः प्रवर्त्तते । नपुंसके तदेव स्यात् उक्तपुंस्कं तदुच्यते । पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः" । इति ।

(ख ) टादाविति । नपुंसकादित्यनुवर्त्तमानमुक्तपुंस्कामित्यनेन साकं सम्बद्धं प्रथमान्तं बोध्यम् । नामिनः स्वरे इत्यनुवर्त्तते । नामिन इत्यपि प्रथमान्तमवसेयम् । तच्च नपुंसकामित्यस्य विशेषणम् । तेन तदन्तं लब्धम् । उक्तः पुमान् यस्मिन् प्रवृत्तिनिमित्ते तदुक्तपुंस्कं तदस्यास्तीति मत्वर्थीयाकारप्रत्ययेन व्याख्यानं बोध्यम् । यद्योगाद्द्रव्ये शब्दनिवेशस्तत्प्रवृत्तिनिमित्तम् । शब्दे वर्त्तमानः कश्चिद्धर्मविशेष एव । पुंसि विद्यमानस्य शब्दस्य यत्प्रवृत्तिनिमित्तं तदेव तस्य नपुंसके वर्त्तमानस्य भवति चेत्तदोक्तपुंस्कामिति कथ्यते । पुंशब्देन तुल्यं पुंवत् । तुल्यत्वं चात्र नुमह्रस्वाभावद्वारकसादृश्यमेव । तेन नुमह्रस्वाभावातिदेशोऽयम् ।

सेनानीशब्दवत्—'य्वौ वा' इति यकारः। ह्रस्वत्वे—'नामिनः स्वरे' इति नुमागमः। ग्रा-मण्या ग्रामणिना ग्रामणिभ्यां ग्रामणिभिः। ग्रामण्ये ग्रामणिने ग्रामण्याम्। आमि पुं-वद्भावे नुडागमस्य नित्यत्वान्नुटि कृते 'नामि' इति दीर्घः। नपुंसकपक्षे 'नामिनः स्वरे' इति नुमि कृते 'नुडामः' इति सूत्रेण नुटोऽभावे 'नामि०' इति दीर्घत्वं न। तेन नुमन्तस्यापि दीर्घः। पक्षद्वयेऽपि ग्रामणीनामित्येव रूपसिद्धिः। परं 'नुडामः' इति नुटो नित्यत्वात् 'नामिनः स्वरे' इति न भवति। ततो 'नुमन्तस्यामि दीर्घः' इति व्यर्थमेव पुनश्चिन्त्यम्। उक्तं च हैमव्याकरणे—'अनाम् स्वरे नोऽन्तः'। ग्रामण्यां ग्रामणिनि ग्रामण्योः ग्रामणिनोः ग्रामणिषु। एवं शुचि कुलम्। तेन शुचिना शुचिया शुचिने शुचिये। एवं पटुने पक्षे इत्यादि। सेनानिशुचियवलुप्रमुखाः ॥ १२–१३॥

(प्र०) नपुंसकस्य षष्ठीनिर्दिष्टत्वाद्ध्रस्वादेशोऽन्त्यस्यैव न छवाक् कुङ्कुमित्यादौ ॥१३॥ टादाविति। एकप्रवृत्तिनिमित्तत्वेनोक्तः पुमान् येन तदुक्तपुंस्कं अतो भिन्न-प्रवृत्तिनिमित्तत्वेन उक्तावपि पील्वादीनां न पुंवद्भावः। तदुक्तम्। "पीलुर्वृक्षः फले पीलु पीलुने न तु पील्वे। वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥" इति। अत्र वृक्षे पीलुशब्दप्रवृत्तिनिमित्तं पीलुत्वजातिः। फले तु पीलुत्वम्। जात्यवच्छिन्नपीलुजन्यत्व-मिति। उक्तं च। "एक एव हि यः शब्दस्त्रिषु लिङ्गेषु वर्तते। एकमेवार्थमाख्याति उक्तपुंस्कं तदुच्यते ॥ १३ ॥

सोमपं कुलं। सोमपे सोमपानि। पुनरप्येवम्। सोमपेन सोमपाभ्याम् सोमपैः इत्यादि। हे सोमप ॥

(च०) आकारान्तः सोमपाशब्दस्तस्य 'नपुंसकस्य' इति सूत्रेण ह्रस्वे कृते 'टे' 'अ इ ए' सोमपेन सोमपाभ्यां सोमपैः। 'अङ्गि' 'स्भ्यः' सोमपाय सोमपाभ्यां सोमपे-भ्यः। सोमपस्य सोमपयोः सोमपानाम्। सोमपे सोमपयोः सोमपेषु। 'सम्बोधने नपुं-सकस्य' इति ह्रस्वे कृते कुलशब्दवत्। 'समानाद्धेर्लोपो०' सोमपाशब्दस्य उक्तपुंस्कत्वेऽपि नाम्यन्तत्वाभावात् तृतीयादौ स्वरादौ वा पुंवद्रूपाणि न भवन्ति ॥

इकारान्तो नपुंसकलिङ्गो वारिशब्दः। वारि वारिणी वारीणि। पुन-रप्येवम्। वारिणा वारिभ्याम वारिभिः। वारिणे वारिभ्याम् वारिभ्यः वारिणः वारिभ्यां वारिभ्यः। वारिणः वारिणोः वारीणाम्। वारिणि वारिणोः वारिषु। हवारे-हवारि हेवारिणी हेवारीणि ॥

(च० ) इकारान्तो वारिशब्दः। प्रथमाद्वितीययोः अस्थिशब्दवत्। वारि वारिणी वारीणि। तृतीयादौ 'नामिनः स्वरे' इति नुमागमः। 'रुनोर्णो०' 'स्वरहीनं०' वारिणा वारिभ्यां वारिभिः। वारिणे वारिभ्यां वारिभ्यः। वारिणः वारिभ्यां वारिभ्यः। वारि-णः वारिणोः। आमि नुडागमः 'नामि' इति दीर्घः। वारीणां। वारिणि वारिणोः वारि-षु। संबोधने। 'इवर्णो नपुंसके धौ०' हे वारि हे वारे इत्यादि शेषं सुगमम् ॥

उकारान्तो मधुशब्दः । तस्यापि स्वरादौ 'नामिनः स्वरे' इत्यादि नु-मागमः ॥ मधु मधुनी मधूनि । पुनरप्येवम् । हेमधो हेमधु इत्यादि ॥

( च० ) उकारान्तो मधुशब्दः । स च चैत्रमासवाची वसन्तवाची मधुदैत्यवाची च पुंलिङ्गे भवति । क्षौद्रमद्यमकरन्दवाची तु नपुंसकलिङ्गे भवति । अत एवार्थभेदादुक्तपुंस्कत्वं न, किन्तु तस्य वारिशब्दवत्साधना ॥ एवम् उकारान्तो वस्तुशब्दः । वस्तु वस्तुनी वस्तूनि । एवं वास्तु वास्तुनी वास्तूनि । अम्बु अम्बुनी अम्बूनि । सानु सानुनी सानूनि । इत्यादि ॥

ऋकारान्तः कर्तृशब्दः । कर्तृ कर्तृणी कर्तॄणि । पुनरप्येवम् । हेकर्तः-हेकर्तृ-हेकर्तृणी हेकर्तॄणि । कर्त्रा-कर्तृणा इत्यादि ॥

( च० ) कर्तृशब्दस्य प्रथमाद्वितीययोः अस्थिशब्दवत् । कर्तृ कर्तृणी कर्तॄणि । तृतीयादौ स्वरादौ उक्तपुंस्कत्वात् रूपद्वयम् तत्रैकत्र पुंवत् । तत्र 'ऋ रम्' अन्यत्र 'नामिनः स्वरे' इति नुमागमः । कर्तृणा कर्त्रा । कर्तृणे कर्त्रे । कर्तृणः कर्तुः । कर्तृणि कर्तरि । धौ वा गुणः अर् । हेकर्तः हेकर्तृ । शेषं कण्ठ्यम् ॥

**ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ च वक्तव्यौ ॥**

सुष्ठु रायो यस्य तत् । सुरि सुरिणी सुरीणि । पुनरप्येवम् । सुरिणा-सुराया । हेसुरे-हेसुरि हेसुरिणी हेसुरीणि ॥ ऐकारान्तो नपुंसकलिङ्गः अतिरैशब्दः । रायमतिक्रान्तमतिरि कुलम् इति विग्रहे । ह्रस्वादेशे संध्यक्षराणामिदुतौ इति ह्रस्वत्वम् । वारिवत्प्रक्रिया । अतिरि अतिरिणी अतिरीणि । पुनरप्येवम् । अतिराया–अतिरिणा अतिराभ्याम् अतिराभिः इत्यादि ॥ उकारान्तो नपुंसकलिङ्ग उपगुशब्दः । उपगता गावो यस्येति उपगु उपगुनी उपगूनि । पुनस्तद्वत् । तृतीयादौ स्वरे विकल्पः । उपगवा-उपगुना इत्यादि अतिरिवत्(क) । औकारान्तो अतिनौशब्दः । अतिनु अतिनुनी अतिनूनि इत्यादि ॥

( च० ) ऐकारान्तः छरैशब्दः । 'नपुंसकस्य' इति ह्रस्वे कृते वारिशब्दवत् । ह्रस्वादेशे संध्यक्षराणामिकारोकारौ वक्तव्यौ । छष्ठु राः धनं यस्य तत् छरि छरिणी छरीणि । छरिणा छराया छराभ्यां छराभिः इत्यादि । एवं छष्ठु नौर्यस्य तत् छनु छनुनी छनूनि । छनुनाछना वा छनुने छनावे इत्यादि ॥

शोभना द्यौर्यस्य तत् सुद्यु सुद्युनी सुद्यूनि । हेसुद्यो-हेसुद्यु हेसुद्युनी हेसुद्यूनि ।

---

( क ) माधवमते तु सन्ध्यक्षरान्तेषु क्लीबेषु पुंवद्भावो नास्तीति बोध्यम् । नावमतिक्रान्तं यत् तदतिनु ।

इति मनोरमाभिधायां टिप्पण्यां स्वरान्ता नपुंसकलिङ्गाः समाप्ताः ।

सुद्युना-सुद्यवा । इत्यादि सर्वमुन्नेयम् ॥ इति स्वरान्तनपुंसकलिङ्गप्रक्रिया ॥९॥

( च० ) ओकारान्त उपगोशब्दः । औकारान्त उपनौशब्दः ।

इति स्वरान्तनपुंसकलिङ्गसाधनम् ॥

( प्र० ) इति पुंवद्भावाभावे पूर्वविप्रतिषेधेन य्वौ वेत्यस्य बाधान्नुमेव । कर्तृण इ-त्यादौ च परत्वादेव ऋतोऽडुरित्यादेर्बाध ऐकारान्तादीनां छरैप्रभृतीनां ह्रस्वादेशे सन्ध्यक्ष-राणामिकारोकारौ वक्तव्याविति । छरि । छरिणी । छ्यु । छ्युनी । छनु । छनुनी । तृती-यादौ च वा पुंवत् । छरिणा छराया । छ्युना-छ्यवा । छनुना-छनवा इत्यादयो ज्ञेयाः ।

इति सारस्वतप्रसादे स्वरान्ता नपुंसकलिङ्गाः ॥ ९ ॥

# * हसान्ताः पुंलिंगाः १० । *

अथ हसान्ताः पुंलिङ्गाः प्रदर्श्यन्ते । तत्र हकारान्तः अनडुह्शब्दः । अनडुह् सि इति स्थिते ॥ पञ्चस्वनडुह आमागमो वक्तव्यः शौ च ॥ **सावनडुहः** ॥ अनडुह्शब्दस्य सौ परे नुमागमो भवति ॥ **संयोगान्तस्य लोपः** ॥ संयोगान्तस्य लोपो भवति रसे पदान्ते च । २ । हसेपः सेर्लोपः । नुम्विधिसामर्थ्याद्दत्वाभावः । अनड्वान् अनड्वाहौ अनड्वाहः ॥ **धावम्** । अनडुह्शब्दस्य धौ परे अमागमो भवति । ३ । हेअनड्वन् हेअनड्वाहौ हेअन-ड्वाहः ॥ अनड्वाहम् अनड्वाहौ अनडुहः । अनडुहा । **वस्रां रसे** । वस् स्रंस् ध्वंस् भ्रंस् अनडुह् इत्येतेषां रसे पदान्ते च दत्वं भवति । अनडु-द्भ्याम् । अनडुद्भिः । अनडुहे । अनडुद्भ्याम् । अनडुद्भ्यः । अनडुहः । अनडुद्भ्याम् । अनडुद्भ्यः । अनडुहः । अनडुहोः । अनडुहाम् । अनडुहि । अनडुहोः । खसे चपा झसानाम् । अनडुत्सु ॥ ४ ॥

( च० ) अथ हसान्तपुंलिङ्गसाधनं किञ्चिदुच्यते । तत्र प्रथमं हान्तान् दर्शयति-हकारान्तोऽनडुह्शब्दः । तस्य नामसंज्ञायां सत्यां स्यादयो विभक्तयो दीयन्ते । ततः पञ्चस्वनडुह आमागमो वक्तव्यः शौ च ॥ अनडुह्शब्दस्य स्यादिषु पञ्चसु वचनेषु आ-मागमो भवति ॥ केचित्तु 'अनडुहश्च' इति सूत्रेण 'चतुरनडुहोराम् शौ च' इति सूत्रेण च आमागममिच्छन्ति । स्त्रीलिङ्गे च विकल्पेनामागममिच्छन्ति-अनड्वाही अनडुही इति । अनेन पञ्चसु आम् । 'मिदन्त्यात्स्वरात्परो वक्तव्यः' इति डु अग्रे आ । 'उ वम्' 'स्वरहीनं०' सूत्रम् । 'सावनडुहः' सौ सप्तम्येकवचनान्तम् । 'डेरौ डित' टिलोपः 'स्वरहीनं०' । अ-नडुहः षष्ठ्येकवचनान्तम् । 'ओर्वि०' 'औ आव्' सिद्धम् । वृत्तिः कण्ठ्या । अनेन

रे नुमागमः । हस्य पूर्वे न् । 'हसेपः सेर्लोपः' सूत्रम्—'संयोगान्तस्य लोपः' ॥ संयोगस्य अन्तः संयोगान्तस्तस्य षष्ठ्येकवचनम् 'ङस्य'। लोपः प्रथमैकवचनान्तम्। 'स्रोर्वि०' संयोगाक्षरस्य योऽन्तः संयुक्तानामक्षराणां योऽन्त्यो वर्णस्तस्य लोपो भवति रसे पदान्ते च । चकारात् रकारादग्रे संयोगान्तस्य लोपो न भवति 'रात्सस्य लोपः' इति सलोपस्यैव नियमात् ऊर्ज् चिकीर्षुः इत्यादौ 'अतः' इति अलोपे रेफादग्रे सकारस्य लोपो भवति परम् ऊर्ज् इत्यत्र जकारलोपो न सस्यैव नियमात् । यथा ऊर्क् ऊर्ग् ऊर्जौ ऊर्जः । अनेन सौ परे हकारस्य लोपः । अनड्वान् इति सिद्धम् । अत्र नुम्विधानसामर्थ्यादेव 'वसां रसे' इति दत्वं न भवति । यद्वा कृतेऽपि दकारे संयोगान्तस्य लोपान्न रूपभेदः । अनः शकटं वहतीति अनड्वान् वृषभः । 'अनसि वहेः क्विबनसो डश्च' इति क्विप् 'यजाम्' इति सम्प्रसारणम् वस्य उः ॥ स्वरादौ 'स्वरहीनं०' ॥ धौ तु सूत्रम्—'धावम्' ॥ धौ सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' । अम् प्रथमैकवचनम् 'हसेपः से' पश्चात् 'औ आद्' 'स्वरहीनम्' ॥ अनडुह्शब्दस्य धौ परे अमागमो भवति । आमोपवादः ॥ अनेन अम् 'मिदन्त्या०' 'सावनडुहः' इति नुम् । 'हसेपः' 'संयोगान्तस्य लोपः' ॥ द्वित्वेहुत्वयोः—आमागमः । 'उ वम्' 'स्वरहीनं' ॥ द्वितीयादौ 'स्वरहीनं०' ॥ हसादौ सूत्रम्—'वसां रसे' वसां षष्ठीबहुवचनान्तम् । 'स्वरहीनं' 'मोऽनुस्वारः' । रसे सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् ॥ वसामिति बहुवचननिर्देशात् वसादयः । वस् इति क्वसुप्रत्ययस्य व 'विदेर्वा वस्' इत्यपि वस् । स्रंस् ध्वंस् अधःपतने । अनडुह्शब्दो वृषभवाची । एतेषां रसे परे पदान्ते वा दत्वं भवति। षष्ठीनिर्दिष्टस्यादेशोऽन्त्यस्य भवति' अनेन हस्य दः । सकारादौ 'स्वरहीनं' ॥ सुपि—'खसे चपा झसानाम्' दस्य तः 'स्वरहीनं०' ॥ सिद्धोऽनडुह्शब्दः ॥ स्रंसुध्वंसोस्तु सकारान्तावसरे । उखास्रत् उखास्रसौ उखास्रद्भ्याम् । एं पर्णध्वत् ॥ ४ ॥

( प्र० ) पञ्चस्वनडुह इति । अनडुहश्चेति सूत्रेणेत्यर्थः । सूत्रे च इतोऽत्सर्वनामस्थाने इत्यतः पञ्चसु चतुरनडुहोरामुदात्तः चेत्यनन्तरतः आम्शौ चेति पदान्यनुवर्त्य अनडुह्शब्दस्यामागमो भवति पुंसि पञ्चसु नपुंसके शौ च । चकारात्स्त्रियां वा । ततश्च अनुडुही अनड्वाही । तथा स्वनडुहो स्वनड्वाही । नन्वत्र नुमि हकारस्य झस्त्वाभावान्नश्चापदान्ते झसे इत्यस्याप्राप्तेः कथमनुस्वार इति चेत्यसत्यम् । नश्चापदान्ते इति योगविभागात् स्यात् ॥

सौ इति । अत्र च नुमामोर्विरोधाभावात्समावेशः । संयोगान्तस्य । रसे रसादौ विभक्तावित्यर्थः । रसे इत्यनुवृत्तिसामर्थ्यादङ्गावयवसंयोगान्तत्वमाश्रयणीयम् । ततश्च तत्सौत्रमित्यादौ सकारस्य संयोगान्तत्वाभावः । पुम्भ्यामित्यादौ च भवति । अत्रापि वाऽनुकर्णाल्लोकाद्वा । ऊर्क् ऊर्ग् इत्यादौ रेफात्सकारात्परस्य संयोगान्तस्य लोपाभावः । अनड्वानित्यत्र वसां रसे इति दत्वप्राप्तावपि नुम्विधानसामर्थ्यान्न । धौ इत्यत्र चतुरनडुहोरामुदात्तः चेत्यतः चतुर इत्यस्यानुवृत्तेर्हे प्रियचत्व इत्यत्राप्यम् । द्वयोः प्रगृह्यत्वात्सन्ध्यप्रसङ्गः । अत्र च अम्विधानसामर्थ्यादामोऽपवादः । अन्यथा विशेषाभावात् नुम्च भवत्येव ॥

वसामिति । वसामिति बहुवचनं बहूपलक्षकमित्यभिप्रेत्याह । वसुस्रंसित्यादि ।

वसोः प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्येति वसन्तस्येति वस्वन्तस्येत्यर्थः । सोऽपि सान्त एवेति विद्वानित्यादौ तदभावः । पूर्वं दत्वे चासंयोगान्तलोपः ॥ ४ ॥

गोदुहशब्दस्य भेदः ॥ **दादेर्घः** ॥ दादेर्धातोर्हकारस्य घत्वं भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ गोदुघ् स् इति स्थिते ॥ ५ ॥

( च० ) हकारान्तत्वेऽपि अनडुह्शब्दापेक्षया गोदुह्शब्दस्य भेदः कश्चिद्विशेषोऽस्ति । गां दोग्धीति गोधुक् । 'दुह प्रपूरणे' गोपूर्वः क्विप्प्रत्ययान्तः । सूत्रम्—'दादेर्घः' ॥ दकार आदिर्यस्य स दादिस्तस्य दादेः षष्ठ्येकवचनान्तम् । 'ङिति' 'हस्य' रुर्विं०' 'नामिरः' ...स्वरविं० । घः प्रथमैकवचनान्तम् । 'स्रोर्वि' सिद्धम् । दादेरिति । दकारादेर्धातोर्हकारस्य घत्वं भवति झसे परे नाम्नस्तद्धिकारस्य रसे परे अथवा पदान्तविषये । भकारादौ सुपि च हस्य घः ॥ ५ ॥

( प्र० ) दादेरिति । दादित्वं धातुपाठोपदेशावस्थायामपेक्षितम् । ततश्च अधोक् इत्यादौ अडागमे कृते सति "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति आकारादित्वेऽप्युपदेशावस्थायां दादित्वाद्भवत्येव । दामलिहमात्मन इच्छति दामलिह्यति दामलिहतीति दामलिट् । इत्यादेर्नामधातोर्दादित्वेऽपि धातुपाठे तदभावान्न घत्वम् ॥ ५ ॥

**आदिजबानां झभान्तस्य झभाः स्ध्वोः** । धातोर्झभान्तस्यादौ वर्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नश्च रसे पदान्ते च ॥ ६ ॥

(च०) सूत्रम्—आदिजबानां झभान्तस्य झभाः स्ध्वोः' ॥ आदिजबानामादौ वर्तमाना जबाआदिजबास्तेषां । षष्ठीबहुवचनान्तम् । 'नुडामः' 'नामि' स्वरहीनं०' 'मोऽनुस्वारः' झभा अन्ते यस्य स झभान्तस्य षष्ठ्येकवचनान्तम् । 'हस्य' प्रथमाबहुवचनान्तम् । 'स्वरे दीर्घः' 'स्रोर्विं०' । स् च ध्व् च स्ध्वौ तयोः स्ध्वोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' ' रोर्विं०' ॥ सिद्धं चतुःपदमिदम् झभान्तस्य धातोरादौ वर्तमानानां जबानां झभा भवन्ति । जडदगबानां क्रमेण झढधघभा भवन्ति सकारे ध्वे च परे आख्याते आत्मनेपदे ध्वे ध्वं सम्बन्धिनि परे, नाम्नश्च रसे पदान्ते च ॥ केचित्तु जभतीति जप् जभौ जभ इत्यादौ प्रयोगे जकारस्य झकारासम्भवात् । 'आदिडबानां ढ्भान्तस्य ढभाःस्ध्वोः' इति सूत्रं पठन्ति ॥ अनेन यत्र रसप्रत्याहारस्तत्र दस्य धः ॥ ६ ॥

( प्र० ) आदिजबानाम् । अत्र वावसाने इत्यतो वानुवृत्तेर्व्यवस्थया जम्भतीति इत्यादौ, तथा दामलिडादौ च न । गर्दभमात्मन इच्छति गर्दभीयति गर्दभीयतीति गर्दप् । इत्यादौ मध्यवर्तिनोऽपि दकारस्य झभत्वम् । नाद्यस्यापि गकारस्य ॥ ६ ॥

**वावसाने** ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा ॥७॥ गोधुक् गोधुग् । गोदुहौ । गोदुहः । हेगोधुक्—हेगोधुग् । हेगोदुहौ । हेगोदुहः । गोदुहम् । गोदुहौ । गोदुहः ॥ गोदुहा । भकारादौ—'दादेर्घः' इति घत्वे कृते—'आदिजबानाम्' इत्यनेन दकारस्य धकारे कृते—'झबे जबाः'

गोधुग्भ्याम् । गोधुग्भिः । गोदुहे । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहः । गोधुग्भ्याम् । गोधुग्भ्यः । गोदुहः । गोदुहोः । गोदुहाम् । गोदुहि । गोदुहोः । गोधुक् सु इति स्थिते ॥ 'खसे चपाझसानाम्' इति ककारः । पश्चात्—'किलात्षः सः कृतस्य' इति षत्वम् ॥ **कषसंयोगे क्षः** ॥ ककारषकारसंयोगे क्ष इत्यक्षरं भवति । गोधुक्षु ॥ ८ ॥

( च० ) सूत्रम्—'वावसाने' ॥ वा प्रथमैकवचनान्तम् । 'अवसाने सप्तम्येकवचनान्तम् । 'अ इ ए' 'सवर्णे दी०' सिद्धं द्विपदम् । अग्रे वर्णानामभावोऽवसानं तस्मिन् अवसाने अन्ते वर्तमानानां झसानां जबा भवन्ति पक्षे विकल्पेन चपा भवन्ति । अनेन सौ धौ च रूपद्वयं विधाय 'वसेपः से०' इति सिलोपे कृते एकत्र घस्य कः अन्यत्र गः । स्वरादौ 'स्वरहीनं०' ॥ भकारादौ विभक्तौ तु—'दादेर्घः' इति घत्वे कृते 'आदिजबानां' इति हस्य घः । 'झबे जबाः' घस्य गः । 'स्वरहीनं०' ॥ सुपि—'दादेर्घः' 'आदिजबानां०' 'खसे चपा झसानाम्' 'किलात्षः' इति षत्वम् । 'कषसंयोगे क्षः' ककारसंयोगे क्षो भवति । गोधुक्षु इति सिद्धम् ॥ ७–८ ॥

( प्र० ) वावसाने । विरामोऽवसानमित्यवसानं प्रसिद्धमेव । अत्र च खसे चपा झसानामित्यतः चपा इति । झभे जबा इत्यतश्च जबा इत्यनुवर्तते । ततश्च वाशब्दस्य चार्थत्वादवसाने वर्तमानानां झसानां जबाश्चपाश्च भवन्तीत्यर्थः । विकल्पार्थत्वे तु झसानां चपजबौ वेत्यर्थे रूपत्रयं स्यात् ॥ ७ ॥

मधुलिह्शब्दस्य भेदः ॥ **हो ढः** ॥ हकारस्य ढत्वं भवति धातोर्झसे परे, ना म्नश्च रसे पदान्ते च(क) । 'वावसाने' मधुलिट् मधुलिड् मधुलिहौ मधुलिहः । हेमधुलिट् हेमधुलिड् हेमधुलिहौ हेमधुलिहः । मधुलिहम् मधुलिहौ मधुलिहः । मधुलिहा मधुलिड्भ्याम् मधुलिड्भिः । होढः । खसे चपा झसानाम् । मधुलिट्सु ॥ इत्यादि ॥ ९ ॥

( च० ) मधु मकरन्दं पुष्परसं लेढीति मधुलिट् भ्रमरः । मधुलिह्शब्दस्य रसे पदान्ते च विशेषः । सूत्रम्—'होढः' ॥ हः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' । ढः प्रथमैकवचनम् । 'हवे' 'उ ओ' सिद्धम् ॥ धातुसंबन्धिनो हकारस्य झसे परे ढत्वं भवति नाम्नश्च नामत्वं प्राप्तस्य रसे परे पदान्ते च । [ उभयोः ] प्रथमैकवचने रूपद्वयम् । उभयत्रापि हस्य ढः । 'हसेपः०' 'वावसाने०' एकत्र टः । अन्यत्र डः । स्वरादौ 'स्वरहीनं०' भकारादौ 'हो ढः' इति ढत्वे 'झबे जबाः' ढस्य डः । 'स्वरहीनं०' । सुपि 'हो ढः' 'खसे चपा०' ढस्य टः 'स्वरहीनं०' मधुलिट्सु । इत्यत्र 'क्वचि दपदान्तेऽपि पदान्तता आश्रयणीया' इति न्यायात 'टोरन्त्यात' इति सूत्रेण सस्य षत्वाभावः ॥ ९ ॥

---

( क ) होढ इति । ढठडानामन्यतमस्तु लेढोत्याद्यासिद्ध्यर्थं कृतः । तथा सति झसान्तत्वाभावात्तथोर्ध इत्यस्याप्रवृत्तेः ।

( प्र० ) हो ढः । नाम्नो रसे इत्युक्तेर्द्धादयति द्रुहुते इत्यादौ धातो रसपरत्वे
ढत्वम् ॥ ९ ॥

मित्रद्रुह्शब्दस्य भेदः ॥ **द्रुहादीनां घत्वढत्वे वा ।**, द्रुह् मुह् स्नुह्
स्निह् इत्येतेषां हकारस्य घत्वढत्वे वा भवतः धातोर्झसे नाम्नश्च परे रसे पदा-
न्ते च । वावसाने । मित्रध्रुग्–मित्रध्रुक्–मित्रध्रुड–मित्रध्रुट् मित्रद्रुहौ मित्रद्रुहः ।
हेमित्रध्रुग्–हेमित्रध्रुक्–हेमित्रध्रुड्–हेमित्रध्रुट् । मित्रद्रुहम् मित्रद्रुहौ मित्रद्रुहः ।
मित्रद्रुहा मित्रध्रुग्भ्याम्–मित्रध्रुड्भ्याम् मित्रध्रुग्भिः–मित्रध्रुड्भिः । मि-
त्रध्रुट्सु–मित्रध्रुक्षु इत्यादि ॥ एवं तत्त्वमुह्शब्दः । तत्त्वे मुह्यतीति तत्त्व-
मुक्–तत्त्वमुग्–तत्त्वमुट्–तत्त्वमुड् तत्त्वमुहै तत्त्वमुहः । हेतत्त्वमुक्–हेतत्त्व-
मुग्-हेतत्त्वमुड् हेतत्त्वमुट् । तत्त्वमुहम् तत्त्वमुहौ तत्त्वमुहः । इत्यादि(क)॥१

( च० ) हकारान्तानामपि द्रुहादीनां वाक्यान्तरेण विशेषमाह—द्रुहादीनां घत्व-
ढत्वे वा । द्रुहादीनामिति द्रुह्मुह्स्नि स्नुहां रसे पदान्ते च घत्वं वा भवति विकल्पेन
घत्वे कृते द्वितीयपक्षे ढत्वं भवति । द्रुह् जिघांसायाम्, मुह् वैचित्ये, स्नुह् उद्गिरणे
स्निह् प्रीतौ, णश् अदर्शने एते द्रुहादयः । अत्र द्रुहो दकारादित्वात्प्राप्तस्य घत्वस्य वि-
कल्पः । अन्येषां तु अप्राप्तस्य विकल्प इत्यर्थः । मित्राय द्रुह्यतीति मित्रद्रुह् सर्वत्रा
प्रथमैकवचने रूपद्वये 'दादेर्धातोर्घः' । रूपद्वये च 'हो ढः' इति ढः । 'आदि झबानाम्

---

( क ) भारवाहूशब्दस्य भेदः । हो ढः वावसाने भारवाट् भारवाड् भारवाहौ भारवाहः । भारवा
भारवाहौ ॥ वाहो वौ शसादौ स्वरे ॥ वाहः वः औ शसादौ स्वरे । वाहो वकारस्यौकारादेशो भवति शसादौ
स्वरे परे । भारौहः । भारौहा भारवाड्भ्याम् भारवाड्भिः ॥ श्वेतवाह् उक्थशास् पुरोडास् अवयाज्
रसे पदान्ते चेति वक्तव्यम् ॥ डित्त्वाट्टिलोपः । अत्वसोः सौ । श्वेतवह् श्वेतवाहौ श्वेतवाहः । श्वेतवा
श्वेतवाहौ श्वेतवाहः । अत्र वाहो वौ शसादौ । स्वरे चेति केचित् । श्वेतौहः । श्वेतौहा श्वेतवाहा । श्वेत-
भ्याम् श्वेतवोभिः । श्वेतौहे-श्वेतवाहे श्वेतवोभ्याम् श्वेतवोभ्यः । श्वेतौहः-श्वेतवाहः श्वेतवोभ्याम् श्वेतवोभ्यः
श्वेतौहः-श्वेतवाहः श्वेतौहोः-श्वेतवाहोः श्वेतौहां श्वेतवाहाम् । श्वेतौहि श्वेतवाहि श्वेतौहोः-श्वेतवाहोः श्वे-
वःसु-श्वेतवस्सु ॥ अवयाः श्वेतवाः पुरोडाश्चैते कृतदीर्घाः सम्बुद्धौ निपात्यन्ते । चकारादुक्थशा इति केचित्
हेश्वेतवाः वेति केचित् । हेश्वेतवः हेश्वेतवाहौ हेश्वेतवाहः । श्वेतमासनं वहतीति श्वेतवाः इति व्युत्पत्तिः
उक्थशाः उक्थशासौ उथशासः । उक्थशासम् उक्थशासौ उक्थशासः । उक्थशासा उक्थशोभ्याम् उक्थ-
शोभिः । उक्थशासे उक्थशोभ्याम् उक्थशोभ्यः । उक्थशःसु-उक्थशस्सु । हेउक्थशाः हेउक्थशः हेउक्थ-
शासौ हेउक्थशासः । इत्यादि ॥ पुरोडाः पुरोडाशौ पुरोडाशः । पुरोडाशम् पुरोडाशौ पुरोडाशः । पुरो-
डाशा पुरोडोभ्याम् पुरोडोभिः । पुरोडाशे पुरोडोभ्याम् पुरोडोभ्यः । पुरोडःसु पुरोडस्सु । हेपुरोडाः-हेपुरोडः
हेपुरोडाशौ हेपुरोडाशः ॥ अवयाः अवयाजौ अवयाजः । अवयाजं अवयाजौ अवयाजः । अवयाजा अव-
योभ्याम् अवयोभिः । अवयाजे अवयोभ्याम् अवयोभ्यः । अवयःसु-अवयस्सु । हेअवयाः-हेअवयः हेअ-
वयाजौ हे अवयाजः ॥ तुरासाहूशब्दस्य भेदः । हो ढः ॥ संहेः ष साढि ॥ सहेः सकारस्य षकारादेशो भव-
ति साढि सति । वावसाने तुराषाट्–तुराषाड् तुरासाहौ तुरासाहः । तुरासाहम् तुरासाहौ तुरासाहः । तुरा-
साहा तुराषाड्भ्याम् तुराषाड्भिः । तुरासाहे तुराषाड्भ्याम् तुराषाड्भ्यः इत्यादि । हेतुराषाट्–हेतुराषाड्
हेतुरासाहौ हेतुरासाहः ॥ क्वचित्पुस्तकेऽधिकोयं पाठो दृश्यते ।

इति सर्वत्र द्रुत्थाने ड् । 'हसेपः सेर्लोपः' 'वावसाने०' । घस्य यथासंख्यं कगौ । ढस्य च टडौ । मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् । एवं सिविषये रूपचतुष्टयम् । मित्रद्रुहौ मित्रद्रुहः । भकारादौ सुपि च रूपद्वयम् । तत्रैकत्र घत्वे अन्यत्र ढत्वे कृते 'आदिजबानां०' इति द्रु इत्यत्र ध्रु । भकारादौ 'झबे जबाः' घस्य गः, ढस्य डः । मित्रध्रुग्भ्यां मित्रध्रुड्भ्यां मित्रध्रुग्भिः मित्रध्रुड्भिः । सुपि—'खसे चपा०' इति घस्य कः । ढस्य च टः । कत्वे—'किलात्षः सः 'कषसंयोगे क्षः' मित्रध्रुक्षु । ढत्वे—'स्वरहीनं०' मित्रध्रुट्सु । धौ सिवत् ॥ एवं तत्त्वमुहृत्पुत्रस्निहृशास्तिस्नुहोऽपि साध्याः । तत्त्वं प्रति मुह्यतीति तत्त्वमुट् । हान्तानां साधनमेतत् ॥ यकारवकारान्ता अप्रसिद्धाः ॥ १० ॥

( प्र० ) द्रुहादीनामिति । आदिशब्दान्मुहृस्नुहस्निहो गृह्यन्ते । अत्रापि । वार्थो वाशब्दः । अन्यथा घत्वढत्वाभावे तृतीयं रूपं स्यात् । क्वचित्तु घत्वढत्वे वेति पाठः । तदा ढत्वे सति घत्वं वा भवतीत्यर्थः । तन्न । दुहेर्होदित्येऽप्यस्मादेव वाक्यभेदेन ढत्वम् । क्वचिच्च सूत्रपाठादौ दुहां वेति सूत्रं पश्चात् पूर्वतः ततश्च द्रुहादीनां घत्वं वा भवति । घत्वाभावे चोत्सर्गतः ढत्वमिति सूत्रार्थो दर्शितः ॥ १० ॥

रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥ **चतुराम् शौ च ॥** चतुर्शब्दस्यामागमो भवति धिवर्जितेषु पञ्चसु परेषु, शौ च परे । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ॥ ११ ॥ **रः संख्यायाः ॥** रेफान्तसंख्यायाः परस्यामो नुडागमो भवति ॥ णत्वाद्वित्वे । चतुर्णाम् (क) ॥ १२ ॥

( च० ) रान्तमाह—रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः । प्रथमाबहुवचने सूत्रम्—'चतुराम् शौ च ॥ चतुर् इति षष्ठ्येकवचनान्तं सांकेतिकम् प्रथमैकवचनान्तम् । 'हसेपः सेर्लोपः०' । शौ सप्तम्येकवचनान्तम् । 'हेरौ डित्' टिलोपः । च प्रथमैकवचनान्तम् । 'अव्यया०' ॥ चतुर्० । 'पञ्चसु' ग्रहणं समासान्तत्वसूचकम् । यथा प्रियाश्चत्वारो यस्यासौ प्रियचत्वाः । इत्यादि ज्ञेयम् ॥ अन्यथा बहुत्वे पञ्चस्विति पदं न संभवति । शौचेति पदकथनेन नपुंसकेऽपि शस्याग्यामागमो भवति इत्यर्थः । 'मिदन्त्यात्स्वरात्परो वक्तव्यः' । जसि पूर्वम् आ । 'उवम्' 'स्वरहीनम्' 'सोर्विं०' ॥ शसि—'स्वरहीनं०' 'सोर्विं०' ॥ तृतीया चतुर्थी पञ्चमी बहुवचने । जलतुम्बिका० । षष्ठीबहुवचने सूत्रम्—॥ ११ ॥ 'रः संख्यायाः' रः पञ्चम्येकवचनम् । 'स्वरहीनं०' । संख्यायाः पञ्चम्येकवचनम् । 'ङितां यट्' 'सवर्णे दी०' ॥ 'रेफान्तसंख्यायाः०' अनेन नुट् । 'रषर्णो णो०' 'राद्यपो द्विः' जलतुम्बि० । चतुर्णामिति सिद्धम् ॥ सप्तमीबहुवचने—'किलात्षः सः०' जलतुम्बि० । चतुर्षु । 'दोषां रः' इति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो

---

( क ) तदन्तविधिरत्रेष्यते । प्रियाश्चत्वारो यस्य सः प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियचत्वारम् प्रियचत्वारौ प्रियचतुरः । प्रियशतुरा प्रियचतुर्भ्याम् । प्रियचतुर्भिः । गौणत्वे नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् ॥ धावम् । चतुर्शब्दस्य धौ परे आमागमो भवति ॥ हेप्रियचत्वः हेप्रियचत्वारौ हेप्रियचत्वारः ॥ पाठोऽयं पुस्तकान्तरे अधिकोऽस्ति ।

नान्यस्येति वक्तव्यम् । अतोऽत्र चतुर्ष्वित्यत्र न विसर्गः । 'चतुरनडुहोराम् संबुद्धौ' । हे प्रियचत्वः ॥ लक्षणान्ता अप्रसिद्धाः ॥ १२ ॥

( प्र० ) चतुरामिति । विसर्गलोपे छान्दसः सन्धिः । चतुर इति साङ्केतिकं ष. ष्ठ्यन्तं वा । पञ्चस्वित्यनुवृत्तिसामर्थ्यात्प्रियचत्वा इत्यदौ गौणत्वेऽपि ॥ ११ ॥

रः सङ्ख्याया इत्यनेन सङ्ख्यावाचित्वे । एवं गौणत्वे तु प्रियचतुराम् । प्राधान्ये तु परमचतुर्णाम् । स्रोर्विसर्ग इत्यत्र वानुकर्षणाल्लोकाद्वा चतुर्ष्वित्यादौ विसर्गाभा. वः । यक् चतुर्ष्विति ज्ञापकाच्च ॥ १२ ॥

नकारान्तो राजन्शब्दः । राजन् सि इति स्थिते । नोपधायाः इति दीर्घः । हसेपः सेर्लोपः । **नाम्नो नो लोपशधौ** ॥ नाम्नः न लोपश् अ- धौ नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ । राजा राजा- नौ राजानः । राजानम् राजानौ ॥ अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ इत्युप- धाया लोपः । स्तोः श्चुभिः श्चुः इति नकारस्य ञकारः ॥ १३ ॥ **जञोर्ज्ञः** ॥ जकारञकारसंयोगे ज्ञ इत्यक्षरं भवति ॥ राज्ञः । राज्ञा । राजभ्याम् । 'लो- पशि पुनर्न संधिः' इति नियमाद् 'अद्भि' इत्यात्वं न ॥ राजभिः । राज्ञे राजभ्याम् राजभ्यः । राज्ञः राजभ्याम् राजभ्यः । राज्ञः राज्ञोः राज्ञाम् । राज्ञि । वेङ्योः । राजनि राज्ञोः राजसु । अधाविति विशेषणाद्धेराजन् हेरा- जानौ हेराजानः ॥ १४ ॥

( च० ) नान्तानाह—नकारान्तो राजन्शब्दः तस्य पञ्चसु वचनेषु 'नोपधायाः' इति दीर्घः । प्रथमैकवचने सूत्रम्—'नाम्नो नो लोपशधौ' ॥ नाम्न इति नामन्शब्दस्य षष्ठ्येकवचनान्तम् । 'अल्लोपः स्वरे' 'स्वरहीनं०' ॥ नः षष्ठ्येकवचनान्तम् । 'स्वर- हीनं०' 'स्रोर्वि०' पश्चात् । 'हवे०' 'उमो' ॥ लोपश प्रथमैकवचनान्तम् । 'हसेपः' पश्चात् 'हवे' 'उमो' ॥ न धिः अधिस्तस्मिन् अधौ सप्तम्येकवचनम् । 'ङेरौ डित्' इति लोपः । पश्चात् 'स्वरहीनं०' ॥ नाम्न इति शब्दस्य सम्बन्धिनो नकारस्य लोपश् वर्णवि- रोधरूपो भवति परमनागमजस्य शब्दान्तभूतस्यैव । परं केनापि सूत्रेणागतस्य नस्य लोपश् न भवति रसे पदान्ते च । चकारात् सुहिन्न सुहिंसौ सुहिंसः । प्रशान् इत्यादौ नकारस्य लोपो न । अधौ धौ च लोपश् न भवति । अनेन सौ नस्य लोपः । अधाविति विशेषणात् धौ न नकारलोपश् । शसि—'अल्लोपः स्वरे०' इत्यकारलोपः । 'स्तोः श्चुभिः श्चुः' इति चुत्वे चवर्गे क्रियमाणे नकारस्य ञकारः । ततो 'जञोर्ज्ञः' । जश्च ञश्च जञौ तयोर्जकारञकारयोर्योगे ज्ञो भवतीत्यर्थः । अनेन जञ्योगे ज्ञः । 'स्वर- हीनं०' 'स्रोर्वि०' ॥ टाविषयेऽप्येवम् ॥ भकारादौ—'नाम्नो नो लोपशधौ' ततः 'लोपशि पुनर्न संधि'रिति करणात् 'अद्भि' इति सूत्रेण आकारो न भवति ॥ ङौ—'वेङ्योः' ॥ सु- पि—'नाम्नो नो लोपशधौ' ॥ १३-१४ ॥

(प्र०) नाम्नो न इति । सामानाधिकरण्ये षष्ठ्यौ । नकारान्तस्य नाम्न इत्यर्थः । नकारान्तत्वं चोपदेशावस्थायामेव । लोपस्यादेशविशेषत्वात् षष्ठीनिर्दिष्टस्येत्यन्तस्य । अन्यथा नरनारायणादिष्वादिभूतस्यापि नस्य लोपप्रसङ्गः । तथा छहिन् प्रशान् इत्यादावुपदेशकाले नान्तत्वाभावान्न लोपप्रसङ्गः । मो नो धातोरित्यादिना मस्य नकारादेशात् । अभावित्यस्य ङेरप्युपलक्षणाद्वैदिकत्वाद्वा । परमे व्योमन् इत्यादौ ङावपि नलोपाभावः । जनोर्ज्ञः । इत्यत्र जकारात्परेण नकारेण योगे ज्ञ इत्यर्थाद्भवाज्ञानातीत्यादौ न वक्तव्याद्वा ॥१३१४-॥

एवं यज्वन्नात्मन्सुधर्मन्प्रभृतयः ॥ यज्वा यज्वानौ यज्वानः । हेयज्वन् हेयज्वानौ हेयज्वानः ॥ यज्वानम् यज्वानौ । अम्वयुक्तादिति विशेषणादलोपो नास्ति । यज्वनः । यज्वना यज्वभ्याम् यज्वभिः । यज्वने यज्वभ्याम् यज्वभ्यः । यज्वनः । इत्यादि(क) ॥

(च०) एवं यज्वन् आत्मन् सुधर्मन् सुपर्वन् प्रभृतयोऽपि साध्याः । परं शसादौ 'अम्वयुक्तात्' इति विशेषणात् मकारवकारयुक्तत्वात् अल्लोपो नास्ति । तेन यज्वनः यज्वना इत्यादि ॥ उक्षन् मूर्धन् शब्दौ तु राजन्वत् ॥

श्वन्युवन्मघवन् शब्दानां पञ्चसु राजन् शब्दवत्प्रक्रिया । श्वा श्वानौ श्वानः । श्वानम् श्वानौ ॥

(च०) श्वानौ ॥ श्वा कुक्कुरवाची । युवा तरुणवाची । मघवा इन्द्रवाची । इत्येतेषां शब्दानां पञ्चसु स्यादिवचनेषु राजन् शब्दवत्साधना ॥

श्वादेर्व उः ॥ श्वादेर्वकार उत्वं प्राप्नोति शसादौ स्वरे परे ईपि ईकारे च(ख) । शुनः । शुना श्वभ्याम् श्वभिः । शुने श्वभ्याम् श्वभ्यः । शुनः श्वभ्याम् इत्यादि ॥ युवा युवानौ युवानः । युवानम् युवानौ । युवन् शब्दस्य तु वकारस्योत्वे कृते । सवर्णे दीर्घः सह यूनः । यूना युवभ्याम् युवभिः । यूने युवभ्याम् युवभ्यः । इत्यादि ॥ मघवा मघवानौ मघवानः । मघवानम् मघवानौ । मघवन्शब्दस्य वकारस्योत्वे कृते । उ ओ । मघोनः । मघोना मघवभ्याम् मघवभिः । मघोने मघवभ्याम् मघवभ्यः । इत्यादि(ग)॥१५॥

---

(क) आत्मा आत्मानौ आत्मानः । आत्मानम् आत्मानौ आत्मनः । आत्मना आत्मभ्याम् आत्मभिः इत्यादि ॥ हे आत्मन् हे आत्मानौ हे आत्मानः ॥ सुधर्मा सुधर्माणौ सुधर्माणः । सुधर्माणम् सुधर्माणौ सुधर्मणः । सुधर्मणा सुधर्मभ्याम् सुधर्मभिः इत्यादि ॥ हेसुधर्मन् हेसुधर्माणौ हेसुधर्माणः । इत्याधिकम् ।

(ख) 'तद्धिते स्वरे तु न भवति ॥ अत्र नियामकं पाणिनीयसूत्रम् । श्वयुवमघोनामतद्धिते । तेन माघवनं भवति । इति विशेषः पाठः ।

(ग) हेमघवन् हेमघवानौ हेमघवानः ॥ मघवा बहुलम् ॥ मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् ॥ ऋकारो नित्कायार्थः । बहुलग्रहणात्सर्वे विधयो व्यभिचरन्ति । मितो नुम् मघवान् । नश्चापदान्ते झले । मघवन्तौ मघवन्तः । मघवन्तम् मघवन्तौ मघवतः । मघवता मघवद्भ्याम् मघवद्भिः । मघवते मघव-

( च० ) शसादौ तु विशेषतामाह सूत्रम्—'श्वादेर्वं उः' ॥ श्वा आदिर्यस्य स श्वादि-स्तस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'ङोर्वि०' ॥ श्वादेरिति श्वन् युवन् मघवन् श-ब्दसम्बन्धो वकारः वत्वमुकारत्वं प्राप्नोति शसादौ स्वरे परे ईपि च । ईपि प्रत्यये परे तु शुनी यूनी मघोनी इति भवति । वकारेण सहितोऽकारः वकारः इति सस्वरस्यापि वकार-स्य स्थाने उकारः । 'स्वरहीनं०' शसादौ स्वरादौ सर्वत्र उकारः ॥ भकारादौ तपि च 'नाम्नो नो लोपशधौ' इति ॥ सम्बोधने राजन्शब्दवत् ॥ श्वा श्वानौ श्वानः । श्वानं श्वा-नौ शुनः । शुना श्वभ्यां श्वभिः । शुने श्वभ्यां श्वभ्यः । शुनः श्वभ्यां श्वभ्यः । शुनः शुनोः शुनाम् । शुनि शुनोः श्वसु । युवा युवानौ । युवन्शब्दस्य शसादौ 'श्वादेर्वः' इति वत्वे कृते 'सवर्णे दीर्घः०' यूनः यूना ॥ मघवन् शब्दे तु उकारे कृते । 'उ ओ' ॥ मघोनः मघोना मघवभ्यां मघवभिः । इत्यादि ज्ञेयम् । तकारान्तमघवत शब्दस्य तु मघवान् मघवन्तौ मघवन्तः । मघवन्तं मघवन्तौ मघवतः । मघवता मघवद्भ्यां मघवद्भिरिति रूपाणि । १५।

( प्र० )श्वादेः । वसोर्वं उरित्यतो व उमित्यनुवर्तते । तत्र च वकारेण युक्तः अः व इत्यर्थावधारणात्सस्वरस्येत्वम् । वकारमात्रोत्त्वे तु अकारश्रवणं स्यात् न चाकारस्याल्लोपः स्वरे इति लोपः स्यादिति वाच्यम् । ससम्येकवचनेऽल्लोपविकल्पात्पक्षे श्रवणप्रसङ्गात् । शसादावित्यादिशब्दादीपोकारे चेत्युक्तम् । क्वचिदीपि इति सूत्रम् । तत्र च ईश्च ईप्च तयोः समाहार ईप् तस्मिन्नित्यधिकारः । शुनी मघोनी युवतीत्यादौ निपातनाच्च । ईकारे च। शोभना युवानो ययोः कुलयोस्ते सुयूनी इत्यादि । मघ कौटिल्ये । मघनं मघः मघोऽस्या-स्तीति मघवान् । मघवन्तौ इत्यादि । वत्प्रत्ययान्तो मघवच्छब्दोऽन्य एव ॥ १५ ॥

नकारान्तस्यापि पथिन्शब्दस्य भेदः ॥ **इतोऽत्पञ्चसु** ॥ इतः अत् पञ्चसु । पञ्चसु स्यादिषु पथ्यादीनामिकारस्याकारो भवति ॥ १६ ॥

( च० ) पथिन् शब्दस्य भेदः ॥ सूत्रम्—'इतोऽत्पञ्चसु' ॥ इतः षष्ठ्येकवचनान्तम् 'स्वरहीनं०' 'ङोर्वि०' । अत् प्रथमैकवचनान्तम् । 'हसेपः०' 'अतोऽत्युः' 'उ ओ' 'एदो-ऽतोऽतः' । पञ्चसु इति पञ्चन् शब्दस्य सप्तमीबहुवचनान्तम् । 'नाम्नो नो०' सिद्धम् । स्यादिषु पञ्चवचनेषु परतः पथ्यादीनां पथिन्मथिन्ऋभुक्षिन् शब्दानामिकारस्य अकारो भव-ति ॥ अनेन सि औ जस् अम् औ वचनेषु थि इत्यस्य थ ॥ १६ ॥

( प्र० ) इतोऽदिति । पथां टेरित्यतः पथामित्यनुवर्तते । तत्र पथामिति बहुवच-नेन मथिन्ऋभुक्षिन् शब्दावप्युपादीयेते ॥ १६ ॥

**थो न्थ्** ॥ पथ्यादीनां थकारस्य न्थादेशो भवति पञ्चसु स्यादिषु

---

द्भ्याम् मघवद्भ्यः इत्यादि ॥ हेमघवन् हेमघवन्तौ हेमघवन्तः ॥ 'स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ॥' इति प्रयोगदर्शनात् ॥ अर्वणस्त्रसावनञः । नञ्वर्जस्यार्वणस्तृ इत्यन्तादेशः स्यादौ विभक्तौ परतः । अर्वा अर्वन्तौ अर्वन्तः। अर्वन्तम् अर्वन्तौ अर्वतः । अर्वता अर्वद्भ्याम् अर्वद्भिः । अर्वते अर्वद्भ्याम् अर्वद्भ्यः। इत्यादि ॥ हेअर्वन् हेअर्वन्तौ हेअर्वन्तः ॥ नञ्वर्जस्येति किम् । "नोपधाया" अनर्वा अनर्वाणौ अनर्वाणः। अनर्वाणम् अनर्वाणौ अनर्वणः । अनर्वणा अनर्वभ्याम् अनर्वभिः । अनर्वसु । इत्यादि। कुत्रचित् पुस्तके अयं पाठोऽधिकतयोपलभ्यते ।

परेषु। पन्थन् सि स्थिते ॥ १७ ॥

( च० ) सूत्रम्—'थो नुट्' ॥ थ षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रोर्वि०' ॥ नुट् प्रथमैकवचनान्तम्। 'हसेपः से०' 'हवे०' 'उ ओ, ॥ पथ्यादीनां थकारस्य पञ्चसु वचनेषु नुडागमो भवति। टित्वादादौ। थस्य पूर्वं न्। पन् थन् स इति स्थिते सति ॥ १७॥

आ सौ ॥ आ सौ ॥ पथ्यादीनां टेरात्वं भवति सौ परे। पन्थाः। "नोपधायाः" पन्थानौ पन्थानः। हेपन्थाः हेपन्थानौ हेपन्थानः। पन्थानम् पन्थानौ ॥ १८ ॥

( च० ) सूत्रम्—'आ सौ' ॥ आ प्रथमैकवचनान्तं सांकेतिकम्। सौ सिशब्दस्य सप्तम्येकवचनान्तम्। 'ङे रौ ङित्' टिलोपः। 'स्वरहीनं०' सिद्धम्। पथ्यादीनां टेः सौ परे आत्वं भवति। अनेन सौ न सहितस्य थ इत्यस्य था। टेरात्वकरणादेव सेर्लोपो न, किन्तु 'स्रोर्वि०' 'नश्चापदान्ते०' पन्थाः मार्गः। सम्बोधनेऽप्येवमेव। अग्रे द्वितीयाद्वित्वं यावत् 'नोपधाया०' दीर्घः। 'स्वरहीनं०' ॥ १८ ॥

पथां टेः ॥ पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे ताद्धिते ईपि ईकारे च। पथः। पथा पथिभ्याम् पथिभिः। पथे पथिभ्याम् पथिभ्यः। पथः पथिभ्याम् पथिभ्यः। पथः पथोः पथाम्। पथि पथोः। नलोपः। किलात्वः सः। पथिषु ॥ एवं मथिन्नृभुक्षिन् शब्दौ। मन्थाः। मन्थानौ मन्थानः ॥ ऋभुक्षाः ऋभुक्षाणौ ऋभुक्षाणः। इत्यादि ॥ १९ ॥

( च० ) शसादौ विशेषः। सूत्रम्—'पथां टेः' ॥ पथामिति पथिन्शब्दस्य षष्ठीबहुवचनान्तम्। 'पथां टेः०' 'स्वरहीनं०' 'मोऽनुस्वारः'। टेः षष्ठ्येकवचनान्तम्। 'ङिति' 'हस्य' 'स्रोर्वि०' ॥ पथिन् मथिन् ऋभुक्षिन्शब्दानां टेर्लोपो भवति शसादौ स्वरे परे। अनेन शसादौ स्वरे टेः इन् इत्यस्य लोपः। भकारादौ-'नाम्नो नो लोपशधौ' ॥ सुपि-'नाम्नो नो०' इति नकारलोपश्च कृते। 'किलात्वः सः' ॥ एवं मथिन्ऋभुक्षिन्शब्दौ ज्ञेयौ। मन्थाः मन्थनदण्डः ॥ ऋभुक्षाः इन्द्रः। ऋभुक्षाणौ ऋभुक्षाणः। ऋभुक्षाणम् ऋभुक्षाणौ ऋभुक्षः। ऋभुक्षा 'पथां टेः' ॥ ऋभुक्षिभ्याम् ऋभुक्षिभिः। ऋभुक्षे इत्यादि ॥ १९॥

दण्डिन्शब्दस्य भेदः। इनां शौ सौ ॥ इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाघौ परे उपधाया दीर्घो भवति(क)। सिलोपनलोपौ। दण्डी दण्डिनौ दण्डिनः। हे दण्डिन् हे दण्डिनौ हे दण्डिनः ॥ दण्डिनम् दण्डिनौ दण्डिनः। दण्डिना दण्डिभ्याम् दण्डिभिः। दण्डिने दण्डिभ्याम् दण्डिभ्यः। दण्डिषु। इत्यादि ॥ ब्रह्महा ब्रह्महणौ ब्रह्महणः। हेब्रह्महन् हे-

---

(क) इनामिति बहुवचनादाद्यर्थावगतिः। इन्नन्निन् समुदाये इन्त्वमारोप्यते छत्रिन्यायेन वा। तथा इन्-हन् पूषाऽर्यम्णां परिग्रहः। अर्थवत्परिभाषाया अनित्यत्वादनर्थकस्यापीना ग्रहणम्। तेन च तदन्तं गृह्यते।

ब्रह्महणौ हेब्रह्महणः । ब्रह्महणम् ब्रह्महणौ ॥ २० ॥

( च० ) दण्डिन्शब्दस्य भेदः । सूत्रम्—'इनां शौ सौ' ॥ इनां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वारः' । शौ इति शिशब्दस्य सप्तम्येकवचनान्तम् । "ङेरौ ङित्" सौ इत्यपि सिशब्दस्य सप्तम्येकवचनम् । 'ङेरौ ङित्' सिद्धम् । इन् इन्प्रत्ययान्तः, हन् धातुः ब्रह्मभ्रूणवृत्राद्युपपदपूर्वः क्विप्प्रत्ययान्तः । पूषन् सूर्यवाची । अर्यमन् सूर्यवाची । इत्येषां शौ नपुंसके जस्शसोः स्थाने जाते, सौ च प्रथमैकवचने धिवर्जिते परे दीर्घो भवति । 'नोपधायाः' इत्यनेन सिद्धौ सत्याम् 'इनां०' इति सौ परे एव दीर्घः स्यान्न तु पञ्चस्विति नियमार्थमुक्तम् । अनेन सौ दीर्घः । 'हसेपः०' 'नाम्नो नो०' ॥ स्वरादौ सर्वत्र 'स्वरहीनं०' ॥ रसे च—'नाम्नो नो०' ॥ सुपि—'क्विलात्पः सः०' ॥ धौ अधाविति विशेषणान्न लोपश्चदीर्घौ । हे दण्डिन् ॥ शेषं सुकरम् । ब्रह्मन्शब्दो दण्डिन्शब्दवत् । ब्रह्महा ब्रह्महणौ । 'अट्कुप्वन्तरेऽपि' इति णत्वम् । ब्रह्महणः । ब्रह्महणं ब्रह्महणौ ॥ २० ॥

( प्र० ) इनाम् । अत्रापि बहुवचनस्य बहूपस्थापकतामभिप्रेत्याह । इन्हन्नित्यादि । इनः प्रत्ययत्वादिन्नन्तस्य नोपधाया इत्यनेन सिद्धेऽपि नियमार्थः । सिद्धे सत्यारम्भो नियमायेति न्यायात् ॥ २० ॥

शसादौ तु 'अल्लोपः स्वरे' ॥ हनो घ्ने ॥ हनः घ् ने । हन्तेर्घातोर्हकारस्य घत्वं भवति अव्यवधाने नकारे परे, व्यवधाने ञिति णिति च परे । घसंयोगो णत्वानिषेधार्थः(क) ॥ ब्रह्मघ्नः । ब्रह्मघ्ना ब्रह्महभ्याम् ब्रह्महभिः । ब्रह्मघ्ने ब्रह्महभ्याम् ब्रह्महभ्यः । ब्रह्मघ्नः ब्रह्महभ्याम् ब्रह्महभ्यः । ब्रह्मघ्नः ब्रह्मघ्नोः ब्रह्मघ्नाम् । ब्रह्मघ्नि-ब्रह्महणि ब्रह्मघ्नोः ब्रह्महसु ॥ एवं पूषा पूषणौ पूषणः । हेपूषन् हेपूषणौ हेपूषणः । पूषणम् पूषणौ पूष्णः । पूष्णा पूषभ्याम् पूषभिः । पूष्णे पूषभ्याम् पूषभ्यः । पूष्णः पूषभ्याम् पूषभ्यः । पूष्णः पूष्णोः पूष्णाम् । पूष्णि-पूषणि । ङौ टिलोपो वेति केचित् । पूषि पूष्णोः पूषसु ॥ एवमर्यमा अर्यमणौ अर्यमणः । हेअर्यमन् हेअर्यमणौ हे अर्यमणः । अर्यमणम् अर्यमणौ अर्यम्णः । अर्यम्णा अर्यमभ्याम् अर्यमभिः । इत्यादि ॥ २१ ॥

( च० ) शसादौ तु—'अल्लोपः स्वरे०' इत्यलोपे कृते सूत्रम्—'हनो घ्ने' । हनः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः०' घ् प्रथमैकवचनान्तम् । 'हसे पः०' 'हवे०' 'उ ओ' । ने सप्तम्येकवचनान्तम् । 'अ इ ए' सिद्धम् । हन्तेरिति । हन् इत्यस्य धातोः सम्बन्धिनो हकारस्य घत्वं भवति नकारे परे । तथा ञिति णिति च परे । अतो हस्य घः 'स्वरहीनं०' । हस्य घत्वे कृते घ्नसंयोगे 'रषृभ्यो णो०' इति सूत्रनिषेधार्थः । 'हन्तेकारपूर्वस्यैव सति णत्वनिमित्ते णत्वं न तु व्यञ्जनपूर्वस्य' इति वचनात् घकारनकार-

( क ) हन्तेरत्पूर्वस्य ॥ हन्तेकारपूर्वस्यैव नस्य णत्वं स्यान्नान्यस्य इत्यधिकः पाठः ।

-योः संयोगे जाते सति 'ऋर्नो णो०' इति नस्य णप्रतिषेधः। 'स्वरहीनं०' ॥ रसे परे—'नाम्नो नो०' ॥ ङौ तु—'वेङ्योः' ब्रह्मण्नि ब्रह्मह्णि। धौ दण्डिन्वत् ॥ एवं पूषन् अर्यमन् शब्दौ। तत्र शसादौ—'अल्लोपः स्वरे' इत्यलोपे कृते। 'ऋर्नो णो०' ॥ हसादौ—'नाम्नो नो०' ॥ शेषं कण्ठ्यम् ॥ पूषा पूषणौ पूषणः। पूषणं पूषणौ पूष्णः। पूष्णा पूषभ्यां पूषभिरित्यादि। ङौ तु 'वेङ्योः' पूष्णि पूषणि ॥ एवम्। अर्यमा अर्यमणौ अर्यमणः। अर्यमणम् अर्यमणौ अर्यम्णः। अर्यम्णा अर्यमभ्याम्। अर्यमभिः। अर्यमसु इत्यादि ॥ २१ ॥

( प्र० ) हन इति। हनः घ् ने इति छेदः। हनो घत् इत्यतो हन् इत्यनुवर्तनीयं ततश्च हन्तेर्नकारे परे हन्तेर्हस्य घत्वं भवतीत्यर्थः। अन्यथा वृत्रहन्नमस्ते जुहावेत्यत्रापि प्रसङ्गात्। तत्र हकाराव्यवहितपरत्वसम्भवान्नस्य हाव्यवधानपरत्वम्। ञ्णित्परत्वं तु धातोरिति विवेकः। एवं च वृत्रहणावित्यादावप्रसङ्गः। घसंयोगे इति क्वचिदेकपद्यं णत्वहेतुरिति क्वचिच्छब्दाद्धन्तेरकारपूर्वस्यैवेत्यर्थाद् घसंयोगे च तदभावाण्णत्वं नेत्यर्थः ॥२१॥

संख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः। पञ्चन् जस् इति स्थिते ॥ **जश्शसोर्लुक्** ॥ षकारनकारान्तसंख्यायाः परयोजस्शसोर्लुग्भवति ॥ २२ ॥

( च० ) संख्यावाचकाः शब्दाः पञ्चन्प्रभृतयो बहुवचनान्ताः त्रिषु लिङ्गेषु सदृशरूपाः। जसि शसि च सूत्रम्—'जस्शसोर्लुक्' ॥ जस् च श च जश्शसौ तयोर्जश्शसोः षष्ठीद्विवचनान्तम्। 'स्वरहीनं०' 'स्रोर्विं०'। लुक् प्रथमैकवचनान्तम् 'हसेपः०' 'नामिनोरः' ॥ वृत्तिः कण्ठ्या। अनेन जस् शस् इत्येतयोर्लुक् ॥ २२ ॥

( प्र० ) जश्शसोरिति। ष्ण इत्यनुवर्तते। तत्र च उपदेशकाल एव ष्णान्तत्वविवक्षणाच्छतानीत्यादौ लोपाप्रसङ्गः ॥ २२ ॥

**लुकि न तन्निमित्तम्** ॥ लुकि सति तन्निमित्तं कार्यं न स्यात् ॥२३॥

(च०)'प्रत्ययलोपे प्रत्ययलक्षणं न याति' इति न्यायात् 'नोपधायाः' इति दीर्घत्वप्राप्तौ निषेधहेतुमाह—'लुकि न तन्निमित्तम्' इति। लुकि कृते सति तन्निमित्तं कार्यं न भवति स एव निमित्तं कारणं यस्य तत्तन्निमित्तं; यथा जसि 'नोपधायाः' इति सूत्रेण दीर्घत्वप्राप्तावपि न दीर्घता। तर्हि दीर्घं विधाय लुक् कार्यः। इत्यत्रोच्यते—कृताकृतप्रसङ्गी यो विधिः स नित्यः इति भावरूपं कार्यं न भवति, अभावरूपं तु भवत्येव ॥ २३ ॥

( प्र० ) प्रत्ययलोपे प्रत्ययलक्षणमिति जश्शसोर्लोपेऽपि तन्निमित्तोपधाया दीर्घाकारलोपादिप्राप्तावाह। लुकीति। लुक्शब्देन वर्णादर्शने सति तन्निमित्तमङ्गकार्यं न भवतीत्यर्थः ॥ २३ ॥

तेन 'नोपधायाः' इति दीर्घत्वं न। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः ॥ **ष्णः** ॥ षकारनकारान्तसंख्यायाः परस्यामो नुडागमो भवति ॥ नोपधायाः। नाम्नो नो लोपशधौ। पञ्चानाम्। पञ्चसु ॥ एवं सप्तन्नवन्दशन्प्रभृतयः ॥ २४ ॥

( च० ) तेन 'नाम्नो नो लोपशधौ' इति भवत्येव ॥ तृतीयाचतुर्थीपञ्चमीबहुवचने 'नाम्नो नो लो०'। आमि सूत्रम्—'ष्णः'। ष् च न् ष्ण् तस्मात् ष्णः पञ्चम्येकवचनान्तम्। 'स्वरहीनं०'। षकारान्तनकारान्तसंख्यायाः परो य आम् तस्य नुडागमो भवति। अनेन नु। 'नोपधायाः' इति दीर्घः। 'नाम्नो नो०' ॥ छपि—'नाम्नो नो०' एवं सप्तन् नवन् दशन् एकादशन् प्रभृतयोऽपि साध्याः ॥ २४ ॥

( प्र० ) ष्णः। ष् न् च ष्ण तस्मात्। अत्रापि संख्यायाः प्राधान्ये परमपञ्चानामित्यादौ भवत्येव। गौणत्वे तु प्रियपञ्चानामित्यादौ न ॥ २४ ॥

**अष्टन्शब्दस्य भेदः ॥ अष्टनो डौ वा ॥ अष्टन्शब्दात्परयोर्जस्शसोर्वा डौ भवति। डित्त्वाट्टिलोपः। अष्टौ अष्टौ अष्ट अष्ट ॥ २५ ॥**

( च० ) अष्टन्शब्दस्य भेदः। सूत्रम्—'अष्टनो डौ वा' ॥ अष्टन् इति अष्टन्शब्दस्य षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'सोर्वि०'। डौ प्रथमैकवचनान्तम्। सांकेतिकम्। 'इ ओ' ॥ वा प्रथमैकवचनान्तम्। 'अव्यया०' ॥ सिद्धमिदं सूत्रम्। अष्टन्शब्दात्परयोर्जस्शसोर्वा विकल्पेन डौ भवति। गुरुत्वात्सर्वस्य जसो डौ। जसि शसि च रूपद्वयम्। अनेन एकत्र डौ। औ। डित्त्वाट्टिलोपः। 'स्वरहीनं०' अन्यत्र 'जस्शसोर्लुक्' 'नाम्नो नो०' ॥ तृतीयादिबहुत्वेऽपि रूपद्वयम् ॥ २५ ॥

( प्र० ) अष्टन इति। अत्र आकारप्रश्लेषात् वासु इत्यनेन आत्वपक्षे एव डौविधिः। अत्रापि सङ्ख्याया इत्यनुवृत्तेर्गौणत्वेनात्वम्। न वा डौ। वस्तुतो वासु इत्यत्र आ इति तृतीयैकवचनेन सु इति सप्तमीबहुवचनेन च प्रत्याहारग्रहणादत्रात्वाभाव एव। यद्यत्रात्वं स्याद्डाविति डित्करणं व्यर्थं स्यात् गौणत्वेऽप्यात्वं जश्शसोरौत्वं वेत्येके इत्यस्य चानादर एव। अष्टानामित्यत्र नुटि सत्यात्वम्। आत्वे वा उपदेशकाले नकारान्तत्वान्नुट्। आत्वाभावेऽपि नुटि उपधादीर्घे च रसादिपरत्वेन नलोप इति समानरूपत्वादेकमेव रूपम् ॥२५॥

**वासु ॥ वा आ आसु। अष्टन्शब्दस्य आसु विभक्तिषु परासु वा टेरात्वं भवति। अष्टभिः–अष्टाभिः। अष्टभ्यः-अष्टाभ्यः। अष्टभ्यः-अष्टाभ्यः। अष्टानाम्। अष्टसु-अष्टासु(क) ॥ २६ ॥**

( च० ) सूत्रम्—'वासु' ॥ वा प्रथमैकवचनान्तम्। 'अव्यया०'। आ प्रथमैकवचनम्। सांकेतिकम्। आसु इति इदंशब्दस्य सप्तमीबहुवचनान्तम्। 'त्यदादेष्टेरः स्यादौ' 'स्म्यः' 'आवतः स्त्रियाम्' 'सवर्णे दीर्घः०'। अष्टन इति अष्टन्शब्दस्य आसु तृतीयादिषु

(क) गौणत्वेऽपि आत्वं जश्शसोरौत्वं वेत्येके। प्रियाष्टा प्रियाष्टाः प्रियाष्टानौ-प्रियाष्टौ प्रियाष्टानः प्रियाष्टौ-प्रियाष्टाः। प्रियाष्टानं-प्रियाष्टाम् प्रियाष्टानौ-प्रियाष्टौ प्रियाष्टनः प्रियाष्टौ प्रियाष्टान्। प्रियाष्टना-प्रियाष्टा प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभिः प्रियाष्टभिः। प्रियाष्टने प्रियाष्टे प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभ्यः-प्रियाष्टभ्यः। प्रियाष्टनः-प्रियाष्टाः प्रियाष्टाभ्यां प्रियाष्टभ्याम् प्रियाष्टाभ्यः-प्रियाष्टभ्यः। प्रियाष्टनः-प्रियाष्टाः प्रियाष्टनोः प्रियाष्टौः प्रियाष्टौ-प्रियाष्टनाम्। प्रियाष्टनि-प्रियाष्टनि-प्रियाष्टे प्रियाष्टनोः-प्रियाष्टौः प्रियाष्टासु-प्रियाष्टसु। हेप्रियाष्टन् हेप्रियाष्टाः हेप्रियाष्टानौ हेप्रियाष्टौ हेप्रियाष्टानः हेप्रियाष्टौ हेप्रियाष्टाः ॥ जसि त्रीण्येव रूपाणि शसि त्रीण्येव पुनः। क्वापि त्रीणि रूपाणि शेषे द्वे द्वे प्रियाष्टनः ॥ इत्यधिकः पाठः।

पराद्ध सतीषु वा आत्वमाकारो भवति । अनेन तृतीयाचतुर्थीपञ्चमीबहुवचने वा आकारः । अन्यत्रापि 'नाम्नो नो०' । आमि । एकत्र आकारः । उभयत्रापि 'ष्णः' इति नुट् । द्वितीयरूपे । 'नोपधायाः' इति दीर्घः । 'नाम्नो नो०' पक्षद्वये सदृशं रूपम् ॥ सुपि—एकत्र आकारे कृते अन्यत्रापि 'नाम्नो नो०' ॥ २६ ॥

मकारान्त इदम्शब्दः ॥ इदमोऽयं पुंसि ॥ इदमः अयम् पुंसि । इदम्शब्दस्य पुंसि विषये अयमादेशो भवति सिसाहितस्य(क) ॥ अयम् ॥२७।

( च० ) मकारान्तानाह–मकारान्त इदम्शब्दः । सौ सूत्रम्—'इदमोऽयं पुंसि' ॥ इदमः षष्ठ्येकवचनम् । 'स्वरहीनं०' । अयं प्रथमैकवचनान्तम् । 'हसेपः०' मोऽनुस्वारः' 'अतोऽत्युः' 'उओ' 'एदोतोतः । पुंसि इति पुंसशब्दस्य सप्तम्येकवचनान्तम् ।' स्वरहीनं०' सिद्धम् । इदम्शब्दस्य पुंसि पुंलिङ्गे एव सौ प्रथमैकवचने परे, अयमित्यादेशो भवति । अनेन सौ परे अयम् । मान्तकरणसामर्थ्यादेव 'त्यदादेष्टेरः स्यादौ' इति न भवति । अन्यथा अयमित्येवावक्ष्यत । 'हसे पः से०' 'मोऽनुस्वारः' ॥ केचित्तु सिसहितस्यैव अयम् इत्यादेशमिच्छन्ति ॥ २७ ॥

द्विवचनादौ'त्यदादेष्टेः' इति सर्वत्राकारः । इद औ इति स्थिते ॥ दस्य मः ॥ त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे ॥ 'ओ औ औ' इमौ । सर्वादित्वात् 'जसी' इमे । त्यदादीनां घेरभावः ॥ इमम् इमौ इमान् ॥२८॥

(च०) द्विवचनादौ तु 'त्यदादेष्टेरः स्यादौ' इत्यकारे कृते सूत्रम्–'दस्य मः' षष्ठ्येकवचनान्तम् । 'डस्य' । मः प्रथमैकवचनान्तम् । 'सोर्वि०' ॥ त्यदादीनां दकारस्य अयुक्तस्य स्यादौ सर्वविभक्तौ परे मत्वं भवति । अनेन सर्वविभक्तिषु मकारः । प्रथमाद्विवचने 'ओ औ औ' ॥ प्रथमाबहुवचने—'जसी' 'अइए' ॥ द्वितीयैकवचने—'अम्शसोरस्य' 'मोऽनुस्वारः' ॥ द्वितीयाद्विवचने—'ओ औ औ' ॥ द्वितीयाबहुवचने—'अम्शसोरस्य' 'सो नः पुंसः' 'शसि' ॥ २८ ॥

अन टौसोः ॥ इदमोऽनादेशो भवति टौसोः परयोः कृत्स्नस्य ॥ 'टेन'अनेन ॥ २९ ॥

(च०) तृतीयैकवचने सूत्रम्—'अन टौसोः' अन प्रथमैकवचनान्तं सांकेतिकम् । टा च ओस् च टौसौ तयोः सप्तमीद्विवचनान्तम् । 'स्वरहीनं०' 'सोर्वि०' ॥ इदम्शब्दस्य टा तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने परे अन इत्यादेशो भवति । अनेन टावचने अन आदेशः । 'टेन' 'अ इ ए' अनेन ॥ २९ ॥

स्भ्यः ॥ स्भि अः । इदमः सकारे भकारे च परे अकारादेशो भवति कृत्स्नस्य ॥ 'आद्भि' इत्यात्वम् आभ्याम् ॥ ३० ॥

---

( क ) इदम इति । इदमः किम् । यः । पुंसीति किम् । इदम् । न चात्र लुकि न तन्निमित्तमित्येव भविष्यतीति चेत् सत्यम्, तस्य अनित्यत्वज्ञापनार्थम् । तेन हेतिषु इत्यादि सिद्धम् ।

(च०) द्वित्वे । सूत्रम्—'स्भ्यः' स् च भ् च स्भ् तस्मिन् स्भि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ अः प्रथमैकवचनान्तम् । 'ज्ञोर्वि०' पश्चात् 'इ यं स्वरे' 'स्वरहीनं०' ॥ इदम् शब्दस्य सकारे भकारे च परे अकारो भवति कृत्स्नस्य समग्रस्येत्यर्थः ॥ अनेन तृतीया-चतुर्थीपञ्चमीद्वित्वे इदमोऽकारः । 'अद्भि' इत्यात्वम् ॥ तृतीयाचतुर्थीपञ्चमीबहुवचने-'स्भ्यः' इत्यकारः ॥ ३० ॥

( प्र० ) इदम इति । अनेकवर्णत्वात्सर्वस्य मकारान्तत्वाद्धसेपः सेर्लोपः । हे अस-कौ ब्राह्मणीत्यादौ सम्बोधनसम्भवेऽपि प्रचुरप्रयोगाभावादभावोक्तिः । स्भ्यः । स्भिः अः त्यदादेष्टेरः स्यादावित्यकारे सिद्धेऽपि पुनर्विधानसामर्थ्यात्सर्वस्येत्येके । तदसत् । त्यदादेष्टे-रिति टेरकारविधानात् । अनेन चेदमः षष्ठीनिर्दिष्टत्वेनान्त्यस्येति वैयर्थ्याभावात् । अन्ये तु अः इत्यस्य विसर्गपरत्वेन गुरुत्वात्सर्वस्येत्याहुः । तदपि मन्दम् । गुरुशब्दस्यानेकाक्ष-रपरत्वप्रतिपादनात् । छशषराजादेः ष इत्यादौ ष इत्यस्यापि विसर्गपरत्वेन गुरुत्वापत्त्या सर्वादेशप्रसङ्गात् । प्रयोगे विसर्गाश्रवणाच्च । वस्तुतस्तु इदमोऽयं पुंसीत्यत इदम् इति विभक्तिविपरिणामेन प्रथमान्तमनुवर्तनीयम् । ततश्च निर्दिश्यमानस्यादेशा भवन्तीति स-र्वस्यैव स्यात् । षष्ठीनिर्दिष्टस्येत्यस्य वक्तव्यत्वेन प्रयोगानुसारित्वादत्राप्रवृत्तिर्वा ॥ ३० ।

**भिस्भिस्** ॥ इदमदसोर्भिस् भिसेव भवति ॥ तेन न भकारस्या-कारः । 'ए स्भि बहुत्वे' एभिः । इदम् ङे इति स्थिते 'त्यदादेष्टेरः स्यादौ' 'सर्वादेः स्मट्' 'स्भ्यः' अस्मै । एभ्यः । आभ्याम् । 'ङसिरत्' 'अतः' अ-स्मात् । आभ्याम् । एभ्यः । 'ङस्स्य' अस्य । 'अन टौसोः' 'ओसि' 'ए अय्' अनयोः । 'सुडामः' 'स्भ्यः' 'एस्भि बहुत्वे' 'किलात्' एषाम् । 'ङि स्मिन्' अस्मिन् अनयोः एषु ॥ त्यदादीनां सम्बोधनाभावः ॥ **इदमोऽन्वा-देशे द्वितीयाटौस्स्वेनादेशो वक्तव्यः** ॥ उक्तस्य पुनर्भाषणमन्वा-देशः(क) ॥ एनं एनौ एनान् । एनेन एनयोः ॥ **प्रशाम्शब्दस्य भेदः** ॥ **मो नो धातोः** ॥ धातोर्मकारस्य नकारादेशो भवति रसे पदान्ते च । प्रशान् प्रशामौ प्रशामः । हेप्रशान् हेप्रशामौ हेप्रशामः । प्रशामम् प्रशामौ प्रशामः । प्रशामा प्रशान्भ्याम् प्रशान्भिः ॥ ॥ ३१-३२ ॥

---

( क ) किञ्चित् कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । उक्तं च;—

"किञ्चिद्विधातुमुक्तस्य विधानान्तरहेतवे ।
शब्दस्य पुनरुक्तिश्चेत् अन्वादेशं विदुर्बुधाः ॥"

यथानेन व्याकरणमधीतम् । एनं छन्दोऽध्यापय

"ईषदर्थे क्रियायोगेमर्यादाभिविधौ च यः । एतमातं ङितं विद्यात्" ।

इत्यत्र तु ईषदर्थादयो न विधीयन्ते । किन्त्वनूद्यन्ते इति नाऽनेनादेशः । एवं;—

"नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय"

इत्यत्रापि भीरुत्वस्यानुवाद्यत्वं बोध्यम् ।

( च० ) ततो भिसि सूत्रम्—'भिस्भिस्' । भिस् प्रथमैकवचनान्तम् । 'हसेपः०' । भिस प्रथमकवचनम् । 'हसेपः०' ॥ इदम्-अदस्शब्दसम्बन्धी यो भिस् स भिस् एव भवति । तत्र भिसो भिस्करणं 'स्भ्यः' इति सूत्रेण अकारनिषेधार्थम् । तदेवाह—न मकारस्याकार इति ॥ 'ए स्मि बहुत्वे' ॥ परं कप्रत्ययसहितयोर्न । तेन इमकैः अमुकैः । एवं चतुर्थीपञ्चमीबहुत्वेऽपि । चतुर्थ्येकवचने 'सर्वादेः स्मट्' 'स्भ्यः' 'ए ऐ ऐ' । पञ्चम्येकवचने । 'ङसिरत्' 'अतः' 'स्भ्यः' 'सवर्णे दीर्घः०' ॥ षष्ठ्येकवचने—'ङस्स्य' 'स्भ्यः' । षष्ठीसप्तम्योर्द्विवचने । 'अन टौसोः' 'ओसि' 'ए अय्' 'स्वरहीनं०' ॥ आमि 'सुडामः' 'स्भ्यः' 'ए स्भि बहुत्वे' 'किलात्षः सः०' ॥ 'स्वरहीनं०' ॥ सप्तम्येकवचने । 'ङि स्मिन्' 'स्भ्यः' 'एस्भि बहुत्वे' 'किलात्षः सः०' । त्यदादित्वात्सम्बोधनाभावः ॥ 'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षं विजानीयात्' ३१–३२

(प्र०) भिस् भिसो भिस्विधानं कार्यान्तरव्यावृत्त्यर्थमित्यभिप्रेत्योक्तं न मकारस्याकार' इति । इदमदसोरककारयोरेव । अकचि तु इमकैः । अमुकैरित्यादि ॥ ३१ ॥

किम् शब्दस्य भेदः । किंशब्दस्य 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् ॥ कः कौ के । कम् कौ कान् । केन काभ्याम् कैः । कस्मै काभ्याम् केभ्यः । कस्मात् काभ्याम् केभ्यः । कस्य कयोः केषाम् । कस्मिन् कयोः केषु ॥

( च० ) किम्शब्दस्य 'त्यदादेष्टेरः स्यादौ' इत्यादिना अकारे कृते सर्वशब्दवत्प्रक्रिया ॥ त्यदादित्वाद्धेरभावः-सम्बोधनाभावः ॥ इत्यादयो मान्ताः शब्दा ज्ञेयाः ॥ झढवभान्ता अप्रसिद्धाः ॥

धकारान्तस्तत्त्वबुध् शब्दः । तस्य रसे पदान्ते च । 'आदिजबानां झभान्तस्य झभाः स्ध्वोः' 'हसेपः सेर्लोपः' 'वावसाने' तत्त्वभुत्-तत्त्वभुद् तत्त्वबुधौ तत्त्वबुधः । हेतत्त्वभुत्-हेतत्त्वभुद् हेतत्त्वबुधौ हेतत्त्वबुधः । तत्त्वबुधम् तत्त्वबुधौ तत्त्वबुधः । तत्त्वबुधा तत्त्वभुद्भ्याम् तत्त्वभुद्भिः । इत्यादि ॥

( च० ) धकारान्तस्तत्त्वबुध् शब्दः । तस्य रसे पदान्ते च 'आदिजबानां०' इत्यनेन बकारस्य भकारः । सौ धौ च सिलोपे कृते 'वावसाने' इति धकारस्य दकारतकारौ । स्वरादौ । 'स्वरहीनं०' । भकारादौ 'झबे जबाः' । 'स्वरहीनं०' । छपि—'खसे चपा झसानाम्' धस्य तः 'स्वरहीनं०' । एवं मर्मविध् ॥

जकारान्तः सम्राजशब्दः ॥ छशषराजादेः षः ॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य च राजयजसृजमृजभ्राजादेश्च षकारो भवति धातोर्झसे परे, नाम्नश्च रसे पदान्ते च ॥ षस्य षत्वं डत्वनिषेधार्थम् । तेन आख्यातादौ तु डत्वं नास्ति–द्रेष्टीत्यादौ ॥ ३३ ॥ षो डः ॥ षः डः । षकारस्य डत्वं

भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च। वावसाने ॥२४॥ मो राजि समः क्वौ ॥ क्विबन्ते राजतौ परे समो मस्य म एव स्यात् ॥ तेनानुस्वाराभावः। सम्राट्-सम्राड्। सम्राजौ। सम्राजः। हेसम्राट्-हेसम्राड्-हेसम्राजौ हेसम्राजः। सम्राजम्। सम्राजौ। सम्राजः। सम्राजा। सम्राड्भ्याम्। सम्राड्भिः एवं विराजादयः(क) ॥ २६ ॥

( च० ) अथ जान्ताः। तत्र जकारान्तः सम्राज्शब्दः। तस्य स्वरादौ 'स्वरहीनं०'। रसे पदान्ते च विशेषः। सूत्रम्—'छशषराजादेः षः' ॥ छश्च शश्च षश्च राजादिश्च छशषराजादिस्तस्य। षष्ठ्येकवचनान्तम्। 'ङिति' 'ङस्य' 'स्त्रोर्वि०'। षः ॥ प्रथमैकवचनान्तम्। 'स्त्रोर्वि०' सिद्धम्। छकारान्तस्य तत्त्वप्राच्छादेः, शकारान्तस्य विशादेः, षकारान्तस्य द्विष् षष् इत्यादेः तथा राज्यज्तज्सृज्भ्राजादेश्च षकारो भवति ॥ 'षष्ठीनिर्दिष्टस्य' इत्यन्त्यस्य। धातोर्झसे परे नाम्नश्च रसे पदान्ते च। उभयोरादिशब्दात् व्रश्चभ्रस्जपरिव्राजां ग्रहणं षकारस्य षत्वकारणं डत्वनिषेधार्थं तदपि द्वेष्टि इत्यादावेव, न तु सर्वत्र। यथा द्विषधातोस्त्यादौ द्वेष्टीत्यादिरूपम् ॥ यद्वा छशषेति ग्रहणं व्यर्थमिति केचित्। प्रयोगदर्शनाभावात्। यत्तु षस्य षत्वं डत्वनिषेधार्थमिति तदपि व्यर्थम्। द्विट् द्विषौ द्विषः अद्वेट् इत्यादौ षस्य षत्वेऽपि डत्वस्य दर्शनात्। तथा द्वेष्टीत्यादावपि षस्य षत्वं न, किं केवलं 'ष्टुभिः ष्टुः'। अनेन रसे पदान्ते च जस्य षः। ततः सूत्रम्—'षो डः' षः षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्त्रोर्वि०'। डः प्रथमैकवचनान्तम्। 'स्त्रोर्वि०' सिद्धम्। षकारस्य डकारो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च ॥ केचित्तु 'वावसाने' इत्यनेनैव षकारस्य 'ऋटुरषा मूर्धन्याः' इति स्थानसवर्णौ मूर्धन्यौ टकारडकारौ स्यातामिति तथा भ्यां भिस् इत्यादावपि 'झबे जबाः' अनेन डत्वं स्यात्। अतः 'षो डः' इति सूत्रं व्यर्थमिति वदन्ति। तच्चिन्त्यम्। अनेन सौ धौ च 'हसेपः से०' इति सिलोपे कृते षस्य डः। 'वावसाने' इति डस्य वा टः। समो मस्य राट्शब्दे परेऽनुस्वाराभावो वक्तव्य इति केचित्। सम्राट्-सम्राड्। भकारादौ षस्य डत्वे कृते 'स्वरहीनं०' ॥ सुपि—डत्वे कृते 'खसे चपा झसानाम्' 'स्वरहीनं०' सम्राट्सु' ॥ क्वचित् हसादौ विभक्तौ पदान्तताश्रयणीया इति 'टोरन्त्यात्' इति ष्टुत्वाभावः। शेषं कण्ठ्यम्। एवं विराजादयः ॥ इति जान्ताः।

---

( क ) युजेरसमासे ॥ युजेः सुटि नुम् स्यादसमासे। क्विन्प्रत्ययस्य कुः ॥ क्विन्प्रत्ययस्य धातोः कवर्गान्तादेशः स्यादसमासे झलि पदान्ते च। प्रत्ययशब्दे प्रत्ययान्तस्य ग्रहणम्। युङ्। अनुस्वारपरसवर्णौ युञ्जौ युञ्जः। युञ्जम् युञ्जौ युजः। युजा युग्भ्याम् युग्भिः। युजे युग्भ्याम् युग्भ्यः। 'चोः कुः' 'खसे चपा०' 'क्विलात्' 'कषसंयोगे क्षः' युक्षु। हेयुङ् हेयुञ्जौ हेयुञ्जः। इत्यादि ॥ असमासे किम्। अश्वयुक् अश्वयुग् अश्वयुजौ अश्वयुजः। अश्वयुजम् अश्वयुजौ अश्वयुजः। अश्वयुजा अश्वयुग्भ्याम् अश्वयुग्भिः इत्यादि ॥ सामाध्यर्थस्य युजेर्न नुम्। युक् समाधिमानित्यर्थः ॥ दकारान्तो द्विपाद्शब्दः। द्विपात् द्विपाद् द्विपादौ द्विपादः। द्विपादम् द्विपादौ ॥ पादः पत् ॥ पादशब्दस्य पदादेशः स्याच्छसादौ स्वरे परे ङिते ईपि ईकारे च ॥ द्विपदः। द्विपदा द्विपाद्भ्याम् द्विपाद्भिः। द्विपदे द्विपाद्भ्याम् द्विपाद्भ्यः। इत्यादि। हेद्विपात्-हेद्विपाद् हेद्विपादौ हेद्विपादः ॥ इत्यधिकः पाठः।

एवं परिव्राट् परिव्राजौ परिव्राजः । [ तरुवृट् तरुवृश्चौ तरुवृश्चः । ] यवभृट् यवभृजौ यव-भृजः । इत्यादि ॥ अन्येपि भूभुक्-बलिभुक्-हुतभुक्-वणिक्-भिषक्-अश्वयुक्-प्रभृतयो जान्ताः । तत्र 'चोः कुः' ॥ एवम् ऋत्विक् । 'दिशाम्' इति कत्वम् । ऋतुषु ऋतुं वा यजति-ऋत्विक् ऋत्विजौ ऋत्विजः ॥ ञान्ता अप्रसिद्धाः ॥ ३३-३४-३९ ॥

( प्र० ) छशषेति । आदिशब्दात् भ्रस्जसृज्मृज्यज्भ्राजादीनां ग्रहणम् । अत्र केचित् । छशषराजादेरित्यत्र षग्रहणं व्यर्थम् । आख्याताद्दौ डत्वनिषेधार्थमित्युक्तम् । अट्टेट् इत्यादौ डत्वदर्शनात् । न च द्वेष्टीत्यादौ डत्वाभावार्थं डत्वविधायकस्य षो ड इत्य-स्यापि वैयर्थ्यात् । षट् षड्भ्यां षड्भ्य इत्यादौ वावसाने, झबे जबाः, खसे चपा झसा-नामित्यादिभिः सिद्धेः । यद्यपि यथासङ्ख्यत्वं नास्ति तथापि ऋटुरषाणां मूर्द्धेत्यादिस्या-नादिाम्यात्स्थानेऽन्तरतम इति न्यायेन षस्थाने डविधेः । न च षण्णामित्यत्र षकारस्य डविध्यसम्भवात् ढ्ण इत्यस्य निर्विषयत्वप्रसङ्गात्षोड इत्यस्य सार्थकत्वमिति वाच्यम् । ढ्ण इत्यत्र षकारस्यैव वावसान इति कृतडकारस्य निर्देशात् । सङ्ख्यासम्बन्धिनः षकार-स्यैव णत्वविधानात् धातोर्झसे इति वात्यन्तमसङ्गतमेव । इष्टे द्वेष्टीत्यादौ झसे परेऽदर्श-नात् । अत एव पाणिनिनाऽपि छशां ष इत्येवोक्तमित्याहुः तदसत् । सवर्णस्ययथासङ्ख्य-त्वाभ्यामन्त्रादेर्भविधानात् । तत्र झसानामादेशिनां बहुत्वेन जबादीनामादेशानां च पञ्च-त्वात्पञ्चकपञ्चकापेक्षया यथासङ्ख्यत्वम् । तत्र च शषसानां त्रिकत्वेन यथासङ्ख्यत्वाभावः । वर्ग्यो वर्ग्येण सवर्ण इति सवर्णत्वविधानादेषां सवर्णत्वाभावः । प्रत्युत रेफोष्मणां न सवर्ण इति शषसहानामूष्मत्वात्सवर्णत्वप्रतिषेधः । स्थानेऽन्तरतम इत्याश्रयणे वर्ग्यो-वर्ग्येणेति सवर्णत्वाद्धकारस्थाने दकार इत्यादिवैयर्थ्यप्रसङ्गः । द्वेष्टीत्यादौ खसे चपा झसाना-मिति च प्रसङ्गाच्च । ढ्ण इत्यत्र च षकारस्य नत्वे डणविधानप्रसङ्गात् । अवसाननिमित्ता-भावेन नैमित्तिकस्य जबस्य निवृत्तत्वात् । मृड्ढीत्यादिसिद्ध्यर्थं चावश्यं धातोर्झसे इति वक्तव्यं डत्वनिषेधार्थमिति तु क्वचिदेवेति दिक् । आख्याताद्दावित्यादिशब्दात् शुष्क इत्यादावपि न । सम्राडित्यत्र क्वचिदपदान्तताश्रयणीयेति टोरन्त्यादिति ष्टुत्व-निषेधः ॥ ३३-३४-३९ ॥

दकारान्तास्त्यद्तद्यद्एतद्शब्दाः ॥ एतेषां 'त्यदादेष्टेः' इत्यकारे कृते सर्वशब्दवद्रूपनयः ।। स्तः ।। स् तः । त्यदादेस्तकारस्य सत्वं भवति सौ परे(क) ॥ स्यः त्यौ त्ये । त्यम् त्यौ त्यान् । त्येन त्याभ्याम् त्यैः । त्यस्मै त्या-भ्याम् त्येभ्यः । त्यस्मात् त्याभ्याम् त्येभ्यः । त्यस्य त्ययोः त्येषाम् । त्य-

( क ) स्त इति । चन्द्रिकायां 'त' इति सूत्रं धृतम् । सुबोधिनीकृता तत्त्वदीपिकाकृता च तदेवाङ्गी-कृत्य व्याख्यातम् । तथा च "त्यादादेष्टे"रित्यतस्त्यदादेरिति "सौ स" इत्यत स इति सौ इति च पदद्वय-मनुवर्त्तत इत्याशयेनाह;—त्यदादेरित्यादि । त्यदादेः किम् । तातः । त इति किम् । यः । सौ इति किम् । तौ । ननुत्वमित्यत्र सत्वात्वे कुतो नेति चेत्, सत्यम्, तकारोच्चारणसामर्थ्यात् । अथातित्वमित्यत्र गौण-त्वे सिपरत्वाभावात् तस्य चरितार्थत्वमिति चेदोम् । साविति वक्तव्ये सिनेति गुरुकरणं वस्त्वोरिव विभागसं-मोहार्थम् । अत एव मितावागमो न ।

स्मिन् त्ययोः त्येषु ॥ सः तौ ते। तम् तौ तान् । तेन ताभ्याम् तैः । तस्मै इत्यादि ॥ यः यौ ये । यम् यौ यान् । येन याभ्यां यैः । यस्मै । इत्यादि । एषः एतौ एते ॥ ३६ ॥

( च० ) दकारान्तास्त्यदादयस्तेषां 'त्यदादेष्टेरः स्यादौ' इत्यकारे कृते सर्वत्र स शब्दवत् । सौ तु विशेषः । सूत्रम्—'स्तः' स् प्रथमैकवचनान्तम् । 'हसेपः' । तः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ त्यदादेस्तकारेति वृत्तिः सुगमा । अनेन तस्य सः । स्यः त्यौ त्ये । शेषं सर्ववत् । न वरं ॥ टेरभावः ॥ एवं तद्यद्शब्दौ । एतद्शब्दस्य सर्वत्र टेरत्वे कृते सौ च 'स्तः' इति तस्य सत्वे च कृते 'क्विबलात्षः सः०' 'स्रोर्विं०' । एषः एतौ एते ॥ ३६ ॥

( प्र० ) स्त इति । सौ स इत्यतः स इत्यनुवर्तमानेऽपि पुनः सग्रहणसामर्थ्यात् आपि परेऽपि सा इत्यत्र सत्वं क्वचिदित्येव । सा इत्यत्र सत्वं च येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति न्यायात् सादेशानन्तरं चाप्विधिः ॥ ३६ ॥

**एतदोऽन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः** ॥ उक्तस्य पुनर्भाषणमन्वादेशः । एतं एनम् एतौ–एनौ एतान्–एनान् । एतेन–एनेन एताभ्याम् एतैः । एतस्मै एताभ्याम् एतेभ्यः । एतस्मात् एताभ्याम् एतेभ्यः । एतस्य एतयोः–एनयोः एतेषाम । एतस्मिन् एतयोः–एनयोः एतेषु ॥ एतेन व्याकरणमधीतमेनं छन्दोऽध्यापय ॥

( च० ) द्वितीयायां टौसोश्च विशेषः । एतद् इति । एतद्शब्दस्य ॥ अन्वादेशे सति । उक्तस्य पुनः कथनमन्वादेश उच्यते । यथा एष राजा याति, एनं पश्येत्यन्वादेशः । तस्मिंश्च वक्ष्यमाणे द्वितीयाटौस्सु द्वितीयायां वचनत्रये टा इति तृतीयैकवचने ओसि षष्ठीसप्तमीद्विवचने वा विकल्पेन एनादेशः तकारस्य वा नकार इत्यर्थः । अनेनोक्तवर्ज वा एनादेशः । एतम् । एनम् एतौ एनौ एतान् एनान् । एतेन एनेन एतयोः एनयोः शेषं सुकरम् ॥ इति दान्ताः ॥ अन्येऽपि बलभिद्दिविषद्सर्वविद्वेदविद्सुहृद्प्रभृतयः ॥ वक्षकान्ता अप्रसिद्धाः ॥

( प्र० ) एतद इति । समनन्तरस्येदमोऽप्युपलक्षणात्तस्यापि किंचित्क्रियाविशिष्टत्वेनोक्तस्य पुनस्तेनान्येन वा क्रियान्तरविशिष्टत्वेनोक्तिरन्वादेश इत्यर्थः । अत एव "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्यात्" इत्यादौ स्वरूपेणाभिहितस्याप्यतः क्रियाविशिष्टत्वेनोक्त्यभावादन्वादेशत्वाभावः । न 'सके द्वितीयैकवचने त्यादेरित्यत्र दत्तु इति योगविभागादमः दत्तुआदेशे एनदित्यादिसिद्धिः । इमं छात्रं छन्दोऽध्यापय । अतो एनं व्याकरणमध्यापय । अनेन रात्रिरधीता । अत एनेनाहन्यप्यधीतम् । अनयोः शोभनं कुलमथो एनयोः प्रभूतं स्वमित्याद्यूह्यम् । एवमेतदोऽपि वावसाने नकारदकाराविति सवर्णत्वादित्यर्थः । यथासङ्ख्येन तु यकारः प्राप्नुयात् ॥

छकारान्तस्तत्त्वप्राछ्शब्दः 'छशषराजादेः षः' 'वावसाने' तत्त्वप्राड्-तत्त्वप्राड् तत्त्वप्राछौ तत्त्वप्राछः । तत्त्वप्राछम् तत्त्वप्राछौ तत्त्वप्राछः । तत्त्वप्राछा । 'छशषराजादेः षः' 'षो डः' तत्त्वप्राड्भ्याम् । तत्त्वप्राड्भिः । तत्त्वप्राछे तत्त्वप्राड्भ्याम् । तत्त्वप्राड्भ्यः । तत्त्वप्राछः तत्त्वप्राड्भ्याम् तत्त्वप्राड्भ्यः । तत्त्वप्राछः तत्त्वप्राच्छोः तत्त्वप्राछाम् । तत्त्वप्राछि तत्त्वप्राछोः तत्त्वप्राट्सु ॥

( च० ) छकारान्तस्तत्त्वप्राछ्शब्दः व्याकरणान्तरेषु 'च्छ्वोः शूडनुनासिके च' इति च्छस्य शत्वं विधाय शकारान्तस्तत्त्वप्राश् शब्द इत्युक्तमस्ति । तस्य रसे पदान्ते च संयोगान्तस्य लोपः इत्येकस्य छकारस्य लोपं विधाय ततः 'छशषराजादेः षः' इति षत्वे कृते । 'षो डः' 'वावसाने' सम्राज्वत् ॥ शेषं सुकरम् । छान्तोऽयम् ॥ ठान्ता अप्रसिद्धाः ॥

थकारान्तोऽग्निमथ्शब्दः । 'वावसाने' अग्निमत्-अग्निमद् अग्निमथौ अग्निमथः । हेअग्निमत्-हेअग्निमद् हेअग्निमथौ हेअग्निमथः ॥ अग्निमथम् अग्निमथौ अग्निमथः । अग्निमथा अग्निमद्भ्याम् अग्निमद्भिः । इत्यादि ॥

( च० ) थकारान्तोऽग्निमथ्शब्दस्तस्य सौ धौ च सिलोपे कृते 'वावसाने०' इति 'वर्ग्यो वर्ग्येण सवर्णः' इति वचनात् थकारस्य वा तकारदकारौ । भकारादौ 'झबे जबाः' थस्य दः । 'स्वरहीनं०' छपि—'खसे चपा झसानाम्' थस्य तः 'स्वरहीनं०' । स्वरादौ 'स्वरहीनं०' ॥ एवं थान्ताः ॥

चकारान्तः प्रत्यच्शब्दः ॥ अञ्चेः पञ्चसु नुमागमो वक्तव्यः ॥ चोः कुः ॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च यथासंख्येन ॥ 'स्तोः श्चुभिः श्चुः' 'संयोगान्तस्य लोपः' प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । हेप्रत्यङ् हेप्रत्यञ्चौ हेप्रत्यञ्चः । प्रत्यञ्चम् प्रत्यञ्चौ ॥ ३७ ॥

( च० ) चकारान्तः प्रत्यच्शब्दः । 'अञ्चु गतिपूजनयोः' । अञ्च् प्रतिपूर्वः क्विप्-प्रत्ययः [ 'प्रतिपूर्वस्यापूजार्थस्याञ्चतेर्नलोपो वक्तव्यः'(क) । यद्वा ] 'नो लोपः' । 'इ यं स्वरे' क्विपः सर्वापहारी लोपः । प्रत्यच् इति सिद्धम् । तस्य पञ्चसु विशेषः । 'अञ्चेः पञ्चसु नुमागमो वक्तव्यः' । अञ्चु गतिपूजनयोरित्यस्य धातोः स्यादिषु पञ्चसु नुमागमो वक्तव्यः । 'सिदन्त्यात्स्वरात्परो वक्तव्यः' । उकार उच्चारणार्थः । पञ्चसु वचनेषु त्य अग्रे न् । सौ धौ च प्रत्यन्च् इति स्थिते । 'स्तोः श्चुभिः श्चुः' इति नस्य ञः । 'हसेपः०' इति सेर्लोपः । 'संयोगान्तस्य' इति चलोपः ॥ सूत्रम्—'चोः कुः' चोरिति चुशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'टस्य' इत्यलोपः । 'ञोर्वि०' । कुः प्रथमैकवचनान्तम् । 'ञोर्वि०' ॥ चवर्गस्य वृत्तिर्गम्या । न वरम् । यथासंख्येनेति यथाक्रमेण चस्य कः, छस्य खः, जस्य गः, झस्य घः, ञस्य ङ इत्यर्थः । अनेन ञस्य ङः । प्रत्यङ् ॥ केचित्त्वत्र 'स्तोः श्चुभिः श्चुः' इति नाद्रियन्ते । यतः 'संयोगान्तस्य०' इति चलोपे 'निमित्ताभावे नैमि-

---

( क ) एतेन निर्यच् उदच् प्रभृतिषु न लोपाभावो बोध्यः ।

त्तिकस्याप्यभावः' इति पुनर्ङकारस्य नकार एव। ततः 'चोः कुः' इत्यपि न भवति किंतु प्रत्यन् इति सिद्ध्यति ॥ द्विवचनादौ तु नुमागमे कृते 'नश्चापदान्ते०' 'स्वरहीनं०'। प्रत्यञ्चौ प्रत्यञ्चः। यद्वा प्रत्यञ्चौ, प्रत्यञ्चः। प्रत्यञ्चं, प्रत्यञ्चौ ॥ ३७ ॥

( प्र० ) अञ्चेरिति। अञ्चुगतिपूजनयोरेतस्य नो लोप इत्यनेनैव गत्यर्थतायामेव नलोपे पश्चाच्च नुम्विधीयते। यद्यपि परत्वान्नश्चापदान्त इत्यनुस्वारः प्राप्नोति तथापि परस्येष्टत्वाचित्वात्पूर्वविप्रतिषेधेन अनुस्वारे वा परसवर्णत्वे विशेषाभावाच्च स्तोः श्चुभिः श्चुरित्याद्युक्तिः। यत्तु कृताकृतप्रसङ्गित्वेन नित्यत्वात्संयोगान्तलोपे श्चुत्वाभावात्कुत्वप्रसङ्गः। कृते वा श्चुत्वे संयोगान्तलोपे निमित्ताभावन्यायेन तदभावात्कुत्वमप्र कृतमेव। तस्माद्दिशामिति बहुवचनेन बहूनामुपादानादस्यापि तेनैव कुत्वमिति। तदसत्। सख्यावित्यादौ निमित्ताभावन्यायस्यानित्यत्वप्रतिपादनात्। वागित्यादावपि दिशामित्यनेनैव कुत्वसम्भवे चोः कुरित्यस्यानर्थक्यापाताच्च। असिद्धं बहिरङ्गमन्तरङ्ग इति बहिरङ्गसंयोगान्तलोपस्यान्तरङ्गे श्चुत्वे सिद्धत्वाच्च ॥ ३७ ॥

**अञ्चेरलोपो दीर्घश्च ॥** अञ्चतेरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च ॥ प्रतीचः। निमित्ताभावे नैमित्तिकस्याप्यभावः। प्रतीचा। 'चोः कुः' प्रत्यग्भ्याम् प्रत्यग्भिः। प्रतीचे प्रत्यग्भ्याम् प्रत्यग्भ्यः। प्रत्यक्षु(क) ॥ एवं तिर्यच् शब्दः। तिर्यङ् तिर्यञ्चौ तिर्यञ्चः। तिर्यञ्चम् तिर्यञ्चौ ॥ ३८ ॥

( च० ) शसादौ स्वरादौ तु विशेषः॥ सूत्रम्—'अञ्चेरलोपो दीर्घश्च' अञ्चेरिति अञ्चिशब्दस्य षष्ठ्येकवचनान्तम्। इति 'ङस्य' इत्यलोपः। 'स्रोर्वि०'। अस्य अकारस्य लुक्(S)मलुक्(S)प्रथमैकवचनान्तम्। 'हसेपः सेर्लोपः' 'नामिनो रः'। दीर्घः प्रथमैकवचनान्तम्। 'स्रोर्वि०'। च प्रथमैकवचनान्तम्। 'विसर्जनीय०' 'स्तोः श्चुभिः श्चुः'। अञ्चतेर्धातोः शसादौ स्वरे परे, तद्धितसंबन्धिनि प्रत्यये, ईपि प्रत्यये च, 'ईमौ' इति सूत्रेण कृते ईकारे च परे अकारस्य लोपो भवति। तद्धिते प्रतीचीनः प्रताच्यः। ईपि प्रतीची। इकारे प्रत्यये प्रतीची प्रत्यञ्चि। अत्र तु शसादौ स्वरे। अनेन प्रति अच् इति िवलोपे कृते अकारस्य लोपः। ति इत्यस्य दीर्घः। अकारादौ 'चोः कुः' इति ककारे कृते 'झबे जबाः' कस्य गः। 'स्वरहीनं०'। सुपि—'चोः कुः' 'किलात्षः सः०' 'कषसंयोगे क्षः'। शेषं कण्ठ्यम् ॥ पूजार्थस्य तु अञ्चतेर्नलोपो न। तेन प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः। प्रत्यञ्चम् प्रत्यञ्चौ प्रत्यञ्चः। प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः। प्रत्यञ्चे इत्यादि ॥ एवं प्राङ् प्राञ्चौ प्राञ्चः। प्राञ्चं प्राञ्चौ प्राञ्चः। प्राञ्चा प्राङ्भ्याम् प्राङ्भिः ॥ गत्यर्थस्य तु

---

( क ) नाञ्चेः पूजायाम् ॥ पूजार्थस्याञ्चतेरुपधाभूतस्य नस्य लोपो न स्यात्। अलुप्तनकारत्वान्न नुम्। 'क्विन्प्रत्ययस्य कुः' 'संयोगान्तस्य लोपः'। प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः। प्रत्यञ्चम् प्रत्यञ्चौ। नलोपाभावादकारस्यालोपः। प्रत्यञ्चः। प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यङ्भिः। इत्यादि॥ 'ङ्णोः कुक् टुक् वा शरि' प्रत्यङ्क्ष्प्रत्यङ्षु ॥ इत्यधिकपाठो मुलपुस्तके।

शसादौ प्राचः प्राचा ॥ तिर्यच् उदच् शब्दयोः पञ्चसु प्रत्यच्शब्दवत् ॥ ३८ ॥

(प्र०) अञ्चेरिति । ईपीति सूत्रानुवृत्तेरीपि ईकारे चेत्युक्तम् । चकाराच्चानुक्तसमुच्चयार्थात्तद्धिते इति । वेङ्योरित्यतो वानुवृत्तेस्तस्य च व्यवस्थया पूजार्थस्याञ्चतेः अचेरिति लुप्तनकारनिर्देशे तु पूजार्थस्य नलोपाभावादेव न । अकारस्य लुप्तत्वाच्चाकारस्य चावश्चेति नियमाद्दीर्घासम्भवाद्विधानसामर्थ्यात्पूर्वस्येति । स चाव्यवहित एव ग्राह्यः । ततश्च प्रतीच इत्यत्र प्र इत्यस्याकारस्याप्रसङ्गः । तद्धिते । प्रतीचीनः·प्रतीच्यः । ईपि । प्रतीची दिक् । ईकारे । ईकारे । प्रतीची कुले । पञ्चस्विति निर्देशेन यत्कार्यं तत्स्त्रीपुंसयो रेवेति नपुंसके नुमभावः "पूजार्थस्य" तु पञ्चस्वविशेषः । शसादौ प्रत्यञ्चः । प्रत्यञ्च् भ्याम् स्थिते संयोगान्तलोपे कुत्वे च प्रत्यङ्भ्यामित्यादि । सुपि ङणोः कुक्टुगिति कुकि षत्वे क्षादेशे च प्रत्यङ्क्षु ॥ ३८ ॥

**तिरश्चादयः** ॥ तिरश्चादयः शब्दा निपात्यन्ते शसादौ स्वरे परे तद्धिते ईपि ईकारे च ॥ ३९ ॥ तिरश्चः । तिरश्चा तिर्यग्भ्याम् तिर्यग्भिः । तिर्यक्षु । हेतिर्यङ् हेतिर्यञ्चौ हेतिर्यञ्चः(क) ॥ उदीचः । उदीचा उदग्भ्याम् उदग्भिः । उदक्षु । हेउदङ् हेउदञ्चौ हेउदञ्चः ॥ एवं सम्यच्शब्दः । सम्यङ् सम्यञ्चौ सम्यञ्चः । सम्यञ्चम् सम्यञ्चौ समीचः । समीचा इत्यादि ॥ सध्र्यङ् सध्र्यञ्चौ सध्र्यञ्चः । हेसध्र्यङ् हेसध्र्यञ्चौ हेसध्र्यञ्चः ॥ सध्र्यञ्चम् सध्र्यञ्चौ सध्रीचः । सध्रीचा सध्र्यग्भ्यामित्यादि ॥

( च० ) शसादौ तु विशेषः । सूत्रम्—तिरश्चादयः' तिरश्च आदिर्येषां ते तिरश्चादयः प्रथमाबहुवचनान्तम् । 'ए ओ जसि' 'ए अय्' 'स्वरहीनं०' 'सोर्वि०' ॥ तिरश्चादय इति । तिर्यच्उदच्सध्र्यच्सम्यच् शब्दानां यथाक्रमं तिरश्च् उदीच् सध्रीच् समीच् इत्यादेशा निपात्यन्ते शसादौ स्वरे परे तद्धिते प्रत्यये ईपि ईकारे च । तद्धिते यथा तिरश्चीनः । ईपि तिरश्ची । ईकारे तिरश्ची तिर्यञ्चि । अत्र अनेन शसादौ स्वरे परे तिर्यच् शब्दस्य तिरश्च्, उदच् शब्दस्य उदीच् । 'स्वरहीनं०' भकारादौ । 'चोः कुः' 'झबे जबाः' । सुपि च 'चोः कुः' 'किलात्षः सः' इति प्रत्यग्वत् । इत्यादयश्चान्ताः ॥ टकारान्ता अप्रसिद्धाः ॥३९॥

( प्र० ) तिरश्चादय इति । आदिशब्दात् अमुम् अञ्चतीति विग्रहेऽञ्चतौ परेऽदसष्टेरद्र्यादेशे अदद्र्यङ् । अदद्र्यञ्चौ । अदद्र्यञ्चः । अदमुईचः–अमुमुईचः–अदद्रीचः इत्यादयः प्रयोगानुसारतो ज्ञेयाः ॥ ३९ ॥

---

( क ) विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्याद्वप्रत्ययान्तेऽञ्चतौ परे ॥ अमुं अञ्चतीति विग्रहे अदसष्टेरद्र्यादेशः ॥ अदसोऽसेर्दादु दो मः ॥ अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः स्यात् । अदमुयङ् अमुद्र्यङ् अमुमुयङ् अदद्र्यङ् ॥ परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः । उभयोः केचिदिच्छन्ति केचिदिच्छन्ति नोभयोः ॥ विष्वद्र्यङ् देवद्र्यङ् ॥ उदङ् उदञ्चौ उदञ्चः । उदञ्चम् उदञ्चौ ॥ उद ईत् ॥ उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेरकारस्येकारादेशो भवति शसादौ स्वरे परे तद्धिते ईपि ईकारे च इत्याधिकः पाठो मूलपुस्तके दृश्यते । स च पाणिनीयानुसारी ।

तकारान्तो मरुच्छब्दः । 'हसे पः सेर्लोपः 'वावसाने, मरुत् मरुद् मरुतौ मरुतः । हेमरुत-हेमरुद् हेमरुतौ हेमरुतः ॥ मरुतम् मरुतौ मरुतः । मरुता मरुद्भ्याम् मरुद्भिः । इत्यादि । एवं अग्निचित्प्रभृतयः । अग्निचित् अग्निचिद् अग्निचितौ अग्निचितः । हेअग्निचित् हेअग्निचिद् हेअग्निचितौ हेअग्निचितः ॥

( च० ) तकारान्तो मरुत शब्दस्तस्य सौ धौ च सिलोपे कृते 'वावसाने' तकारस्य वा दकारः । मकारादौ 'झबे जबाः' तस्य दः 'स्वरहीनं०' । स्वरादौ छपि च 'स्वरहीनं०' ॥ एवमग्निचित्प्रभृतयोऽपि साध्याः । अग्निं चिनोति इन्धनैर्वर्धयतीति अग्निचित् ॥

तकारान्त उ (ऋ)कारानुबन्धो महच्छब्दः ॥ **ञितो नुम्** ॥ उश्च ऋश्च वृ । वृ इत् यस्य सः ञित् तस्य ञितः नुम् । उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु [ शौ च ] ॥ ४० ॥

( च० ) तकारान्त उ (ऋ)कारानुबन्धो महच्छब्दस्तस्य पञ्चसु विशेषः । 'मह पूजायाम्' । 'द्रुहिमहिपृषिभ्यः कतृ' । एभ्यः कित् अतृप्रत्ययो भवति । ऋकार इत् । उकारानुबन्धित्वं तु चिन्त्यम् । मह्यत इति महत् । कार्यार्थमुच्चरितस्य वर्णस्यानुबन्ध इति संज्ञा । यद्वा उच्चरितप्रध्वंसिनो ह्यनुबन्धाः । सूत्रम्—'ञितो नुम्' ॥ उश्च ऋश्च वृ वृ इत् यस्य स ञित् तस्य ञितः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'खोर्वि०' । नुम् प्रथमैकवचनान्तम् । 'हसेपः०' 'हवे' 'उ ओ' सिद्धम् । उकारानुबन्धस्य वतुप्रत्ययादेः, ऋकारानुबन्धस्य च शतृप्रत्ययादेः नुमागमो भवति पुंसि पुंलिङ्गे पञ्चसु वचनेषु परेषु । शौ चेति नपुंसके जस्शसोः स्थाने जाते शौ च परे । अनेन पञ्चसु स्यादिषु तकारात्पूर्वं नू ॥४०॥

( प्र० ) ञित इति । उश्च ऋश्च वृ वृ इत् यस्य स ञित् तस्येत्यभिप्रेत्याह—उकारानुबन्धस्येत्यादि । नन्वञ्चतेरप्युकारानुबन्धित्वादनेनैव नुम्सिद्धौ वक्तव्यं न च वक्तव्यमिति चेत्सत्यम् । सिद्धे सत्यारम्भो नियमायेति । धातुघूकारानुबन्धेष्वञ्चते रेवेति । अतः उखास्रत् पर्णध्वत् इत्यादौ नुमभावः । नुमयम इत्यत्र नुमिति योगविभागादञ्चेरित्यस्य युजेरुपलक्षणत्वाद्वा । युजेरसमासे नुम् । युङ् । युञ्जौ इत्यादि । समासे तु अश्वयुक् । अश्वयुजावित्यादि । पञ्चस्वित्यस्य नपुंसकव्यक्तिविषयत्वेऽपि स्त्रियां ञित ईविधेः पुंसीत्युक्तम् । पुंसोऽसुङित्यतो विभक्तिविपरिणामेन पुंसीत्यनुवृत्तिर्वा । ततश्च कियत् कियती इत्यादौ न नुम् ॥ ४० ॥

**न्सम्महतोऽधौ दीर्घः शौ च** ॥ न्सन्तस्यापूशब्दस्य महच्छब्दस्य च दीर्घो भवति पञ्चसु परेषु धिवर्जितेषु शौ च परे(क) ॥ 'संयोगा-

(क) न्सन्तस्येत्यागमजनकारयुक्तसान्तस्य ज्ञेयम् । तेन कंसूशब्दस्य क्विबन्तस्य न दीर्घः । संयोगान्तस्य लोपः । कन् कंसौ कंसः । कंसम् कंसौ कंसः । कंसा कन्भ्याम् कन्भिः कन्सु । हेकन् । शोभना आपो यस्मिन्नसौ स्वाप् स्वाब् स्वापौ स्वापः । स्वाम्पि तडागानि इत्यधिकः पाठो मूलपुस्तेषु लभ्यते ।

न्तस्य लोपः’ महान् । ‘नश्चापदान्ते झसे’ महान्तौ महान्तः । हेमहन् हेमहान्तौ हेमहान्तः । महान्तम् महान्तौ महतः । महता महद्भ्याम् महद्भिः । महते महद्भ्याम् महद्भ्यः । इत्यादि ॥ ४१ ॥

( च० ) सूत्रम्—‘न्सम्महतोऽधौ दीर्घः शौ च:’ । न्स च अप् च महच्च न्सम्महत्, तस्य पञ्चम्येकवचनान्तम् । ‘स्वरहीनं०’ ‘स्रोविं०’ न्सम् अग्रे महत् । ‘जमे जमा वा’ पस्य मः । ‘स्वरहीनं०’ । न धिः अधिस्तस्मिन् अधौ सप्तम्येकवचनान्तम् । ‘ङेरौ डित्’ टिलोपः । ‘स्वरहीनं०’ ‘अतोऽत्युः’ ‘उ ओ’ ‘एदोऽतोऽतः’ । दीर्घः प्रथमैकवचनान्तम् । ‘स्रोविं०’ । ‘शौ’ इति शिशब्दस्य सप्तम्येकवचनान्तम् । ‘ङेरौ डित्’ टिलोपः । च प्रथमैकवचनान्तम् । ‘अव्यया०’ ॥ न्संतस्येति । इहिन्नुस्शब्दं विहाय नुमागमसहित-सकारान्तस्य, तथा अप्शब्दस्य जलवाचिनो नित्यं बहुवचनान्तस्य, तथा महच्छब्दस्य उकारानुबन्धस्य पुंसि पञ्चसु वचनेषु धिवर्जितेषु, नपुंसके शौ च दीर्घो भवति ह्रस्वदीर्घप्लुता विधीयमानाः स्वरस्थाने भवन्तीति न्सादीनां व्यञ्जनसंनिकृष्टस्य स्वरस्य दीर्घो भवतीत्यर्थः ॥ अप्शब्दो बहुत्व एव । तत्र असमासान्तस्य जसि दीर्घो नान्यत्र । समासान्तस्य पञ्चस्वेव इयं विवक्षा । यथा शोभना आपो यत्र स स्वाप् देशः स्वाप् स्वापौ स्वापः । स्वापं स्वापौ इति । नपुंसके शौ स्वांपि सरांसि इति ॥ अनेन धिवर्जितेषु पञ्चसु दीर्घः । धौ तु नुमागम एव न दीर्घः । ‘हसेपः०’ ‘संयोगान्तस्य०’ इति सौ धौ च तकारस्य लोपः । शेषेषु—‘नश्चापदान्ते झसे’ ‘स्वरहीनं०’ । भकारादौ—‚झबे जबाः’ ‘स्वरहीनं’ ॥ शेषं सुगमम् ॥ ४१ ॥

( प्र० ) न्सम्महत इति । न्स् च अप् च महत् च तेषां समाहारः न्सम्महत् तस्य अत्र वादीपोः शतुरित्यतो वानुवृत्तेः महच्छब्दसाहचर्याच्च “अंस विभाजने” इत्यस्य क्विपि अन् अंसावित्यादौ । न्सन्तत्वेऽपि न ॥ ४१ ॥

तकारान्त उकारानुबन्धो भवच्छब्दः ॥ **अत्वसोः सौ** ॥ अत्वसोः सौ इति धातोर्नेष्यते । अत्वन्तस्यासन्तस्य(क) च दीर्घो भवति धिवर्जिते सौ परे । ‘संयोगान्तस्य’ ‘हसेपः’ । भवान् भवन्तौ भवन्तः । हेभवन् हेभवन्तौ हेभवन्तः । भवन्तम् भवन्तौ भवतः । भवता भवद्भ्याम् भवद्भिः । भवते भवद्भ्याम् भवद्भ्यः । भवतः भवद्भ्याम् भवद्भ्यः । भवतः भवतोः भवताम् । भवति भवतोः भवत्सु ॥ ऋकारानुबन्धस्य भवत्शब्दस्य नुमागम एव । अत्वन्तत्वाभावान्न दीर्घः । भवन् भवन्तौ भवन्तः । हेभवन् हेभवन्तौ हेभवन्तः । भवन्तम् भवन्तौ भवतः । भवता भवद्भ्याम् भवद्भिः ।

---

( क ) असन्तस्येत्यसुप्रत्ययान्तस्येति बोध्यम् । तेन पिण्डं ग्रसतीति पिण्डग्रः पिण्डग्रसौ पिण्डग्रसः । पिण्डग्रसम् पिण्डग्रसौ पिण्डग्रसः । इत्यादि सिध्यति ॥

भवत्सु । इत्यादि ॥ एवं पचन्शब्दः । पचन् पचन्तौ पचन्तः । हेपचन् हेपचन्तौ हेपचन्तः । पचन्तम् पचन्तौ पचतः । पचत्सु । (क)इत्यादि ॥४२॥

( च० ) भा दीप्तौ । 'भातेर्डवतुः' । यतः—'भातेस्तु डवतुः परः । भवान् पूज्ये युष्मदर्थे' इति उकारानुबन्धो भवच्छब्दः । तस्य पञ्चसु—'उगितो नुम्' इति नुमागमः । ततः सूत्रम्—'अत्वसोः सौ' अतुस् च अस् च अत्वसौ तयोः अत्वसोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'खोर्वि०' । सौ इति सिशब्दस्य सप्तम्येकवचनम् । 'ङे रौ ङित्' ॥ अत्वन्तस्येति । उकारानुबन्धस्य असन्तस्येति । नुमागमरहितस्यासन्तस्य शब्दस्य धिवर्जिते सौ परे दीर्घो भवति । अनेन सौ परे दिर्घो भवति, धौ न, 'धिवर्जिते' इति विशेषणात् ॥ धौ 'हसेपः से०' 'संयोगान्तस्य लोपः' हे भवन् अन्यत्र 'नश्चापदान्ते' स्वरादौ छवि च 'स्वरहीनं०' । भकारादौ 'झबे जबाः' । शेषं सुकरम् ॥ एवम् अष्ठीवत्—चक्रीवत्—'कक्षीवत्—शब्दाः ॥ भू 'शतृशानौ तिप्तेवत् क्रियायाम्' 'अप् कर्तरि' गुणः 'ओ अव्' 'स्वरहीन०' 'अदे' 'स्वरहीनं०' ऋकारानुबन्धो भवत्शब्दः । भवत् इत्यस्य ऋकारानुबन्धत्वात् 'उगितो नुम्' इति नुमागम एव स्यात् । परम् अत्वन्तत्वाभावात् 'अत्वसोः सौ' इति दीर्घत्वं न । शेषं सुगमम् । एवं पचत् शब्दः । पचत् शब्दोऽपि शित् ऋकारानुबन्ध इत्यर्थः । एवम् अन्येऽपि शतृप्रत्ययान्ता ऋकारानुबन्धा ज्ञेयाः ॥ इति तान्ताः ॥ कपान्ता अप्रसिद्धाः ॥ ४२ ॥

( प्र० ) अत्वसोरिति । अतुश्च अस् च अत्वसौ तयोः अत्रापि वानुवृत्तेः 'छष्ट वस्ते छवः पिण्डम्' इत्यादौ न नुमागमः । एवेत्येवकारेण अत्वन्तत्वाभावान्न दीर्घं इत्यर्थः ॥

शकारान्तो विशशब्दः । 'छशषराजादेः षः' इति षत्वम् । 'षो डः' इति डत्वम् । 'वावसाने' चपा जबाश्च । विट्—विड् विशौ विशः । हेविट् हेविड् हेविशौ हेविशः ॥ विशम् विशौ विशः । विशा विड्भ्याम् विड्भिः । विट्सु इत्यादि ॥

( च० ) शकारान्तो विश् शब्दः । तस्य 'छशषराजादेः ष इति षत्वे कृते । 'षो डः' 'वावसाने' । स्वरादौ 'स्वरहीनं०' ॥ छपि 'खसे चपा झसा (पा) नाम्' सम्राज्शब्दवत् । विट् विड् इत्यादीनि रूपाणि ॥ विड् मनुष्यो वैश्यश्च ॥ इत्यादयः शान्ताः ॥

षकारान्तः षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । षष् जस् इति स्थिते । 'जस्शसोर्लुक्' 'षो डः' 'वावसाने' । षट् षड् षड्भिः षड्भ्यः षड्भ्यः । 'ष्णः' इति नुट् । 'षो डः' षड् नाम् इति स्थिते ॥ ड्र् णः ।

---

( क ) द्विरुक्तानां जक्षादीनां च शतुर्नुम् प्रतिषेधः पुंलिङ्गे नित्यं वक्तव्यो नपुंसके वा शौ च ॥ दधत्-दधद् दधतौ दधतः । दधतम् दधतौ दधतः । दधता दधद्भ्याम् दधद्भिः । इत्यादि ॥ नपुंसके दधत् दधद् दधती दधति दधन्ति । जक्ष जागृ दरिद्रा शास् दीधी वेवी चकास् एते जक्षादयः । पाठोऽयं विशेषतया पुस्तकान्तरेषूपलभ्यते ॥

संख्यासम्बन्धिनो डकारस्य णत्वं भवति नामि परे । 'ष्टुभिः ष्टुः' षण्णाम् । षट्सु । क्वचिदपदान्तेऽपि पदान्तताश्रयणीया ॥ ४३ ॥

( च० ) षकारान्तः षष् शब्दो नित्यं बहुवचनान्तस्त्रिषु लिङ्गेषु सदृशरूपः । 'जसशसोर्लुक्' 'षोडः' 'वावसाने' । षट् षड् । भकारादौ 'षो डः' इति डत्वे कृते 'स्वरहीनं०' आमि—'ष्णः' इति नुमागमः । 'षो डः' षड् नाम् इति स्थिते सति सूत्रम्—'ड्णः' ड् षष्ठ्येकवचनान्तम् । सांकेतिकम् । णः इति प्रथमैकवचनान्तम् । 'सोर्वि०' ॥ संख्या० । वृत्तिः कण्ठ्या । अनेन नामि परे डकारस्य णकारः । 'ष्टुभिः ष्टुः' 'स्वरहीन' ॥ सुपि 'षो डः' 'खसे चपा झसा[पा]नाम्' ततः टकारस्य सकारसंयोगे 'ष्टुभिः ष्टुः' इति प्राप्तौ 'टोरन्त्यात्' इति सूत्रेण 'ष्टुभिः ष्टुः' इति सूत्रेण सस्य षत्वनिषेधः ॥ ननु अत्र पदान्तत्वाभावात् 'टोरन्त्यात्' इति सूत्रं कथं सम्भवति अत्राह—क्वचिदिति । क्वचित्प्रयोगान्तरे अपदान्तेऽपि पदान्तता आश्रयणीया वक्तव्या इति भावः ॥ ४३ ॥

(प्र०) ननु षट्सु इत्यादौ ष्टुत्वं कुतो नेत्यत आह—क्वचित्पदान्तेति । अपदान्तेपि पदान्तताश्रयणात् टोरन्त्यादिति ष्टुत्वनिषेधान्न भवतीति भावः ॥ ४३ ॥

दोष्शब्दस्य भेदः ॥ दोषां रः ॥ दोष्सजुष्आशिष्हविष्प्रभृतीनां षकारस्य रेफो भवति रसे पदान्ते च ॥ 'हसेपः' 'स्रोर्विसर्गः' दोः दोषौ दोषः । हेदोः हेदोषौ हेदोषः ॥ दोषम् दोषौ ॥ ४४ ॥

( च० ) दोष्शब्दो भुजार्थवाचकस्तस्य भेदः ॥ सूत्रम्—'दोषां' दोषां षष्ठीबहुवचनान्तम् । 'स्वरहीनं०' 'मोऽनुस्वारः' एकमिदं सूत्रम् ॥ अथवा 'दोषां रः' इति द्विपदं सूत्रम् । दोष् सजुष् आशिष् हविष् धनुष् सर्पिष् शब्दानां षकारस्य रसे पदान्ते च रेफो भवति । षकारस्य स्थाने जातस्य षकारस्येति व्याख्येयम् । अनेन रसे पदान्ते च रेफः । सौ धौ च—'हसेपः से०' 'स्रोर्वि०' ॥ द्विवचनादौ 'स्वरहीनं०' ॥ दोः दोषौ दोषः । दोषं दोषौ ॥ ४४ ॥

( प्र० ) दोषामिति । अह्नो रो रात्रिष्वित्यतो र इत्यनुवर्तते बहुवचनं बहूनां ग्राहकमित्यभिप्रेत्याह—दोष्सजुषित्यादि । यद्यपि दाम्यतीवि दमेर्डोसि दोरिति ततश्च परत्वात्स्रोविसर्ग इत्यनेनैव सिद्धिस्तथापि जुषी प्रीतौ जोषणं जुट् तेन सह वर्तत इति सजूर्मित्रमिति षप्रकृतिकस्य विसर्गाप्राप्तेस्तदर्थंक्रियमाणमेषामप्युपकारकम् अभ्युपगतपक्षाश्रयेण वा । नचाशीष्यतीत्यादौ रेफप्रकृतिकस्य खपे वेत्यनेन पक्षे रेफादेशप्रसङ्गः स्यादिति वाच्यम् । वक्तव्यत्वाद्वाशब्दव्यवस्थया वा तदभावात् शसादावन्नन्तता वा वक्तव्येत्यत्र अकारोपादानं स्यामित्यादौ ङौ च पक्षे श्रवणार्थम् ॥ ४४ ॥

[ शसादावन्नन्तता वा वक्तव्या । ] दोषः-दोष्णः । दोषा-दोष्णा दोर्भ्यां-दोषभ्याम् दोर्भिः-दोषभिः । दोषे-दोष्णे दोर्भ्यां-दोषभ्याम् दोर्भ्यः-दोषभ्यः । दोषः-दोष्णः दोर्भ्यां-दोषभ्याम् दोर्भ्यः-दोषभ्यः । दोषः-दोष्णः दोषोः-दोष्णोः दोर्षां दोष्णाम् । 'वेङ्योः' दोष्णि-दोषणि-दोषि दोषोः-दोष्णोः ।

दोर्षु-दोःषु-दोषसु । सप्तमीबहुवचने कृत्रिमत्वाद्विसर्गः(क) ॥

( च० ) शसादौ तु विशेषः । 'शसादौ स्वरे परे नान्तता वा वक्तव्या' । अस्यार्थः । दोष्शब्दस्य शसादौ स्वरे परे नान्तत्वं भवति वा विकल्पेन अन्ते नकारागमो भवतीत्यर्थः । दोष् न् इति स्थिते । 'पूवर्णो णो०' पक्षे 'स्वरहीनं०' । दोष्णः दोषः दोष्णा दोषा । भकारादौ 'दोषां रः'जलतुम्बिका० । दोर्भ्यां दोर्भिः । यद्वा 'दोषां रः' 'शषपो द्विः' 'झबे जबाः' 'स्वरहीनं०' दोर्भ्यां दोर्भिः इत्यादि । केचित्तु—'शसादावनन्तता वा वक्तव्या' इत्येवं पठन्ति, स्वर इति पदं न पठन्ति तन्मते स्वरादौ हसादौ च सर्वत्र विकल्पेन अन् आगमे कृते स्वरादौ 'अल्लोपः स्वरे' 'पूवर्णो णो०' 'स्वरहीनं०' । द्वितीयपक्षे केवलं 'स्वरहीनं०' दोष्णः दोषः । दोष्णा दोषा ॥ भकारादौ एकत्र अन् आगमे कृते 'स्वरहीनं०' 'नाम्नो नो०' दोषभ्यां । द्वितीयपक्षे 'दोषां रः' जलतुम्बि० । दोर्भ्याम् ॥ एवं दोषभिः दोर्भिः । दोषे 'स्वरहीनं०' दोष्णे शसादावनन्तता । ततो 'अल्लोप स्वरे०' 'पूवर्णो णो०' 'स्वरहीनं०' ॥ दोषभ्यां दोर्भ्यां दोषभ्यः दोर्भ्यः । दोषः दोष्णः दोषभ्यां दोर्भ्यां दोषभ्यः दोर्भ्यः । दोषः दोष्णः दोषोः दोष्णोः दोषां दोष्णां । 'वेड्योः' दोषि दोष्णि । दोषोः दोष्णोः सुपि अनन्तत्वे कृते 'नाम्नो नो लोप०' दोषसु पक्षे 'दोषां रः' इति रत्वे । 'किलात्पः सः' दोर्षु । केचित्तु 'दोषां रः' 'रो विसर्गः' 'विसर्जनीयस्य०' दोःषु इत्यपि साधयन्ति । केचित्तु दोः षु इति पठन्ति ततो यथा संभवं साध्यम् ॥ दोष् शब्दः पुंक्लीबलिङ्गः । क्लीबे तु दोषी दोंषि ॥ जुषी प्रीतिसेवनयोः । जोषणं जुट् मिलनं सह तेन वर्तते इति सजूर्मित्रम् ॥

एवं सजुष्शब्दः ॥ सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः ॥ दोषाम् । सजूः सजुषौ सजुषः । हेसजूः हेसजुषौ हेसजुषः । सजुषम् सजुषौ सजुषः । सजुषा सजूर्भ्याम् सजूर्भिः । सजूर्षु-सजूःषु । इत्यादि ॥

( च० ) 'सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः' इति केचिन्नेच्छन्ति । 'दोषां रः इति रत्वं विधाय 'र्वोर्विहसे' इत्यनेनैव सिद्धत्वात् । इति षान्ताः ॥

( प्र० ) सजुषाशिषोरिति र्वोर्विहस इति सूत्रेणेत्यर्थः । आङ्पूर्वस्य शासेः क्विपि उपधाया इकारं धातुसम्बन्धित्वादिवर्णोवर्णयोः अथवा वक्तव्यारम्भसामर्थ्यात् र्वोर्विहसेति दीर्घविधेरसार्वत्रिकत्वद्योतनात् । कुर्वे इत्यादौ दीर्घाभावः । अव्युत्पन्नपक्षाश्रयेऽपि दीर्घविध्यर्थं वा सप्तमीबहु वचने धातोरपि रेफस्य विसर्गः । धातोर्नेति नियमात् । ततो वा शरोति विसर्जनीसकारौ ॥

सकारान्तः पुंस्शब्दः ॥ पुंसोऽसुङ् ॥ पुंस्शब्दस्य असुङादेशो भ-

(क) दोष् सु इति स्थिते दोषाम् इति विसर्गः । शषसे वा इति षत्वे कृते । किलात् इति षत्वम् नुम्विसर्जनीयशर्व्यवधानेऽपि किलादिति सत्य षत्वं वाच्यम् । कृताकृतप्रसङ्गी यो विधिः स नित्यः इति साधनीयम् ।

वति पुंसि पञ्चसु परेषु शौ च ॥ ङकारोऽन्त्यादेशार्थः । उकारो नुम्विधाना-र्थः(क) ॥ 'मः स्वरे' पुमस् सि इति स्थिते । 'ञितो नुम्' 'न्सम्महतः' इति दीर्घः । 'संयोगान्तस्य लोपः' 'हसेपः सेर्लोपः' पुमान् पुमांसौ पुमांसः । हे पुमन् हे पुमांसौ हे पुमांसः । पुमांसम् पुमांसौ पुंसः । पुंसा । पुंसि पुंसोः । पुंस् सु इति स्थिते ॥ ४९ ॥

( च० ) सकारान्तः पुंस्शब्दः । पुनातीति पुमान् । 'पुनातेः डुक् नुम् च इति डु-प्रत्ययो नुमागमश्च 'प्वादेर्ह्रस्वः । अथवा-पाति त्रिवर्ग पुमान् 'पातेर्डुमसुः' इति डुमसु प्रत्ययः ॥ पुंस् शब्दस्तस्य पञ्चसु विशेषः । सूत्रम्---'पुंसोऽसुङ्' पुंसः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'क्षेविं०' असुङ् प्रथमैकवचनान्तम् । 'हसेपः०' 'अतोऽस्युः' 'उ ओ' 'पदोऽ-तोऽतः' ॥ पुंस्शब्दस्य पञ्चसु स्यादिषु परेषु असुङ् इत्ययमादेशो भवति । ङकारोऽन्त्या-देशार्थः । उकारः उच्चारणार्थः । अनेनान्त्यस्य सकारस्य अस् इत्यादेशः । पुमस् इति स्थिते । 'ञितो नुम्' इति नुमागमः । पञ्चसु । 'न्सम्महत०' इति धिवर्जम् । अन्यत्र दीर्घः । 'सौ धौ च' 'हसेपः०' इति सिलोपः 'संयोगान्तस्य०' इति सलोपः । अभे द्वितो-याद्वित्वं यावत् 'नश्चापदान्ते०' 'स्वरहीनं०' पुमान् पुमांसौ । पुमांसः । हे पुमन् हे पुमां-सौ हे पुमांसः । पुमांसम् पुमांसौ । शसादौ 'नश्चापदान्ते०' 'स्वरहीनं०' पुंसः पुंसा । भ-कारादौ 'संयोगान्तस्य०' 'नश्चापदान्ते झसे' ॥ एवं सुपि 'संयोगान्तस्य०' 'नश्चापदा-न्ते' पुंसु ॥ ४९ ॥

असम्भवे पुंसः ककुसौ ॥ असम्भवेर्थे पुंसशब्दस्य ककुसागमो भवति सुपि परे ॥ ककारः कित्कार्यार्थः । अकार उच्चारणार्थः ॥ स्कोः धोश्च । संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च (से पदान्ते च ॥ 'किलात्' इति सस्य षत्वम् । 'कषसंयोगे क्षः' पुंक्षु(ख) ॥ ४६ ॥

( च० ) अथ रूपान्तरं साधयतति---असम्भव इति । असम्भवे वैदिकप्रयोगे । अ-सम्भवो नाम वेदान्तैकवेद्यस्य आत्मनो बहुत्वासम्भवः । न विद्यते आत्मनो ब्रह्मणो बहुत्व-सम्भवो यत्र सोऽसम्भवः । अतः 'एकमेवाद्वितीयं ब्रह्म' 'नेह नानास्ति किञ्चन' इति वे-

---

( क ) "रेफः स्वरपरं वर्णं दृष्ट्वाऽऽरोहति तच्छिरः । पुरः स्थितं यदा पश्येदधः संक्रमते स्वरम् ॥ अ-नुस्वारो नमस्यैव यावत्तद्देशयोगतः । मूर्ध्नि सङ्गं लभेत्तावन्नेक्षते पुरतः स्वरम्" ॥ पाठोऽयं प्राचीनपुस्तके विशेषोऽस्ति ।

( ख ) ननु पुंक्ष्वित्यत्र मकार एव संयोगादिर्न सकारस्तर्हि कथं लोपः । पुंक्षु अत्र 'स्कोरायोश्च' इत्य-नेन संयोगाद्यस्य लोपे प्राप्ते मकारस्यैव लोपो भवेन्न तु सकारस्य । आदित्वाभावात् । संयोगाद्यस्तु पुंस् इत्यत्र शिरसि मकार एव । तस्मादादित्वं द्विविधम् । मुख्यमापेक्षिकं च । अत्र सस्यादित्वमापेक्षिकम् । पुंस् क इत्यत्र ककारापेक्षया सकार आदिः सकारापेक्षया मकार आदिरिति सकारस्यैव लोपः । मुम्बय्यादिपु-स्तकेषु पाठोयमुपलभ्यते ।

दान्तवेद्यस्य वेदान्तशास्त्रेण वेद्यस्य ज्ञेयस्यात्मनो बहुत्वासम्भवः ॥ अथवा--नास्ति स- म्भवो बुद्धेः सूत्रादेश्च यत्र सोऽसम्भवस्तस्मिन् वाच्ये सति साविति सुपि परे कागा- मो भवति ॥ अनेन पुंस् अग्रे क् कित्वादन्ते । 'स्कोराद्योश्च' इति सलोपः । कि- लात्वः स:०' 'कषसंयोगे क्षः' पुंक्षु इति सिद्धम् । परमपुरुषे पुङ्क्षु, लौकिकेषु पुरु- षेषु पुंसु ॥ ४६ ॥

( प्र० ) असम्भवे इति । वेदान्तैकवेद्यस्यात्मनः "एकमेवाद्वितीयं, नेह नानास्ति किञ्चन" इत्यादिभिरकत्वेन प्रतिपादितस्य पुंसः बहुषु बहुवचनमिति बह्वर्थवाचित्वे वि- हितबहुवचनासम्भव इत्यर्थः । अथवा संयोगान्तलोपेन पुङ्क्ष्विति सर्वत्र सम्भवे एवमुक्ति- पुङ्क्षु बहुष्वपीत्यादिप्रयोगस्यासम्भवे उद्भाविते कविधानेन सम्भवतीत्यर्थः । तत्र संयो- गान्तलोपे एकदेशविकृतस्यानन्यत्वेन कागमे षत्वे क्षादेशे मस्यानुस्वारः । यत्तु मध्यवर्ति- नोऽपि सकारस्यादित्वविवक्षया स्कोराद्योश्चेति सलोप इति । तदसत् । एवंविधादित्व- विवक्षया अप्रामाणिकत्वात् । उक्तयुक्त्यैव सम्भवे क्लिष्टकरणे प्रमाणाभावात् अति- प्रसङ्गाच्च ॥ ४६ ॥

एवं विद्वस्शब्दः । विद्वान् विद्वांसौ विद्वांसः । हे विद्वन् । विद्वांस- म् विद्वांसौ ॥

( च० ) विद्वस्शब्दस्य पञ्चसु पूर्ववत् 'ञितो नुम्' 'न्सम्महतो०' दीर्घः । 'संयोगा- न्तस्य लोपः' 'हसेपः' विद्वान् विद्वांसौ विद्वांसः । हे विद्वन् । विद्वांसम् विद्वांसौ ॥१४॥

**वसोर्व उः ॥** वसोः सम्बन्धी वकार उत्वं प्राप्नोति शसादौ स्वरे परे तद्धिते ईपि ईकारे च ॥ विदुषः । विदुषा ॥ ४७ ॥

( च० ) शसौ तु विशेषः--'वसोर्व उ०' वसो षष्ठ्येकवचनान्तम् । 'ङिति' 'अस्य' 'वोर्वि०' 'नामिनोरः' जलतुम्बिका० । वः वः प्रथमैकवचनान्तम् 'सो०'। उः प्रथमैकवचनं साकेतिकम् । 'आदवे लोपश्' वासेरिति 'क्वसुकानौ णवेवत्' 'विदेर्वा वसुः' इत्यादिसूत्रोक्त- न्तो यो वसुप्रत्ययस्तस्य सम्बन्धी वकारः सस्वर उत्वं प्राप्नोति शसादौ स्वरे परे तद्धित- ये प्रत्यये ईपि च परे । तद्धिते वैदुष्यम् । ईपि विदुषी ॥ अत्रानेन शसादौ स्वरे सर्वत्र इत्यस्य उः 'कलात्पः सः०' 'स्वरहीनं०' ॥ ४७ ॥

( प्र० ) वसोः इति । अत्रापि पूर्ववद्वकारसहिताकारस्य उत्वम् । वसोरेकानुब- न्धकस्य द्व्यनुबन्धकस्यापि क्वसोरप्युपलक्षणत्वात्तस्थिवान् । तस्थुषः । वस्योत्वे निमि- त्ताभावादिति न्यायेनेण्निवृत्तावातोऽनपीत्यालोपः । तथा जगन्वान् जग्मुष इत्यत्रापि मो नो धातोरित्यस्याभावः निमित्ताभावात् । तद्धिते वैदुष्यं विदुष्मान् । ईपि विदुषी । ईकारे । विदुषी कुले ॥ ४७ ॥

"वसां रसे" इति दत्वम् । विद्वद्भ्याम् विद्वद्भिः । विदुषे विद्व- द्भ्याम् विद्वद्भ्यः । विद्वत्सु । इत्यादि(क) ॥

---

( क ) अत्रेदमवधेयम्, यथा-एवं तस्थिवस्प्रभृतयः । तस्थिवान् तस्थिवांसौ तस्थिवांसः । तस्थिवां-

( च० ) हलादौ 'वसां रसे' इति सस्य दत्वे कृते भकारादौ 'स्वरहीनं०' छपि 'खसे चपा झसानाम्' दस्य तः । स्वरहीनं० ॥

एवं तस्थिवस्शब्दः । तस्थौ इति तस्थिवान् । ष्ठा गतिनिवृत्तौ । 'आदे ष्णः स्नः' स्था । क्वसुप्रत्ययः । वस् । सच णप्वत् । तेन द्वित्वम् । 'ह्रस्वः' 'शसात्खपा०' इति पूर्वसस्य लोपः । 'झपानां जबचपाः' इति थस्य तः ['स्थामी' इति आकारस्य ईकारः] । तस्थिवस् इति जाते स्यादिः । तस्थिवान् तस्थिवांसौ । तस्थिवांसः तस्थिवांसम् तस्थिवांसौ ॥ शसादौ 'वसोर्व उः' इति वस्य उत्वे कृते 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति इकारस्य आकार एव । ततः 'आतोऽनपि' इत्याकारलोपः । 'स्वरहीनं०' 'किलात्षः सः०' तस्थुषः तस्थुषा तस्थिवद्भ्यामित्यादि ॥ एवं गत इति जग्मिवान् जग्मिवांसौ-जग्मिवांसः । जग्मिवांसम् जग्मिवांसौ जग्मुषः । जग्मुषा जग्मिवद्भ्यामित्यादि ॥ एवं पेचिवान् पेचिवांसौ पेचिवांसः । पेचिवांसम् पेचिवांसौ पेचुषः । पेचुषा पेचिवद्भ्यामित्यादि । उषा(खा)स्रत्पर्णध्वसादीनां तु रसे पदान्ते च 'वसां रसे' इति दत्वम् । स्वरादौ 'स्वरहीनं०' उषा(खा)स्रत् उषा(खा)स्रसौ उषा(खा)स्रसः उषा(खा)स्रद्भ्याम् उषा(खा)स्रद्भिः उषा(खा)स्रत्सु । एवं पर्णध्वत् पर्णध्वसौ पर्णध्वसः इत्यादि ॥

सकारान्तः सुवचस्शब्दः । 'अत्वसोः सौ' सुवचाः सुवचसौ सुवचसः । हेसुवचः हेसुवचसौ हेसुवचसः ॥ सुवचसम् सुवचसौ । इत्यादि । एवं चन्द्रमस्प्रभृतयः । 'अत्वसोः सौ' 'हसेपः सेर्लोपः' चन्द्रमाः चन्द्रमसौ चन्द्रमसः । हेचन्द्रमः हेचन्द्रमसौ हेचन्द्रमसः । चन्द्रमसम् चन्द्रमसौ चन्द्रमसः । चन्द्रमसा चन्द्रमोभ्याम् चन्द्रमोभिः । चन्द्रमस्सु-चन्द्रमःसु । इत्यादि ॥

( च० ) सकारान्तः सुवचस्शब्दः । वच परिभाषणे सपूर्वः । 'वचादेरस्' 'स्वरहीनं०' नामत्वात्स्यादयः । ततः सौ परे 'अत्वसोः सौ' इति दीर्घः 'हसेपः से०' 'रुाविं०' ।

---

सम् तस्थिवांसौ । निमित्ताभावे नैमित्तिकस्याप्यभावः । इटो वकारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे तन्निवृत्तिः । आतोऽनपि इत्यालोपः । तस्थुषः । तस्थुषा तस्थिवद्भ्याम् तस्थिवद्भिः । तस्थिवत्सु । इत्यादि । हेतस्थिवन् हेतस्थिवांसौ हेतस्थिवांसः ॥ सकारान्तः शुश्रुवस्शब्दः । शुश्रुवान् शुश्रुवांसौ शुश्रुवांसः । शुश्रुवांसम् शुश्रुवांसौ । शुश्रुवस् शस् इति स्थिते । 'वसोर्व उः' य्वोर्धातोरियुवौ स्वरे स्वरहीनं परेण संयोज्यम् । 'किलात्' इति षत्वम् । शुश्रुवुषः शुश्रुवुषा । वसां रसे खसे चपा शुश्रुवत्सु । हेशुश्रुवन् हेशुश्रुवांसौ हेशुश्रुवांसः ॥ एवं पेचिवान् पेचिवांसौ पेचिवांसः । पेचिवांसम् पेचिवांसौ । शसि वस्योत्वे कृते यदागमत्वादिड्लोपः । पेचुषः । पेचुषा पेचिवद्भ्याम् । इत्यादि ॥ सकारान्तो जग्मिवस्शब्दः । जग्मिवान जग्मिवांसौ जग्मिवांसः । जग्मिवांसम् जग्मिवांसौ । इटः वकारमुद्दिश्य प्राप्तत्वाद्वस्योत्वे कृते इटोऽपि निवृत्तिः । 'गमां स्वरे' इत्यनेन उपधालोपः । जग्मुषः । जग्मुषा जग्मिवद्भ्याम् । जग्मिवत्सु । इत्यादि ॥ जगन्वान् जगन्वांसौ जगन्वांसः । जगन्वांसम् जगन्वांसौ । शसि वस्योत्वे कृते वकारनिमित्तस्य 'मोनो धातोः' इति नकारस्यापि मकारः । गमां स्वरे इति उपधालोपः । जग्मुषः । जग्मुषा जगन्वद्भ्याम् । इत्यादि । एवं जघन्वान् जघन्वांसौ जघन्वांसः । जघन्वांसम् जघन्वांसौ जघ्नुषः । जघ्नुषा जघन्वद्भ्याम् इति ।

धौ 'हसेपः से०' 'सोर्वि०'। स्वरादौ छपि च सर्वत्र 'स्वरहीनं०' सकारादौ 'सोर्वि०' 'हवे' 'उ ओ' शेषं सुकरम्। एवं चन्द्रमस् शब्दः। चन्द्रमाः चन्द्रमसौ चन्द्रमसः। चन्द्रमसा चन्द्रमोभ्यां चन्द्रमस्सु। एवं वेधाः वेधसौ वेधसः। सुमेधाः सुमेधसौ सुमेधसः। इत्यादि। एवं प्रचेतस् जातवेदस् उच्चैःश्रवस् सुप्रजस् तेजस्प्रभृतयः॥

उसनस्शब्दस्य भेदः॥ उशनसाम्॥ उशनस् पुरुदंसस् अनेहस् इत्येतेषां सेरधेर्डा भवति(क)॥ डित्वाट्टिलोपः। उशना उशनसौ उशनसः। उशनसो धौ सान्तता नान्तताऽदन्तता वा वक्तव्या। हेउशनन्-हेउशन-हेउशनः हेउशनसौ हेउशनसः॥ उभयविकल्पे रूपत्रयम्। सम्बोधने तूश-नसस्त्रिरूपमिति वचनात्॥ उशनसम् उशनसौ उशनसः। उशनसा उशनोभ्याम् उशनोभिः। उशनस्सु-उशनःसु। इत्यादि॥ [ पुरुदंसा पुरु-दंससौ पुरुदंससः। इत्यादि॥ अनेहा अनेहसौ अनेहसः। अनेहसम्। इत्यादि ]॥ ४८॥

( च०।) उशनस्शब्दादीनां सौ विशेषः। सूत्रम्—'उशनसाम्' उशनसां षष्ठीबहु-वचनान्तम्। 'स्वरहीनं०' उशनस् पुरुदंसस् अनेहस् इत्येतेषां शब्दानां धिवर्जितस्य सेर्डा भवति। अनेन सेर्डा। डकारष्टिलोपार्थः। 'डिति टेः' इति टेर्लोपः। 'स्वरहीनं०' शेषं द्वित्वादौ सुवचस्वत्। उशनसो धौ विशेषमाह—'उशनसो धौ सान्तता नान्तता अदन्तता च वक्तव्या' उशनस् शब्दस्य धिविषये नान्तता अन्त्यसकारस्य नकारः अद-न्तता अकारान्तता च सकारस्य लोपो भवतीत्यर्थः। चकारात् तृतीये तु सान्त एव तिष्ठ-तीति धौ रूपत्रयम्॥ यतः 'सम्बोधने तूशनसः' इति। एकत्र 'हसेप०' 'सो०'। द्विती-यरूपे सस्य नः। 'हसेपः०' तृतीये तु अदन्तता वक्तव्येति सलोपः। समानाद्धेर्लोपो॰ इति धेर्लोपः। हे उशनः हे उशनन् हे उशन इति त्रयम्। उशनस् भ्यामित्यत्र 'सोर्वि॰' 'हवे' 'उ ओ' उशनोभ्याम् उशनोभिरित्यादि। उशना शुक्रः। एवं पुरुदन्सस् अनेहस्प्रभृ-तयः। पुरुदन्सा पुरुदन्ससौ पुरुदन्ससः। पुरुदन्सा इन्द्रः॥ अनेहा अनेहसौ अनेहसः इत्यादि। अनेहा कालः॥ ४८॥

( प्र० ) उशनसो धाविति। सकारान्तस्योशनश्शब्दस्य सकारस्थाने—नकारेण नान्तता सकारलोपेन चादन्तता। पीत्यर्थः। नान्तादन्तयोर्विकल्पे पक्षे सान्तप्रकृतिरपीति त्रिरूपत्वं चोक्तमेव॥ ४८॥

अदस्शब्दस्य भेदः। 'त्यादादेष्टः' इति सर्वत्राकारः। अद् सि इति स्थिते॥

सौ सः॥ अदसो दकारस्य सौ परे सत्वं भवति॥ ४९॥

---

(क) उशनसामिति। बहुवचनमाद्यर्थम्। अत्राहुः—उशनेत्यत्र संज्ञापूर्वकत्वात् 'नोपधायाः' इति दीर्घो नेति। अत्रेदमवधेयम्—इयं शङ्का सिलोपेऽकृते कृते वा, नाद्यः तत्र नान्तत्वाभावात् सान्तस्यै-दर्शनात्। द्वितीयेऽपि नान्तस्य नाम्न इति व्याख्यानम्। तत्र नित्यमिति सम्बन्धात् नित्यनान्तस्य इति अभावात्। प्रकृते तदभावादेव नेति विचारः—इति लोकेशकरः।

( च० ) अदस्शब्दस्य सकारान्तस्यापि विशेषः । तस्य 'त्यदादेष्टे०' इति सर्वत्राकारः । सौ तु अदस् सौ इति स्थिते सूत्रम्—'सौ सः' साविति सिशब्दस्य सप्तम्येकवचनान्तम् । 'डौ' टिलोपः । सः प्रथमैकवचनान्तम् 'स्रोर्विं०' ॥ अदसो दकारस्य सौ परे सो भवति । अनेन दस्य सः । असस् इति स्थिते ॥ ४९ ॥

(प्र०) सौ इति । अत्र त्यदादेरित्यनुवृत्तावपीदमो दस्य सावसम्भवाददस इत्युक्तम्४९॥

सेरौ ॥ अदसः सेरौकारादेशो भवति ॥ असौ ॥ ५० ॥

(च०) सूत्रम्–'सेरौ' सेः इति सिशब्दस्य षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' 'स्रोर्विं०' औ प्रथमैकवचनान्तम् । सांकेतिकम् । 'नामिनो रः' 'स्वरहीनं०' ॥ अदसः सम्बन्धिनः सेः औकारो भवति । अनेन सिस्थाने औ । 'ओ औ औ' असाविति सिद्धम् ॥५०॥

द्विवचने अदस् औ इति स्थिते ॥ 'दस्य मः' ॥ 'ओ औ औ' अमौ इति स्थिते ॥ मादू ॥ उश्च ऊश्च ऊ । अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारादेशो भवति दीर्घस्य च दीर्घ ऊकारादेशो भवति ॥ अमू ॥ बहुवचने सर्वादित्वात् 'जसी' दस्य मः 'अ इ ए' अमे इति स्थिते ॥ ५१ ॥

( च० ) द्विवचनादौ 'त्यदादेष्टेर:०' इति सर्वत्राकारे कृते 'दस्य मः' अम औ इति स्थिते 'ओ औ औ' इति सूत्रम्–'मादू' मात् पञ्चम्येकवचनम् । 'ङसिरत्' 'सवर्णे दीर्घः०' उश्च उश्च ऊ प्रथमैकवचनान्तं सांकेतिकम् । 'चपा अबे०' सिद्धम् । अदसो मकारात्परस्य ह्रस्वस्वरस्य उकारो भवति दीर्घस्य च दीर्घ उकारो भवति । अनेन अमौ इत्यस्यौकारस्य दीर्घत्वात् ऊकारः । अत्र पूर्वं विभक्तिकार्यं पश्चात् 'मादू' । टास्थाने तु पूर्वम् 'मादू' पश्चाद्विभक्तिकार्यमिति विवेकः । अमू ॥ ५१ ॥

( प्र० ) मादू उ इति विगृह्य व्याचष्टे । उश्च ऊश्चेति । आदेशयोरेकमात्रद्विमात्रत्वान्मात्परत्वादेशिनावपि एकमात्रद्विमात्रौ ग्राह्यौ । ततश्चान्तरतमत्वादेकमात्रस्यैकमात्रः उः । द्विमात्रस्य च द्विमात्र इत्यर्थः ॥ ५१ ॥

एरी बहुत्वे ॥ एः ई बहुत्वे । बहुत्वे सति मकारात्परस्य अदस एकारस्य ईकारादेशो भवति ॥ अमी । अमुम् अमू अमून् ॥ मत्वोत्वे कृते । 'टा नाऽस्त्रियाम्' अमुना अमूभ्याम् अमीभिः । अमुष्मै । अमूभ्याम् अमीभ्यः । अमुष्मात् अमूभ्याम् अमीभ्यः । अमुष्य अमुयोः अमीषाम् । अमुष्मिन् अमुयोः । अमीषु ॥ ५२ ॥

(च०) बहुत्वे बहुवचने सर्वादित्वात्'जसी' 'अ इ ए' अमे इति स्थिते सूत्रम्—'एरी बहुत्वे' एः षष्ठ्येकवचनान्तम् 'स्रोर्विं०' । ई प्रथमैकवचनान्तं सांकेतिकम् । 'नामिनो रः' स्वरहीनं०' । बहुत्वे सप्तम्येकवचनान्तम् । बहुत्वे बहुवचने सति अदस्शब्दस्य मकारात्परस्य एकारस्य ईकारो भवति । अनेन एकारस्य ईकारः । अमी । मकारात्परस्येति चेन्न व्याक्रियते तदा अमुकः अमुकौ अमुके इति न सिध्यति । असि 'अमुशसोर०

स्य' 'मादू' इत्यकारस्य उकारः । मोऽनुस्वारः' अमुमिति सिद्धम् । द्विवचनं प्रथमाद्वि-वचनवत् । बहुत्वे 'अमूशसोरस्य' 'सो नः पुंसः' 'शसि' 'मादू' अमून् इति सिद्धम् । टाविषये 'मादू' अस्य उः । अमु ततः 'टानाऽस्त्रियाम्' अमुना । द्विवचने 'अद्भि' इत्या-त्वम् पश्चात् 'मादू' इत्याकारस्य दीर्घत्वादूकारः अमूभ्यामिति सिद्धम् । एवं चतुर्थीप-ञ्चमीद्वित्वेऽपि । तृतीयाबहुवचने 'भिस्भिस्' इति वचनात् 'ए भिस बहुत्वे' 'एरी बहुत्वे' अमीभिः । एवं चतुर्थीपञ्चमीबहुवचने । चतुर्थ्येकवचने 'सर्वादेः स्मट्' 'मादू' 'किलात्पः सः' 'ए ऐ ऐ' अमुष्मै । पञ्चम्येकवचने 'ङसिरत्' 'अतः०' इति स्मडागमः । 'सवर्णे०' 'मादू' 'स्वरहीनं०' 'किलात्पः सः०' अमुष्मात् । षष्ठ्येकवचने 'ङस्य' 'मादू' किलात्पः सः०' अमुष्य । षष्ठीसप्तम्योर्द्विवचने ओसि अकारस्य एकारः । 'ए अय्' 'मादू' 'स्वरही-नं०' । आमि 'सुडामः' 'ए भिः बहुत्वे' 'एरी बहुत्वे' 'किलात्पः सः' अमीषाम् । सप्तम्ये-कवचने 'ङि स्मिन्' 'मादू' किलात्पः सः०' अमुष्मिन् । सुपि 'ए भिस बहुत्वे' 'एरी-बहुत्वे' 'किलात्पः स०' अमीषु । त्यदादित्वाद्धेरभावः । सम्बोधनं न भवतीत्यर्थः ॥९१॥

( प्र० ) एरीति । अत्रापि मादित्यनुवृत्तेरमुके इत्यत्र मत्वे च कृत इति वक्तव्यमे-तत् । अन्यथा एवंविधनियामकाभावात् ॥ ९२ ॥

**सामान्ये अदसः कः स्यादिवच्च** ॥ सामान्येऽर्थे वाच्ये सति अदस्शब्दात्परः कः प्रत्ययो भवति स स्यादिवज्ज्ञेयः(क) ॥ 'त्यदादेष्टेः स्यादौ' दस्य मः' 'मादू' अमुकः अमुकौ अमुके । अमुकम् अमुकौ अमु-कान् । अमुकेन अमुकाभ्याम् अमुकः ॥ इत्यादि(ख) ॥ ५३ ॥

इति हसान्तपुंलिङ्गप्रक्रिया ॥ १० ॥

( च० ) पुनर्विशेषमाह—सामान्य इति । सामान्यार्थे विशेषाकथने अज्ञानार्थे अदस्शब्दस्य कप्रत्ययो भवति । स च स्यादिवज्ज्ञेयः । स्यादौ परे यत्कार्यं भवति तत्कार्यं कप्रत्यये परेऽपि भवतीत्यर्थः । तेन 'दस्य मः' 'मादू' इति भवति । स्यादिवच्चेति चकारात्प्रथमैकवचने असकौ इति रूपमिति भवति । पुंसि स्त्रियां च अदसः कः प्रत्ययः स्यादिवत्त्वात् । 'त्यदादेष्टे०' 'दस्य मः' 'मादू' अमुक इति सिद्धम् । ततः स्यादयः । प्रक्रिया सर्वशब्दवत् ॥ इति सान्ताः । इति हसान्तपुंलिङ्गसाधनम् ॥ ९३ ॥

( प्र० ) सामान्ये इति । सामान्ये विशेषाप्रकाशनेऽर्थे अदस्शब्दात्कप्रत्ययो भवति स च स्यादिवत् । सेः सिप्रत्ययस्यादिः प्रकृतिः अदस्शब्दस्तद्वत् । तत्सहितस्याप्यदसो-ऽदस्कार्यं भवतीत्यपि तन्त्रेणार्थः । अथवा सिशब्देन सकार उपलक्ष्यते ततश्च सेः सकारस्य आदिवदिति स्यादिवत् सकारात्पूर्वं भवतीत्यर्थः । ततश्च तन्मध्ये पतितस्तद्ग्रहणेन ग्राह्य

( क ) एकस्योच्चारणेन बह्वर्थो लभ्यते तत्सामान्यम् ।

( ख ) शेषं सर्वशब्दवद्रूपं ज्ञेयम् । चकारात्सात्परस्यौत्वम् तेन 'त्यदादेष्टेः' सौ सः 'मादू' अमुकः इत्यादि ॥ इत्यपि भवति ॥ इति अधिकः पाठः ।

इति कप्रत्ययसहितस्य सेरौ सौ स इत्यादिकार्यं। वस्तुतः स्यादिवदित्येत्र पाठः। असकौ इति स्त्रीपुंसयोः। नपुंसके अदक इति सेरौ इत्यत्र ह्रस्वो वेत्यतो मण्डूकप्लुत्या वानुवृत्तेः कप्रत्ययसहितस्य वा औत्वाभावपक्षे च स्यादिवच्चेति चकारादधिकार्थात्सात्परस्यौत्वे अमुकः। केचित्तु कप्रत्ययस्य स्यादित्वातिदेशात्कप्रत्ययेऽपि त्यदाद्यत्वमत्वोत्वादि भवति। व्यवधानाच्च न सत्वौत्वेऽत एव चामुकशर्मेत्यादिप्रयोगसिद्धिरित्याहुः। तदसत् पाणिनि-विरोधात्(ढ)। अमुकस्मै। अमुकस्मादित्यादिषु कप्रत्ययसहितस्य सर्वादिकार्याभावप्रस-ङ्गाच्च अमुकशर्मेत्यादि तु पृथक् शब्दत्वादेव ॥ ९३ ॥

इति सारस्वतप्रसादे हसान्ताः पुँल्लिङ्गाः ॥ १० ॥

---

## * हसान्ताः स्त्रीलिंगाः ॥ ११ ॥ *

अथ हसान्ताः स्त्रीलिङ्गाः प्रदर्श्यन्ते ॥ तत्र हकारान्त उपनिह्शब्दः ॥

**नहो धः** ॥ नहो हकारस्य धकारादेशो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च। 'वावसाने' उपानत्-उपानद् उपानहौ उपानहः। हेउपानत्-हेउपानद् हेउपानहौ हेउपानहः। 'खसे चपा झसानाम्' उपानत्सु ॥ १ ॥

( च० ) अथ हसान्तस्त्रीलिङ्गे किञ्चिच्छब्दसाधनं लिख्यते। हकारान्त उपानह्शब्दः पादत्राणार्थवाचकस्तस्य स्वरादौ 'स्वरहीनं०' 'हो ढः' इति ढत्वप्राप्तौ तदपवादार्थं रसे पदान्ते च विशेषमाह—सूत्रम्—'नहो धः' नहः षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'स्रो-विं०'। धः प्रथमैकवचनान्तम्। 'स्रोविं०' हबे' 'उ ओ' सिद्धम्। वृत्तिः कण्ठ्या। अनेन रसे पदान्ते हस्य धः। सौ धौ च धत्वे कृते 'हसेपः०' 'वावसाने' धकारस्य वा तकारद-कारादौ भकारादौ 'झबे जबाः' धस्य दः। 'स्वरहीनं०'। सुपि—'खसे चपा झसानाम्' धस्य तः। 'स्वरहीनं०' शेषं कण्ठ्यम्। गोधुकप्रभृतयः पुंलिङ्गवत् ज्ञेयाः। इति हान्ताः॥ यकारान्ता अप्रसिद्धाः ॥ १ ॥

( प्र ) नह इति। इति धातोश्च झस इत्यधिकारादवनद्धमित्यादावपि उपनह्यत इत्युपानत्। दिव इति। अधावित्यनुवृत्त्यभावात् हे द्यौः ॥ १ ॥

वकारान्तो दिव्शब्दः ॥ **दिव औ** ॥ दिवः औ। दिवो वकारस्य औकारादेशो भवति सौ परे ॥ 'इ यं स्वरे' द्यौः दिवौ दिवः। हेद्यौः। हे-दिवौ। हेदिवः। दिवम् ॥ **वाम्या**। दिवो वकारस्य वा आत्वं भवति अमि परे। द्याम् दिवम्। दिवौ। दिवः। दिवा ॥ २ ॥

---

(ढ) विरोधादिति। पाणिनि मते हि "अदक" इत्येव स.कचकोऽदस् शब्दः। 'अमुक'शब्दश्च अदस शब्दार्थकः तस्माद्भिन्न एवेत्याह।

अत एव प्रायो श्राद्धयज्ञकर्मादौ "अदक" शब्दमेव व्याहरन्ति याज्ञिकाः। यथा;—"अदकशर्मणे पित्रे इमं पिण्डं स्वधा" इति।

( च० ) वकारान्तो दिव्शब्दः स्वर्गाकाशवाचकस्तस्य नामसंज्ञायां स्यादयः । दिव् स् इति स्थिते सूत्रम्—'दिव औ सौ' दिवः षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विसर्गः' । औ प्रथमैकवचनान्तं सांकेतिकम् । 'आदेशे लोपश्' । साविति सिशब्दस्य सप्तम्येकवचनम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' । दिव इति षष्ठ्या निर्दिष्टत्वाद्दिव्शब्दःसम्बन्धिनो वकारस्य औकारो भवति सौ परे । अनेन सौ धौ च धस्य औकारः । 'इ यं स्वरे' 'स्वरहीनं०' 'स्रोर्वि०' द्यौः । एवं हे द्यौः । वर्णविधौ नेदमिति 'यदादेशस्तद्वद्भवति' इति सिलोपो न । द्वित्वे बहुत्वे च 'स्वरहीनं०' । अमि विशेषः । सूत्रम्—'वाम्या' वा प्रथमैकवचनान्तम् । 'अव्यया०' । अम् शब्दस्यामि इति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' 'सवर्णे०' । आ प्रथमैकवचनान्तम् । सांकेतिकम् । 'इ यं स्वरे' त्रिपदम् । दिवो वकारस्य अमि परे वा आत्वं भवति । अनेन अम्विषये वा वकारस्य आकारः । 'इ यं स्वरे' 'स्वरहीनं०' द्याम् । पक्षे दिवम् अग्रे स्वरादौ सर्वत्र स्वरहीनं०' ॥ २ ॥

**उ (ऊ) रसे ॥** दिवो वकारस्य उकारादेशो भवति रसे पदान्ते च । द्युभ्याम् । द्युभिः । दिवे । द्युभ्याम् । द्युभ्यः । दिवः । द्युषु ॥ ३ ॥

(च०) हसादौ तु विशेषः । सूत्रम्–'उ रसे' उ प्रथमैकवचनान्तं सांकेतिकम् । रसे सप्तम्येकवचनान्तं । 'अ इ ए' दिवो वकारस्य रसे परे उकारो भवति ॥ यद्वा 'उरसे' उ प्रथमैकवचनान्तम् । उ सप्तम्येकवचनम् । रसे सप्तम्येकवचनान्तम् । त्रिपदं सूत्रं पठन्ति । तेन रसे परे उवर्णेऽपि परे उकारो भवति । द्यूषितः दिवि उषितः ॥ एवं दिवं ऊर्णोति आच्छादयतीति द्यूर्णुत ॥ अनेन भकारादौ सुपि च वकारस्य उकारः । 'इ यं स्वरे' 'स्वरहीनं०' द्युषु । 'उ रसे' ततः 'किलात्षः सः०' ॥ इति वान्ताः ॥ ३ ॥

( प्र० ) उरसे इति ॥ उश्च रसश्च उरसं तस्मिन् । वसोर्वा उमित्यत उमित्यनुवर्तते ततश्च द्यूषित इत्यादि । केचित्तु ऊरसे इति पेठुः । सूत्रे उ उरसे इति छेदः । रहस्य.हसोपलक्षणात् उ उ इति योगविभागाद्वा द्युहय इत्यादौ हकारेऽपि उत्वम् ॥ ३ ॥

रेफान्तश्चतुर्शब्दो बहुवचनान्तः ॥ **त्रिचतुरोः स्त्रियां तिसृचतसृवत् ॥**(क) त्रिचतुरोः स्त्रियां तिसृचतसृ । ऋवदित्यव्ययम् । स्त्रियां वर्तमानयोस्त्रिचतुर्शब्दयोस्तिसृ चतसृ इत्येतावादेशौ भवतः ऋकारश्च ऋवत् ॥ ततः 'स्तुरार्' इत्यार् न भवति । 'ऋ रम्' तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः ॥ ४ ॥

( च० ) रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तस्तस्य च स्त्रियां विशेषः । सूत्रम्—

---

( क ) स्त्रियामिति त्रिचतुरोर्विशेषणात्स्त्रियां गौणयोर्नैतावादेशौ स्तः । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः प्रियत्री प्रियत्रयः । बुद्धिवत् । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदादेशौ स्त एव । प्रियास्तिस्रो यस्य सः प्रियतिसा । सेरा प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रम् प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रा प्रियतिसृभ्याम् प्रियतिसृभिः । प्रियतिसृषु ॥ क्लीबे प्रियास्तिस्रो यस्य तत्प्रियतिसृ प्रियतिसृणी प्रियतिसृणि ॥ एवं प्रियाश्चतस्रो यस्य सः प्रियचतस्रा प्रियचतस्रौ प्रियचतस्रः । क्लीबे । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि

'त्रिचतुरोः स्त्रियां तिसृचतसृवत्' ॥ त्रिश्च चतुर् च त्रिचतुरौ तयोः षष्ठीद्विवचनान्तम्। 'स्वरहीनं०' 'स्रो०'। स्त्रियामिति स्त्रीशब्दस्य सप्तम्येकवचनान्तम्। 'स्त्रियां योः' 'स्त्री-भ्रुवोः' ङितासट्' 'स्वरहीनं०' 'सवर्णे दीर्घः०' तिसृ च चतसृ च तिसृचतसृ प्रथमाद्विवचनान्तम्। सांकेतिकम्। ऋवत् प्रथमैकवचनम्। 'अव्यया०' 'सवर्णे दीर्घः०' सिद्धमिदं सूत्रम्। स्त्रियां वर्तमानौ यौ त्रिचतुर्शब्दौ तयोस्तिसृचतसृ इत्येतावादेशौ क्रमाद्भवतः। त्रिशब्दस्य तिसृ, चतुर्शब्दस्य चतसृ, ऋकारश्च ऋकारवत्, ऋकारेण तुल्यो ज्ञेयः। ततो दीर्घत्वाज्जसि 'स्तुशरः' इति सूत्रेण आर् न भवति। सप्तस्वपि वचनेषु त्रिशब्दस्य तिसृ आदेशः चतुर्शब्दस्य चतसृ आदेशः। जसि शसि च 'ऋरम्' 'स्वरहीनं०' 'स्रोर्वि०' ॥४॥

(प्र०) त्रिचतुरोः स्त्रियां तिसृ चतसृ। ऋऋवदिति छेदः। स्त्रियामिति त्रिचतुरोर्विशेषणम्। स्त्रीवाचकयोरित्यर्थः। ततश्च प्रियास्तिस्रश्चतस्रो वा यस्यासौ प्रियतिसा प्रियचतसेत्यादौ पुंस्यपि स्त्रीवाचकत्वाद्भवत एवादेशौ। प्रियास्त्रयस्त्रीणि वा चत्वारः चत्वारि वा यस्याः सा प्रियत्रिः प्रियचत्वा इत्यादौ त्रिचतुरोः स्त्रीवाचकत्वाभावात्स्त्रियामपि नादेशौ। ततः स्तुरार् इत्यार् न भवतीति ऋतो ड उरित्यतः ऋत इत्यनुवृत्तेस्तस्य च तपरत्वेन तावन्मात्रग्राहकत्वादस्य च ऋकारातिदेशात् स्तुरार् इति सूत्रेण आर् न भवतीत्यर्थः। अपवादनिवृत्तावुत्सर्गसिद्धिरिति अर् अपि तुल्यन्यायत्वान्न अम्शसोरस्य सो नः पुंसः इत्यत्रानेकार्थः समानानुवृत्तेस्तिसृचतसृभ्यां शसोऽल्लोपो नत्वं च न ॥ ४ ॥

**न तिसृचतसृ नामि दीर्घः** ॥ तिसृ चतसृ इत्येतयोर्नामि दीर्घो न भवति। छन्दसि वा। तिसृणां तिसॄणाम्। तिसृषु ॥ चतस्रः। चतस्रः। चतसृभिः। चतसृभ्यः। चतसृभ्यः। चतसृणाम्-चतसॄणाम्। चतसृषु ॥५॥

(च०) आमि नुडागमे कृते विशेषः सूत्रम्—'न तिसृचतसृ नामि दीर्घः' ॥ न प्रथमैकवचनान्तम्। 'अव्यया०'। तिसृचतसृ षष्ठीद्विवचनान्तम्। सांकेतिकम्। नामि सप्तम्येकवचनान्तम्। 'स्वरहीनं०'। दीर्घः प्रथमैकवचनान्तम्। 'स्रोर्वि०' छन्दसि सप्तम्येकवचनान्तम् ' वा प्रथमैकवचनान्तम्। तिसृचतसृ इत्येतयोरिति। स्त्रीलिङ्गे वर्तमानयोस्त्रिचतुर्शब्दयोर्नामि परे दीर्घो न भवति छन्दसि तु वा भवति। वेदे तु तिसॄणां तिसृणां चतसॄणां चतसृणामिति रूपे भवतः। अन्यथा तिसृणां चतसृणामित्येव। इपि 'क्विलात्पः सः०' ॥ ५ ॥

(प्र०) दीर्घं ऋकारान्तादेशमपहाय तदतिदेशादामि नुट्। तथा गौणत्वेऽपि अम्शसोरस्य ऋतो ड उः डौ सो नः पुंस इत्यादि न सेरा घेरर् इत्यादि च भवति ॥ ५ ॥

रेफान्तो गिर्शब्द ॥ **य्वोर्वि हसे** ॥ धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः ॥ गीः गिरौ गिरः। हेगीः हेगिरौ हेगिरः। गिरम् गिरौ गिरः। गिरा गीर्भ्याम् गीर्भिः ॥ एवं पुर्धुरादयः ॥ ६ ॥

(च०) रेफान्तो गिर्शब्दः गिरत्यनयेति गीः। गॄ निगरणे क्विप्प्रत्ययः। क्विप्लोपः। 'ऋत इर्' गिर् इति जातम्। तस्य स्वरादौ सर्वत्र 'स्वरहीनं०' ॥ हसादौ तु

विशेषः सूत्रम्—'र्वोर्वि हसे' । इश्च उश्च यू तयोः र्वोः षष्ठीद्विवचनान्तम् । 'इ यं स्वरे' 'उ वम्' 'स्वरहीनं०' 'स्वोर्वि०' । र् च व् च व् तस्मिन् विं सप्तम्येकवचनान्तम् । 'स्वरहीनं०' पश्चात् नामिनो रः' 'रि लोपो दीर्घश्च' । हसे सप्तम्येकवचनान्तम् । 'अ इ ए' ॥ धातुसम्बन्धिनोरिकारोकारयोर्दीर्घो भवति रेफवकारयोः परयोः सतोः । किंविशिष्टयोः रेफवकारयोः ? हसपरयोः हसपरोऽग्रे वर्तमानो याभ्यां तौ हसपरौ तयोः । अनेन हसादौ दीर्घः । गि इत्यस्य गीः 'हसेपः से०' स्वोर्वि०' हे गीः । गीर्भ्यां गीर्भिः गीर्भ्यः गीर्भ्यः गीःषु इत्यादि रूपमवसेयम् । शेषं कण्ठ्यम् । एवं पुर्धुरादयः । उकारस्य दीर्घत्वे ऊकारः शेषं गिर्शब्दवत् । पूः पुरौ पुरः । पुरा पूर्भ्यां पूर्भिरित्यादि । धूः धुरौ धुरः इत्यादि ॥ ६ ॥

( प्र० ) र्वोरिति । इश्च उश्च यू तयोः र् च व् च व् तस्मिन् । सिलोपेऽपि प्रत्ययलोपे प्रत्ययलक्षणमिति दीर्घः । र्वोरिति योगविभागात्छपीः छपिसौ इत्यादौ सेर्लोपे सत्यविसर्गेऽपि इकारस्य दीर्घः । दोषामिति रेफादेशो वा ॥ ६ ॥

धकारान्तः समिध्शब्दः । 'वावसाने' समित्–समिद् समिधौ समिधः । हेसमित्-हेसमिद् हेसमिधौ हेसमिधः । समिधम् समिधौ समिधः । समिधा समिद्भ्याम् समिद्भिः । 'खसे चपा झसानाम्' समित्सु ॥

( च० ) धकारान्तः समिध्शब्दः इन्धनार्थवाचकः । तस्य सौ धौ च 'हसेपः०' इति सिलोपे कृते 'वावसाने' धस्य वा तकारदकारौ । समित् समिद् । भकारादौ 'झबे जबाः' धस्य दः । 'स्वरहीनं०' । सुपि 'खसे चपा झसानाम्' धस्य तः 'स्वरहीनं०' समित्सु ॥ शेषं सुकरम् ॥ एवं वीरुध्क्षुध्शब्दौ ॥

भकारान्तः ककुभ्शब्दः । वावसाने । ककुप्-ककुब् ककुभौ ककुभः । हेककुप् हेककुब् हेककुभौ हेककुभः । ककुभम् ककुभौ ककुभः । ककुभा ककुब्भ्याम् ककुब्भिः । ककुप्सु ॥

( च० ) भकारान्तः ककुभ्शब्दः दिग्वाचकः । तस्य समिध्शब्दवत्प्रक्रिया । अवरम् । 'वावसाने' इति जबत्वे बः, चपत्वे तु पः । ककुप्-ककुब् । ककुब्भ्यां 'झबे जबाः' । ककुप्सु । 'खसे चपा०' इत्यादि

जकारान्तः स्रज्शब्दः । 'दिशाम्' इति कत्वम् । स्रक्-स्रग् स्रजौ स्रजः । स्रजं स्रजौ स्रजः ॥ एवं रुक् रुग् रुजौ रुजः ॥

दकारान्तास्त्यदादयः । 'त्यदादेष्टेरः स्यादौ' इति सर्वत्राकारः । 'आबतः स्त्रियाम्' इति आप् । मकारः सिलोपार्थः । सवर्णदीर्घत्वे कृते स्त्रीलिङ्गे सर्वाशब्दवद्रूपं ज्ञेयम ॥ 'स्तः' स्या । 'औरी' 'अ इ ए' त्ये त्याः ॥ सा ते ताः ॥ या ये याः ॥ एषा एते एताः ॥ एतां-एनाम् एते-एने एताः-एनाः । एतया-एनया । एतयोः-एनयोः ॥ का के काः ॥

( च० ) दकारान्ताः शरद् सम्पद् आपद् परिषद् प्रतिपद् दृषद् संसद् उपनिषद् प्रभृतयः ॥

त्यदादीनां विशेषः। दकारान्तास्त्यद् तद् यद् एतद्शब्दास्तेषां 'त्यदादेष्टेः' इत्यकारे कृते 'आबतः स्त्रियाम्' इति वक्ष्यमाणसूत्रेण आप्प्रत्ययः। आप् इति पकारः 'आपः' इति सूत्रेण सिलोपार्थः। ततः 'सवर्णे दीर्घः सह' इति दीर्घे कृते सिविषये 'स्तः' इति तस्य सः। साधना सर्वाशब्दवत्। स्या स्ये स्याः। एवं तद्। सा 'आपः'। ते 'औरी'। ताः 'सवर्णे०' 'सोर्वि०'। ताम्—'अम्शसोरस्य' 'मोऽनुस्वारः'। ते 'औरी'। ताः 'अम्शसोरस्य'। तया 'टौसोरे' 'ए अय्'। ताभ्यां ताभिः। तस्यै 'ङितां यट्' 'यटोच्च' इति छट्। पूर्वस्य अकारः 'स्वरहीनं' 'ए ऐ ऐ'। ताभ्यां ताभ्यः। तस्याः 'ङितां यट्' 'यटोच्च'। तस्याः 'ङितां यट्' 'यटोच्च'। तयोः 'टौसोरे' 'ए अय्' 'स्वरहीनं०'। तस्याम् 'आम् ङेः' 'ङितां यट्' 'यटोच्च' 'स्वरहीनं०' 'मोऽनुस्वारः'। तयोः तासु। त्यदादित्वात्सम्बोधनाभावः। एवं या ये याः॥ एतच्छब्दस्य सादिकं पुंवत्। 'स्तः' 'क्रिलात्षः सः०' एषा एते एताः। 'एतदोऽन्वादेशे द्वितीयादौ एनौ वा वक्तव्यः'। एतां-एनां एते एने एताः-एनाः। एतया-एनया। एतयोः-एनयोः इति विशेष इत्यादि ज्ञेयम्॥

एवं मकारान्तः किम्शब्दोऽपि सर्वाशब्दवत्। 'त्यदादेष्टेः स्यादौ' 'आबतः स्त्रियाम्' का के काः। इदम्शब्दस्य सौ विशेषः। इदम् प्रथमैकवचने॥

इदम्शब्दस्य भेदः॥ इयं स्त्रियाम्॥ इदम्शब्दस्य स्त्रियामियं भवति सिसाहितस्य। इयं इमे इमाः। इमां-एनाम् इमे-एने इमाः-एनाः। अनया आभ्याम् आभिः। अस्यै आभ्याम् आभ्यः। अस्याः आभ्याम् आभ्यः। अस्याः अनयोः-एनयोः आसाम्। अस्याम् अनयोः-एनयोः आसु॥ ७॥

( च० ) सूत्रम्—'इयं स्त्रियाम्'॥ इयं प्रथमैकवचनान्तम्। 'हसेपः से०' 'मोऽनुस्वारः'। स्त्रियामिति स्त्रीशब्दस्य सप्तम्येकवचनान्तम्। 'स्त्रियां योः' 'स्त्रोश्रुवोः' 'ङितामट्' 'स्वरहीनं०' 'सवर्णे०'॥ इदम्शब्दस्य सौ परे इयम् आदेशो भवति गुरुत्वात्सदेस्य। अनेन इयम्। 'हसेपः से०' 'मोऽनुस्वारः'॥ अग्रे द्वितीयाबहुत्वं यावत्। 'त्यदादेष्टे०' अत्वे कृते। 'दस्य मः' इति मत्वे कृते 'आबतः स्त्रियाम्' 'सवर्णे दीर्घः०' गङ्गाशब्दवत्। तृतीयादौ 'त्यदादेष्टे०' इति सर्वत्र अकारः। टावचने 'ओसि च' 'अनटौसोः' अनादेशे कृते। 'आबतः स्त्रियाम्' 'टौसोरे' 'ए अय्' 'स्वरहीनं०' अनया अनयोः। भकारादौ सुपि च 'स्म्यः' इत्यकारे कृते। 'आबतः स्त्रियाम्' आभ्याम् आभिः आसु इत्यादि। ङेङसिङस्ङिषु 'आबतः स्त्रियाम्' 'ङितां यट्' 'यटोऽच्च' 'स्म्यः' अस्यै अस्याः। सप्तम्येकवचने 'आबतः स्त्रियाम्' 'आम्ङेः' 'ङितां यट्' 'यटोच्च' 'स्म्यः' 'स्वरहीनं०' अस्याम्। आमि 'सुडामः' 'आबतः स्त्रियाम्' 'स्वरहीनं०' 'मोऽनुस्वारः' आसाम्। शेषं सुगमम्॥ ७॥

(प्र०) इयमिति। आदेशविधानसामर्थ्यात्त्यदाद्यत्वाभावः। हसान्तत्वात्सिलोपः। आभ्यामित्यादावकारादेशे आप्। प्रातिपदिकन्यायेनादसहितस्य त्वकारादेशे अद्वीत्यत्रा-

दिति योगविभागाद्दात्वेनेष्टसिद्धिः (क) ॥ ७ ॥

चकारान्तस्त्वचूशब्दः । 'चोः कुः' इति कुत्वम् । 'वावसाने' त्वक्-त्वग् त्वचौ त्वचः । हेत्वक्-हेत्वग् हेत्वचौ हेत्वचः । त्वचम् त्वचौ त्वचः । त्वचा त्वग्भ्याम् त्वग्भिः । त्वक्षु ॥ एवं ऋच्वाच्प्रभृतयः ॥

( च० ) चकारान्तस्त्वचूशब्दस्तस्य रसे पदान्ते च 'चोः कुः' इति चस्य कः । सौ धौ च 'हसेपः से०' इति सिलोपे कृते चस्य कत्वे कृते 'वावसाने' वा कस्य गकारः । त्वक्-हेत्वग् । हेत्वक्-त्वग् । भकारादौ तु कत्वे 'झबे जबाः' कस्य गः 'स्वरहीनं०' त्वग्भ्यां त्वग्भिरित्यादि । छपि 'चोः कुः' क्विलात्षः सः 'कषसंयोगे क्षः' । त्वक्षु । स्वरादौ तु सर्वत्र 'स्वरहीनं०' त्वचौ त्वचः । एवम् ऋच्वाच् स्रुच् प्रभृतयोऽपि चकारान्ता ज्ञेयाः । ऋक् ऋग् ऋचौ ऋचः ॥ वाक्-वाग् वाचौ वाचः इत्यादि ॥

तकारान्तायोषित् सरित् तडित् विद्युत् प्रभृतयः ॥

पकारान्तोऽप्शब्दो नित्यं बहुवचनान्तः स्त्रीलिङ्गः । 'न्सम्महतोऽधौ दीर्घः शौ च' । आपः अपः ॥ भि द्पाम् ॥ भि द् अपाम् । अबादीनां भकारे परे दत्वं भवति ॥ आद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु । हे आपः(ख) ॥ ८ ॥

( च० ) पकारान्तः अप्शब्दो नित्यं बहुवचनान्तः । स्त्रीलिङ्गे अप् अस् इति स्थिते सति । 'न्सम्महतो०' इति दीर्घः । 'स्वरहीनं०' आपः । शसि पञ्चस्विति विशेषणान्न दीर्घः किंतु 'स्वरहीनं०' 'सोर्वि०' अपः । भकारादौ विशेषः । सूत्रम्—'भि द्पाम्' । भि सप्तम्येकवचनान्तम् 'स्वरहीनं०' । द् प्रथमैकवचनान्तम् 'हसेपः०' । अपामिति अप्शब्दस्य षष्ठीबहुवचनान्तम् । 'स्वरहीनं 'मोऽनुस्वारः'॥ त्रिपदम् ॥ अबादीनामित्युक्तः पाठः(ग) । किंतु अप्शब्दस्य अप्शब्दसम्बन्धिनः पकारस्य स्यादौ भकारे परे दकारो भवति । सूत्रे अपामिति बहुवचनमप्शब्दस्य बहुवचनान्तत्वज्ञापकम् । अनेन पस्य दः । अद्भिः अद्भ्यः अद्भ्यः । आमि छपि च 'स्वरहीनं०' अपाम् अप्सु ॥ ८ ॥

( प्र० ) भिद्पामिति । अपामिति बहुवचनान्तनिर्देशान्नित्यबहुवचनान्तस्यैव दत्वं स्यान्न गौणत्वे अत उक्तमबादीनामिति । तस्य तदुत्तरपदस्य चेति तदुत्तरप्रभृतीनामपि भवतीति भावः । षष्ठीनिर्दिष्टत्वादन्तस्य ॥ ८ ॥

शकारान्तो दिशशब्दः ॥ दिशां कः ॥ दिश् दृश् स्पृश् इत्यादीनां

---

( क ) प्रातिपदिकन्यायेनेति । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायेनेत्यर्थः ।

(ख) अबादीनामित्यादिग्रहणं गौणत्वेऽपि दत्वार्थम् । अप्शब्दस्य पञ्चसु यद्रूपं तद स्वप्शब्दस्य रूपम् ।

( ग ) अबादीनामित्यत्र अपः पाठे अप्शब्दस्यैव वक्तव्ये अपामित्यत्र बहुवचनात् अप् स्वप् बह्वप एते भाषाः । स्वाम्पि तडागानि । बह्वाम्पि तडागानि । शोभना आपो यस्मिन् प्रदेशे स्वाप् स्वापौ स्वापः इत्योप् इत्यादि ॥

रसे पदान्ते च कुत्वं भवति(क) ॥ वावसाने दिक्-दिग् हेदिक्-हेदिग्। दिशौ दिशः। दिशम् दिशौ दिशः। दिशा दिग्भ्याम् दिग्भिः। दिशे। कत्वम्। 'क्लिलात्' दिक्षु ॥ ९ ॥

(च०) शकारान्तो दिशशब्दस्तस्य रसे पदान्ते च विशेषः। सूत्रम्—'दिशां कः दि-शां षष्ठ्येकवचनान्तम्। 'स्वरहीनं०' 'मोऽनुस्वारः'। कः प्रथमैकवचनान्तम्। 'स्रो०' ॥ दिश् दृश्स्पृश् दधृष् ऋत्विज् स्रज् उष्णिह् अञ्च् युज् असृज् इत्यादीनां पकारस्य अन्तस्य च कत्वमित्यर्थः। रसे परे पदान्ते च। शेषं कण्ठ्यम्। अनेन रसे पदान्ते च शस्य कः 'वावसाने' स्वच्छशब्दवत् प्रक्रिया। ततः दिक् दिग् हे दिक् हे दिग् दिशौ दिशः दिग्भ्यां दिग्भिः दिशाम्। 'झबे जबाः' दिक्षु। 'दिशाम्' इति कत्वं 'क्लिलात्पः सः०' 'कषसंयोगे क्षः इत्यादि ॥ एवं दृक्प्रभृतयः दृक्-दृग् दृशौ दृशः ॥ मर्मस्पृक्-मर्मस्पृग् मर्मस्पृशौ मर्म-स्पृशः। ऋत्विक्-ऋत्विग् ऋत्विजौ ऋत्विजः ॥ दधृक्-दधृग् दधृषौ दधृष इत्यादयः ॥ ९॥

(प्र०) दिशाम्। चोः कुरित्यतः कुरित्यनुवर्तते। बहुवचनात्प्रयोगतो दधृषतुः। स्निहप्रभृतयोऽप्यूह्याः ॥ ९ ॥

इति सारस्वतप्रसादे हसान्ताः स्त्रीलिङ्गाः ॥ ११ ॥

---

षकारान्तस्त्विष्शब्दः। 'षो डः' 'वावसाने' त्विट्-त्विड् त्विषौ त्विषः। हेत्विट् हेत्विड् हेत्विषौ हेत्विषः। त्विषम् त्विषौ त्विषः। त्विषा त्विड्भ्याम् त्विड्भिः। त्विट्त्सु त्विट्सु ॥

(च०) षकारान्तस्त्विष्शब्दस्तस्य रसे पदान्ते च 'षोडः' इति डत्वम्। सौ धौ च 'हसेपः' 'वावसाने' डकारटकारौ। त्विट्-त्विड्। हेत्विट्-हेत्विड्। भकारादौ 'षो डः' 'स्वरहीनं०' त्विड्भ्यामित्यादि। सुपि 'षो डः' 'खसे चपाझसानाम्' डस्य टः 'स्वर-हीनं०' त्विट्सु ॥ एवं प्रावृष्विप्रुष्रुष्तृष्शब्दाः ॥

आशिष्शब्दः सजुष्शब्दवज्ज्ञेयः ॥ आशीः आशिषौ आशिषः। हेआशीः हेआशिषौ हेआशिषः। आशिषम् आशिषौ आशिषः। आशिषा आशीर्भ्यां आशीर्भिः। आशीःषु—आशीष्षु। इत्यादि ॥ १० ॥

(च०) आशिष् शब्दः सजुष् शब्दवत् ज्ञेयः। 'दोषांर' इति षस्य रः ॥ 'सजुषाशिषो रसे पदान्ते च दीर्घः'। 'सोर्विसर्गः' आशीः। स्वरादौ 'स्वरहीनं' आशिषौ आशिषः। आशिषम् आशिषौ आशिषः। 'दोषां रः' सजुषाशिषो रसे पदान्ते च दीर्घः। जस्तु० आशीर्भ्याम् आशीःषु। इत्यादि ज्ञेयम् ॥ १० ॥

---

(क) हेदिक् हेदिग्। दृक् दृग् दृशौ दृशः ॥ स्पृक्-स्पृग् स्पृशौ स्पृशः ॥ स्रक्-स्रग् स्रजौ स्रजः ॥ ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः ॥ दधृक्-दधृग् दधृषौ दधृषः ॥ उष्णिक्-उष्णिग् उष्णिहौ उष्णिहः ॥ इति मूलपुस्तके पाठः।

स्त्रीलिङ्गस्यादस्शब्दस्य सौ न विशेषः । असौ । द्विवचनादौ 'त्यदादेष्टेरः स्यादौ' अत्वे कृतेऽनन्तरम्-'आवतः स्त्रियाम्' इत्याप् । 'सवर्णे दीर्घः सह' विभक्तिकार्यं प्राक् पश्चात्-'मादू' अमू अमूः । अमूम् अमू अमूः । अमुया अमूभ्याम् अमूभिः । अमुष्यै अमूभ्याम् अमूभ्यः । अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः अमुयोः अमूषाम् । अमुष्याम् अमुयोः अमूषु इति हसान्तस्त्रीलिङ्गप्रक्रिया ॥

( च० ) सकारान्तस्य अदस्शब्दस्य स्त्रीलिङ्गस्य सौ विशेषो न, सिविषये यथा पुलिङ्गे रूपं तथैवात्रापि । 'त्यदादेष्टे०' इत्यकारः । 'आवतः स्त्रियाम्' 'सौ सः' 'सेरौ' 'ओ औ औ' असाविति सिद्धम् । द्विवचनादौ सर्वत्र टेरत्वे कृते 'दस्य मः' ततः 'आवतः स्त्रियाम्' इत्यादि कृते स्त्रीलिङ्गे सर्वाशब्दवत् विभक्तिकार्ये कृते 'औरी' 'अइए' पश्चात् 'मादू' इति ह्रस्वस्य ह्रस्व उकारः । दीर्घस्य दीर्घ ऊकारः । असौ अमू अमूः । 'सवर्णे दीर्घ०' 'मादू' 'सोर्वि०' अमूम् अमू अमूः । अमुया 'टौसोरे' । अमूभ्याम् 'मादू' । अमुष्यै 'ङितां यट्' 'यटोच्च' पूर्वस्यापोऽकारः । 'क्विलात्षः सः०' 'स्वरहीनं०' 'ए ए ऐ' । अमूभ्याम् 'मादू' । अमूभ्यः । 'मादु' । अमुष्याः अमूभ्याम् अमूभ्यः । अमुष्याः । अमुयोः 'टौसोरे' 'ए अय्' 'स्वरहीनं०' 'मादू' । अमूषाम् 'सुडामः' 'मादू' 'क्विलात्षः सः०' । अमुष्याम् 'आम्ङे' 'ङितां यट्' 'यटोच्च' पूर्वस्यापोऽकारः 'मादू' 'क्विलात्षः सः०' 'स्वरहीनं०' अमुयाः । 'टौसोरे' । अमूषु । 'मादू' 'क्विलात्षः सः०' ॥ अमुका अमुके इत्याद्या ज्ञेयाः ॥ सुमनस् अप्सरस् सुवचस् प्रभृतयः [ पुंवत् ] ज्ञेयाः ॥

इति हसान्तस्त्रीलिङ्गसाधनम् ॥ ११ ॥

---

## * हसान्ता नपुंसकलिङ्गाः ॥ १२ ॥ *

अथ हसान्ता नपुसकलिङ्गाः प्रदर्श्यन्ते ॥

( च० ) अथ हसान्तनपुंसके किंचित्साधनमुच्यते । अथ मुख्यवृत्त्या हकारान्तः शब्दो नास्ति । गौणत्वे तु सुष्टु अनड्वान् यस्य तत् स्वनडुह् शब्दस्य प्रथमैकवचने । 'नपुंसकात्स्यमोर्लुक्' वसां रसे' 'वावसाने' स्वनडुत्-स्वनडुद् स्वनडुही । स्वनड्वांहि 'चतुरनडुहो०' इत्याम् । एवं गोधुक् गोदुंही गोदुहि ॥ अनुपानत् अनुपानद् अनुपानही अनुपानं हि । इत्यादि ॥

रेफान्तो वार्शब्दः । 'नपुंसकात्स्यमोर्लुक्' रेफस्य विसर्गः । वाः । 'ईमौ' वारी । अयम इति विशेषणान्नुम्न भवति । 'जश्शसोः शिः' वारि । हे वाः हे वारी हेवारि । पुनरपि वाः वारी वारि । वारा वार्भ्याम् वार्भिः ।

वार्षु(क) ॥ चतुर्शब्दस्य। 'चतुरनडुहोराम् शौ च' इत्याम्। चत्वारि चत्वारि चतुर्भिः चतुर्भ्यः चतुर्भ्यः। 'रः संख्यायाः' चतुर्णाम् चतुर्षु ॥

( च० ) अथ रेफान्तो वारशब्दस्तस्य 'नपुंसकात्स्यमोर्लुक्' 'सोर्वि०' वाः हे वाः। द्वित्वे तु-'इमौ' 'स्वरहीनं०' वारी हे वारि। जसि च 'जश्शसोः' इति शौ कृते अयम इति विशेषणात् यमप्रत्याहारान्तस्य नुमागमनिषेधत्वान्नुमागमो न भवति। तेन 'स्वरहीनं०' वारि। हेवारि। पुनरपि द्वितियायां वाः वारि वारि। तृतियादौ 'स्वरहीनं०' हसादौ तु जलतुम्बिका०। सुपि 'किलात्पः सः' जलतुम्बि०। वारा वार्भ्यां वार्षु इत्यादयः ॥ चतुर्शब्दस्य बहुवचनान्तस्य 'जसशसोः शिः' इतीकारे कृते। 'चतुराम् शौ च' इत्याम्। 'इवम्' 'स्वरहिनं०' चत्वारि चत्वारि चतुर्भिः चतुर्भ्यः। चतुर्भ्यः। आमि-'रः संख्यायाः' इति नुडागमः। 'ऋवर्णो णो०' 'राघपो द्विः' 'स्वरहीनं०' सुपि-'क्विलात्पः सः०' चतुर्णां चतुर्षु ॥ शेषं कण्ठ्यम् ॥ गौणत्वेऽपि प्रियाश्चत्वारः पुरुषा यस्य तत्-प्रियचतुः प्रियचतुरी प्रियचत्वारि। प्रियाश्चतस्रः स्त्रियो यस्य तत् प्रियचतस्र प्रियचतसृणी प्रियचतसृणि प्रियचतसृणाम् ॥

नकारान्तोऽहन्शब्दः ॥ अह्नः सः ॥ अहन्शब्दस्य नकारस्य सकारो भवति रसे पदान्ते च(ख)। 'नपुंसकात्स्यमोर्लुक्'। 'सोर्विसर्गः' अहः। 'ईमौ'। 'वेङ्योः' अह्नी-अहनी। अहानि ॥ पुनरपि अहः अह्नी-अहनी अहानि। हेअहः हेअह्नी हेअहनी हे अहानि ॥ अह्ना। अहोभ्याम् अहोभिः अह्ने अहोभ्यां अहोभ्यः। अह्नी-अहनि। अहस्सु-अहःसु ॥ १ ॥

( च० ) नकारान्तोऽहन्शब्दः। सूत्रम्—'अह्नः सः' ॥ अह्न इति अहन् शब्दस्य षष्ठ्येकवचनान्तम्। 'अल्लोपः स्वरे०' 'स्वरहिनं' 'स्रोर्वि०' स प्रथमैकवचनान्तम् सो-विसर्गः' ॥ अहन्शब्दस्य सकारो भवति। षष्ठीनिर्दिष्टत्वादन्त्यस्य रसे पदान्ते च। अनेन सौ धौ च अमि च 'नपुंसकात्स्यमोर्लुक् :इति स्यमोर्लोपे कृते। अह्नः स०' इति नकारस्य सकारे कृते 'स्रोर्वि०' अहः। द्विवचने तु 'इमौ' इति इकारे कृते। 'वेङ्योः' इति वा अकारलोपः। 'स्वरहिनं०' 'अह्नी—अहनी'। जस्शस्विषये तु 'जश्शसोः' शिः 'नोपधायाः' 'स्वरहीनं अहानि। यमप्रत्याहारान्तत्वान्न नुम्। स्वरादौ सर्वत्र। 'अल्लोपः अह्ना अह्ने 'स्वरहीनं अहानि। यमप्रत्याहारान्तत्वान्न नुम्। स्वरादौ सर्वत्र। 'अल्लोपः अह्ना अह्ने इत्यादि। भकारादौ-'अह्नः सः इति नकारस्य सकारः 'स्रोर्वि 'हवे' 'उ ओ अहोभ्याम् अहोभिरित्यादि। ङि वचने 'वेङ्योः इति वा अल्लोपः 'स्वरहीनं०' अह्नी-अहनि। सुपि—'अह्नः सः' इति सः। 'स्वरहीनं० अहस्सु ॥ १ ॥

---

( क ) वार्षु इत्यत्र न विसर्गः। दोषामिति सूत्रेण कृतस्यैव रेफस्य सप्तमीबहुवचने परे विसर्गो नान्यस्येति वक्तव्यात् ॥

( ख ) अह्न इति। स्रोर्विसर्ग इत्यतो विसर्ग इत्यनुवर्त्तते। यत्तु—वासुदेवेन 'ससता' विस्यतः सपदुत्वर्स्य समेव व्यधायि; तन्नेति रामाश्रमः, सस्यापि विसर्गविधानावश्यकत्वेन विसर्गविधानस्यौचित्यात्।

वस्तुतस्तु ससस्यैव व्यवहितत्वेन तदनुवृत्तेरनौचित्यम्।

( प्र० ) अयम इति । नुमयम इत्यत्र नपुंसकस्येत्यस्य अयम इति विशेषणादित्यर्थः अह्नः । सस्ताविस्यतः स इति ॥ १ ॥

ब्रह्मन्शब्दस्य रसे पदान्ते च न लोपः । ब्रह्म ब्रह्मणी ब्रह्माणि । पुनरपि ब्रह्म ब्रह्मणी ब्रह्माणि । हे ब्रह्मन् । ब्रह्मणा ब्रह्मभ्याम् ब्रह्मभिः । ब्रह्मणे ब्रह्मभ्याम् ब्रह्मभ्यः । ब्रह्मसु इत्यादि ॥ एवं चर्मन्वर्मन्कर्मन्शर्मन्प्रभृतयः ॥

ब्रह्मन्शब्दस्य 'नपुंसकात्स्यमोर्लुक्' इति सौ अमि च लुप्ते । 'नाम्नो नो०' अधाविति विशेषणात् धौ नस्य लोपो न भवति । ब्रह्म । हे ब्रह्मन् । क्षेमेन्द्राचार्यास्तु सम्बोधनेऽपि वा नकारस्य लोपमिच्छन्ति । तेन हे ब्रह्म इत्यपि स्यात् ॥ प्रक्रियाकौमुद्यां च 'सम्बुधौ वा नपुंसकानां नलोपो वाच्यः" इति ॥ द्विवचने तु—'ईमौ' इति ईकारे कृते । अस्व्युक्तादिति विशेषणादलोपनिषेधः । 'ऋर्नोणो०' 'स्वरहीनं०' ब्रह्मणी । बहुत्वद्वये—'जस्शसोः शिः' 'ऋर्नो णो०' 'स्वरहीनं०' ब्रह्माणि । अग्रे स्वरादौ सर्वत्र 'ऋर्नोणो०' 'स्वरहीनं०' ब्रह्मणा । रसे परे च—'नाम्नो नो०' ब्रह्मभ्यां ब्रह्मभिः । ब्रह्मसु । एवं चर्मन्वर्मन्शर्मन्कर्मन्नर्मन्पर्वन्प्रभृतयः 'अल्लोपः स्वरे' इत्यकारलोपानर्हाः । तथा सामन् दामन् व्योमन् प्रेमन् धामन् हेमन् प्रभृतयो [ अकारलोपार्हाः ] नान्ताः शब्दाः साध्याः । नाम [ नाम्नी ]—नामनि नामानि ॥ एवं दण्डिन् । दण्डि दण्डिनी दण्डिनि ॥

( प्र० ) ब्रह्मन्शब्दस्येति नाम्नो नो लोपशधावित्यनेनेत्यर्थः । अन्यथा ब्रह्मभ्यां ब्रह्मभिरित्यादावह्नीत्यादिप्रसङ्गः । अधाविति निषेधस्य नोक्तमनित्यमिति नाम्नो लोपश्चिति योगविभागाद्वा सम्बुद्धौ नपुंसकानां नलोपो वेति । हे ब्रह्म—हे ब्रह्मन् ॥

नान्तादन्ताच्छन्दसि ङिश्योर्वा लोपो वक्तव्यः ॥ छन्दस्यागमजानागमजयोर्लोपौ च वक्तव्यौ ॥ परमे व्योमन् । सर्वा भूतानि ॥

( च० ) पुनर्विशेषमाह—'नान्तादन्ताच्च छन्दसि ङिश्योर्वा लोपः' 'छन्दसि वेदे' नान्तान्नकारान्तात् अदन्तादकारान्ताच्छब्दात् परयोर्नपुंसकलिङ्गसंबन्धिनोर्ङिश्योर्वा लोपः। ङि सप्तम्येकवचने । शिः 'जश्शसोः शिः' इति एतयोर्वा बहुलं लोपो भवति । यथा। परमे सप्तम्येकवचनान्तम् । व्योमन् सप्तम्येकवचनान्तम् । उभयत्रापि सप्तम्येकवचने ङि । एकत्र 'अ इ ए' अन्यत्र ङिलोपः । छान्दसिकत्वात् 'नाम्नो नो०' इत्यपि न भवति । यद्वा छन्दस्यागमजानागमजयोर्नकारयोर्लोपौ क्वचिद्वक्तव्यौ इति ।। सर्वा इति सर्वशब्दस्य प्रथमाबहुवचनम् । भूतानीति भूतशब्दस्य प्रथमाबहुवचनम् । उभयत्रापि प्रथमाबहुवचने । 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'ऋर्नोणो०' 'स्वरहीनं०' ततः शिलोपः। छान्दसिकत्वाच्च नकारस्यापि लोपो भवति । यद्वा निमित्ताभावे नैमित्तिकस्याप्यभावः। छान्दसत्वादेव दीर्घत्वं तु न निवर्तते । भूतशब्दात्प्रथमाबहुवचने । 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'स्वरहीनं०' परमे प्रकृष्टे व्योमन्नाकाशे सर्वा भूतानि सर्वाणि भूतानि वर्तन्त इत्यर्थः । यथा परमे व्योमन्नित्यत्र ङिलोपः । छान्दसिकत्वात्सर्वाणि भूतानि इ-

त्यत्र नुमूव्यहितश्लिोपः। 'परमे व्योमन् सर्वा भूतानि' इति छान्दसिकः प्रयोगः॥ असृक् असृजी असृंजि। दिशाम् इति कत्वम्॥

( प्र० ) छन्दसीति। सर्वत्यत्र शिलोपे आगमजस्यापि नस्य छान्दसोलंकूनिमित्ताभावन्यायस्य वा नित्यत्वाद्दीर्घस्यानिवृत्तिः। अथवा वा अ आ इति च्छेदः। ततश्च शिलोपे निमित्तामावन्यायेन नुमुपधादीर्घयोर्निवृत्तौ अकारस्य आकारः। अथवा वा आ इति च्छेदः। एवं च टेर्लोपः। शेश्च आ भवतीत्यर्थः। ततश्च शिपरत्वाभावादागमजमनित्यत्वाद्वा नुमभावे सवर्णदीर्घः अधावित्यत्र डेरुपलक्षणत्वाच्छन्दस्त्वाल्लोपश्। संज्ञापूर्वकत्वेनानित्यत्वाद्वा(क)। व्योमन् इत्यत्र नलोपाभावः। परमे भूतानीति ङिस्यन्तत्वद्योतनार्थम्॥

दकारान्तास्त्यदादयः। त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न, स्यादाविति विशेषणात्। द्विवचनादौ तु टेरत्वे कृते सर्वशब्दवत् प्रक्रिया। 'वावसाने' त्यत्-त्यद्। त्ये। त्यानि। पुनरपि। शेषं सर्ववत्॥ तद् ते तानि। पुनरपि॥ यत्-यद् ये यानि। पुनरपि॥ एतत्-एतद् एते एतानि। पुनरपि॥ **इदमेतदोर्द्वितीयैकवचने नपुंसके एनद्वा वाच्यः॥** एतत्-एतद् एनत्-एनद् एते-एने एतानि-एनानि। एतेन-एनेन। इत्यादि। किम् के कानि। पुनरपि॥ इदं इमे इमानि। पुनरपि। इदं-एनत् इमे-एने इमानि एनानि। अनेन-एनेन इत्यादि॥

( च० ) अथ दकारान्तास्त्यदादयः। तेषां त्यदादीनां स्यमोर्लुकि कृते टेरत्वं न भवति, स्यादौ विभक्तौ परे एव भवति। न लुकि कृते इति विशेषणात् (ऽ) 'लुकि' न तन्निमित्तमिति। अत एव 'स्तः' इति सत्वमपि न भवति। तत्। द्विवचनादौ 'त्यदादेष्टे०' 'ईमौ' 'अ इ ए' ते। तानि तद् 'त्यदादेष्टे०' 'जस्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'स्वरहीनं०'॥ तृतीयादौ सर्वत्र 'त्यदादेष्टे०' 'न'। ताभ्याम् 'अङ्कि'। तैः 'स्भ्यः' 'अ इ ए' 'ए ऐ ऐ'। तस्मै 'सर्वादेः स्मट्' 'ए ऐ ऐ'। ताभ्याम् 'अङ्कि'। तेभ्यः 'एस्भि बहुत्वे'। तस्मात् 'ङसिरत्' 'अतः' इति स्मडागमः 'सवर्णे०'। ताभ्याम् 'अङ्कि'। तेभ्यः 'एस्भि बहुत्वे'। तस्य 'ङस्स्य'। तयोः 'ओसि' 'ए अय्' तेषाम् 'छडामः' 'एस्भि बहुत्वे' 'क्विलात्पः सः०' 'स्वरहीनं०' 'मोऽनुस्वारः'। तस्मिन् 'ङिस्मिन्'। तयोः 'ओसि' 'ए अय्'। तेषु 'क्विलात्पः स०' त्यदादीनां घेरभावः॥ एवम्—एतत् एते एतानि। द्वितीयायाम् 'एतदोऽन्वादेशे' इत्यस्य प्राप्तौ अमिविषये वक्तव्ये विशेषमाह—'निपुंसके एनदोऽन्वादेशे अमि एनदिति वक्तव्यम्' एतत्-एनत् एते-एने एतानि-एनानि। शेषं पुंवत्। केचित्तु इदम्शब्दस्याप्यन्वादेशे नपुंसके अमि एनदिच्छन्ति॥ मकारान्तः किम् शब्दस्य नपुंसके अमि एनदिच्छन्ति॥ मकारान्तः किम् शब्दस्तस्य नपुंसकात्स्यमोर्लुकि कृते 'त्य-

---

( क ) संज्ञापूर्वकेति। "संज्ञापूर्वको विधिरनित्य" इति परिभाषयेत्यर्थः।

दादेष्टे०' इति अत्वं न भवति किं तु 'मोऽनुस्वारः' । अन्यत्र तु 'त्यदादेष्टे०' अत्वे कृते नपुंसके सर्वशब्दवत् । किं के कानि । एवम् इदम् इमे इमानि । तृतीयादौ सर्वत्र पुंवत् पुंलिङ्गवत् ।।

( प्र० ) त्यदादीनामिति । "लुकि न तन्निमित्तम्" इति प्रतिषेधादित्यर्थः ।।

इति सारस्वतप्रसादे हसान्ता नपुंसकलिङ्गाः ॥ १२ ॥

---

चकारान्तः प्रत्यचशब्दः : 'चोः कुः' । 'वावसाने' प्रत्यक् प्रत्यग् । प्रतीची प्रत्यञ्चि । पुनरपि । शेषं पूर्ववत् ।।

( च० ) चकारान्तः प्रत्यच्शब्दः । 'नपुंसकात्स्यमोर्लुक्' 'चोः कुः' 'वावसाने' प्रत्यक् प्रत्यग् । द्विवचने 'ईमौ' 'अञ्चेरलुक् दीर्घश्च' 'स्वरहीनं०' प्रतीची । बहुत्वे- 'जश्शसोः शिः' 'नुमयमः' 'नश्चापदान्ते०' प्रत्यञ्चि । अग्रे तृतीयादौ पुंवत् । स्वरादौ 'अञ्चेरलुक् दीर्घश्च' । भकारादौ—'चोः कुः' 'झबे जबाः' प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः इत्यादि । सुपि 'चोः कुः' 'किलात्षः सः०' 'कषसंयोगे क्षः' । प्रत्यक्षु ॥ तिर्यक् तिरश्ची तिर्यञ्चि ॥ अन्वक् अनूची अन्वञ्चि । गवाक् गोची गवाञ्चि । गां अञ्चतीति गो अच् । 'नो लोपः' 'गवादेरवर्णागमः' 'ओ अव्' गवाक् गवाग् । औ 'अंचेरलोपे' निमित्तापाये 'नैमित्तिकस्याप्यपायः' इत्यवर्णागमस्यापि लोपः 'ओ अव्' इत्यस्यापि निषेधः । गोची । गवाच् अस् 'जश्शसोः शिः' 'नुमयमः' इत्यादि ॥

तकारान्तो जगच्छब्दः । 'वावसाने' जगत् जगद् जगती जगन्ति । पुनरपि ।। महत् महद् महती महान्ति । पुनरपि ।। सकारान्ताः पयस्वचस्तेजस्यशस्प्रभृतयः । पयः पयसी पयांसि । पुनरपि ।।

( च० ) तकारान्तो जगतशब्दः । स्यमोर्लुक् जगत । द्वित्वे 'ईमौ' 'स्वरहीनं०' । बहुत्वे 'जश्शसोः शिः' 'नुमयमः' 'नश्चापदान्ते०' जगती जगन्ति ॥ शेषं कण्ठ्यम् । एवं यकृत् यकृती यकृन्ति ॥ महच्छब्दोऽप्येवम् । न वरम् । धौ विषये 'न्सम्महत०' इति दीर्घत्वम् । महत् महती महान्ति । महता महद्भ्यामित्यादि पुंवत् ॥

सकारान्तः पयस्शब्दः । पानीयं दुग्धं च पयः । स्यमोर्लुकि कृते 'स्रोर्वि०' ॥ द्वित्वे 'ईमौ' स्वरहीनं०' ॥ बहुत्वे 'जश्शसोः शिः' नुमयमः' न्सम्महतः०' इति दीर्घः । पयः पयसी पयांसि । तृतीयादौ स्वरादौ 'स्वरहीनं०' ॥ भकारादौ 'स्रोर्वि०' 'हवे' 'उ ओ' पयसा पयोभ्यां पयोभिः ॥ एवं तेजस् महस् वचस् यशस् वयस् शिरस् तपस् ओजस् मनस् तमस् अम्भस् नभस् एनस् सरस् वासस् रजस् छन्दस् अनस् अयस् स्रोतस् रक्षस् श्रेयस् उषस् वर्चस् मेदस् शेफस् श्रवस् अर्शस् तरस् रंहस् ऊधस् यादस् आगस् एधस् ओकस् प्रभृतयः ॥ हविष्शब्दे 'दोषां रः' 'नपुंसकात्स्यमोर्लुक्' 'स्रोर्वि०' हविः । हविषी 'ईमौ' हवींषि 'जश्शसोः शिः' नुमयमः'' न्सम्महतो०' इति दीर्घे कृते नुमि सकार एवास्तीति न्सन्तत्वम् । ततो नुम्विसर्गव्यवधानेऽपि षत्वम् । हविषा । भ्यांभ्यस्सुप्विषये 'दोषां

२,' जलतुम्बिका०। हविर्भ्यां हविर्भिः हविःषु ॥ एवं सर्पिः सर्पिषी सर्पींषि। धनुः धनुषी धनूंषि। आयुः आयुषी आयूंषि इत्यादि ॥

अदस्शब्दस्य स्यमोर्लुकि कृते 'स्नोर्विसर्गः'। अदः अमू अमूनि। पुनरपि ॥ अमुना। अमूभ्याम् अमीभिः। इत्यादि शेषं पुंवत् ॥

इति हसान्तनपुंसकलिङ्गप्रक्रिया ॥ १२ ॥

( च० ) अदस्शब्दस्य प्रथमाद्वितीययोर्विशेषस्तत्रैकवचने—'नपुंसकात्स्यमोर्लुक् लुकि कृते 'त्यदादेष्टे०' अत्वं न भवति 'किंतु 'स्नोर्वि०' अदः ॥ द्वित्वे—'त्यदादेष्टे' अकारः 'दस्य मः' 'ईऔ' 'अ इ ए' 'मादू' एकारस्य ऊकारः। अमू ॥ बहुत्वे 'त्यदादेष्टे०' 'दस्य मः' 'जश्शसोः शिः' 'नुमयमः' 'नोपधायाः' 'मादू' अकारस्य ऊकारः अमूनि ॥ तृतीयादौ सर्वत्र पुंवत्। तृतीयैकवचने—'त्यदादेष्टे०' 'मादू' टा ना स्त्रियाम्' अमुना। तृतीयाद्विवचने—'त्यदादेष्टे०' 'अङ्गि' 'मादू' अमूभ्यां। तृतीयाबहुवचने—'भिस् भिस' 'ए स्मि बहुत्वे' 'एरी बहुत्वे' अमीभिः। चतुर्थ्येकवचने—'त्यदादादेष्टे०' 'दस्य मः' 'सर्वादेः स्मट्' 'मादू' 'क्लिलात्षः सः०' 'ए ऐ ऐ' अमुष्मै। चतुर्थीद्विवचने 'अङ्गि' 'मादू' अमूभ्याम् चतुर्थीबहुवचने—'ए स्मि बहुत्वे' 'एरी बहुत्वे' अमीभ्यः। पञ्चम्येकवचने—'त्यदादेष्टे०' 'दस्य मः' 'अतः' 'मादू' 'क्लिलात्षः' अमुष्मात्। पञ्चमीद्विवचने 'अङ्गि०' 'मादू' अमूभ्याम्। पञ्चमीबहुवचने 'एस्मि बहुत्वे' 'एरी बहुत्वे' अमीभ्यः। षष्ठ्येकवचने 'त्यदादेष्टे०' 'ङस्स्य' 'दस्य मः' 'मादू' क्लिलात्षः सः०' अमुष्य। षष्ठीद्विवचने—'ओसि' 'ए अय्' 'मादू' अमुयोः। षष्ठीबहुवचने—'त्यदादेष्टे०' 'दस्य मः' 'सुडामः' 'ए स्मि बहुत्वे' 'एरी बहुत्वे' 'क्लिलात्षः स०' अमीषाम्। सप्तम्येकवचने—'त्यदादेष्टे०' 'दस्य मः' 'ङि स्मिन्' 'मादू' 'क्लिलात्षः सः०'। सप्तमीद्विवचने 'त्यदादेष्टे०' 'दस्य मः' 'ओसि' 'ए अय्' स्वरहीनं०' 'मादू' अमुयोः। सप्तमीबहुवचने 'ए स्मि बहुत्वे' 'एरी बहुत्वे' 'क्लिलात्ष सः०' अमूषु।

इति हसान्तनपुंसकलिङ्गसाधनम् ॥ १२ ॥

## * युष्मदस्मत्प्रक्रिया। १३। *

अथ युष्मदस्मदोः स्वरूपं निरूप्यते ॥ तयोश्च वाच्यलिङ्गत्वात्त्रिष्वपि लिङ्गेषु समानं रूपम् ॥ त्वमहं सिना ॥ सिसहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन ॥ त्वम्। अहम् ॥ १ ॥

( च० ) अथेति। संज्ञासंधिस्वरान्तहसान्तलिङ्गत्रयसाधनानन्तरं युष्मदस्मदोः युष्मच्च अस्मच्च युष्मदस्मदौ तयोः स्वरूपं मुख्यस्वरूपमेव निरूप्यते कथ्यते। न तु गौणत्वविशेषादिकमित्यर्थः। अत्राह परः—ननु यथा सर्वादयो लिङ्गत्रये साधितास्त-

था एतावपि कथं न साधितौ । तत्रोत्तरमाह–तयोर्युष्मदस्मच्छब्दयोर्वाचि वचने वाग्व्य-वहारेऽलिङ्गत्वात् स्वविषये लिङ्गोद्योताभावात् त्रिष्वपि पुंस्त्रीनपुंसकलिङ्गेषु समानं सदृशमेव रूपम् । यथा त्रिषु लिङ्गेषु सर्वो जनः, सर्वा जगती, सर्वं जगत् इत्यादिरूपभेदो दृश्यते, न तथैतयोः। यथा त्वं देवः, त्वं देवी, त्वं ब्रह्म इत्यादौ न कोऽपि रूपभेदः । अतः प्राग् न साधितावित्यर्थः । अथ वाच्यमिति नामशब्दरूपम् अभिधेयं विशेष्यपदमित्यर्थः । तस्यैव लिङ्गो विद्यते ययोस्तौ वाच्यलिङ्गौ ॥ यदि वा वाच्यस्य पुरुषस्त्रीकुलादेर्लिङ्गमेव लिङ्गं ययोरिति बहुव्रीहिः । यदुक्तम्—'वाच्यमित्युच्यते भेद्यं तल्लिङ्गं भजते तु यः । विशेषणत्वमापन्नो वाच्यलिङ्गः स उच्यते ॥' अनयोः साधनमुच्यते । प्रथमैकवचने सूत्रम्—'त्वम सिना' ॥ त्वं च अहं च त्वमहं प्रथमाद्विवचनान्तं सांकेतिकम् । सिना सिशब्दस्य तृतीयैकवचनान्तम् 'टाना स्त्रियाम्' ॥ युष्मद० । वृत्तिः कण्ठ्या । युष्मदः सिना सह त्वम् इत्यादेशः । अस्मदश्च सिना सह अहम् इत्यादेशः ॥ १ ॥

( प्र० ) अथेति । त्रिलिङ्गस्वरान्तहसान्तनिरूपणानन्तरं नाम्नि च युष्मदि चास्मदि च भागैरित्यादौ नामभ्यः पृथक्कार्यकारित्वादनयोः पृथगुक्तिर्युक्तैव । स्वमेव रूपं स्वरूपं विस्तरभयाद्गौणत्वादिपरित्यागेन सत्त्वोद्रिक्तधर्मराहित्येनार्थस्वरूपमात्रवाचित्वेन चेत्यर्थः । वाच्यलिङ्गत्वादिति । वचनं वाक् अस्यां लिङ्गत्वात् स्वविषये लिङ्गद्योतकाभावादित्यर्थः । अयमर्थः । सर्वस्य त्रिगुणारब्धत्वेन सत्त्वोद्रिक्तवाचित्वे पुंस्त्वं रजउद्रिक्तवाचित्वे स्त्रीत्वम् । तमउद्रिक्तवाचित्वे नपुंसकत्वं भवति । अनयोस्तु धर्मिमात्रवाचित्वेनालिङ्गत्वम् । अथवा उपचयापचयाद्यभाववाचित्वादलिङ्गत्वम् । अत एवोक्तम् । "अलिङ्गे युष्मदस्मदी" इति केचित्तु "वाच्यमित्युच्यते भेद्यं तल्लिगं भजते तु यः । विशेषणत्वमापन्नो वाच्यलिंगः स उच्यते ॥" इति विशेष्यलिंगत्वादलिंगत्वमित्याहुः । तदसत् । शुक्लादिशब्दानामपि वाच्यलिंगत्वेनालिंगत्वप्रसक्त्या आबाद्यभावप्रसंगात् । अत्रापि स्त्रीवाच्यत्वे आप्प्रसंगाच्च । त्वमहं साङ्केतिकं प्रथमाद्विवचनान्तम् । सिना जसा ङया ङसेति सहार्थे तृतीयानिर्देशात्समासे प्रधानत्वे गौणत्वे चानयोः सदैव एते आदेशा भवन्तीति सूचितम्। ततश्च परमत्वं परमाहं तथा त्वां मां युवाम् आवां युष्मानस्मान्वातिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् एवं जसादिष्वपि ॥ १ ॥

**युवावौ द्विवचने ॥** युष्मदस्मदोर्द्विवचने परे युव आव इत्येतावादेशौ भवतः ॥ २ ॥

( चा० ) द्विवचने युष्मद् औ अस्मद् औ इति स्थिते सति । सूत्रम्—'युवावौ द्विवचने' ॥ युवश्च आवश्च युवावौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' । द्विवचने सप्तम्येकवचनान्तम् 'अ इ ए' ॥ युष्म० । युष्मदः सर्वविभक्तिद्विवचने युव आदेशः । अस्मदश्च आव इत्यर्थः ॥ २ ॥

( प्र० ) युवावौ । द्वयोः वचनं द्विवचनम् । द्व्यर्थवाचित्वमित्यर्थः । ततश्च गौणत्वे द्व्यर्थवाचिनोर्युष्मदस्मदोर्द्विवचनपरत्वाभावेऽपि युवावौ स्त एव । यथा युवाम् आवाम् अतिक्रान्तम् अतिक्रान्तान् अतिक्रान्तेनेत्यादि विग्रहे अतियुवाम्-अत्यावाम् । अतियु-

वान्-अत्यावान् । अतियुवया-अत्यावयेत्यादि । ननु द्विवचनपरत्वाभावेऽप्यादेशे युवयो-रावयोर्वा पुत्रः युष्मत्पुत्रः अस्मत्पुत्र इत्यादावपि द्व्यर्थवाचित्वाद्युष्मदस्मदोर्युवावौ स्याता-मिति चेत् । नैवम् । य्वौ वेत्यतो वानुवृत्तेर्व्यवस्थया तदभावात् ॥ २ ॥

**आमौ** ॥ युष्मदस्मदोः पर औ आम् भवति । सवर्णे दीर्घः सह । युवाम् आवाम् ॥ ३ ॥

( च० ) युव औ आव औ इति स्थिते सूत्रम्—'आमौ' ॥ आम् प्रथमैकवचना-न्तम् । 'हसेपः०' ॥ औ प्रथमैकवचनं सांकेतिकम् । 'स्वरहीनं०' सिद्धम् । वृत्तिः सुग-मा । यदादेशस्तद्वदिति । ननु आम् किमिति क्रियते अमेव कथं न क्रियते 'मात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इति । सत्यम् । अमि कृते 'अम्शसोरस्य' इत्यलोपः स्या-दिति आमेव युक्तः । अनेन औ इत्यस्य आम् 'सवर्णे०' युवाम् आवामिति सिद्धम्॥३॥

( प्र० ) आमौ इति । नन्वम्विधावपि सवर्णदीर्घत्वेनेष्टसिद्धावाम्विधिवैयर्थ्यम् । विधानसामर्थ्याचाम्शसोरस्येत्यस्याप्रसङ्गादन्यथा मादेशमेव विदध्यादिति चेत् । मैवम् । अमादेशे त्वामामिति प्रसंगात् । न च लक्षणप्रतिपदोक्तन्यायेन लाक्षणिकत्वादसम्भवः । अस्मादेव ज्ञापकादम्ग्रहणे न्यायस्याप्रवृत्तेः । अत एव कुलमित्यादावम्शसोरस्येत्य-कारलोपः ॥ ३ ॥

**यूयं वयं जसा** ॥ जसा सहितयोर्युष्मदस्मदोर्यूयं वयमित्येतावादेशौ भवतः ॥ यूयम् वयम् ॥ ४ ॥

बहुत्वे युष्मद् अस् अस्मद् अस् । सूत्रम्—'यूयं वयं जसा' ॥ यूयं च वयं च यूयं-वयं प्रथमाद्विवचनान्तं सांकेतिकम् । जसा इति जस्शब्दस्य तृतीयैकवचनान्तम् । 'स्वर-हीनं०' सिद्धम् । जसा० । अनेन जस्सहितस्य युष्मदो यूयमित्यादेशः अस्मदश्च वयमि-त्यादेशः । यूयं वयमिति ॥ ४ ॥

**त्वन्मदेकत्वे** ॥ युष्मदस्मदोः त्वन्मदित्येतावादेशो भवत एकत्वे गम्यमाने(क) ॥ ५ ॥

( च० ) अमि सूत्रम्—'त्वन्मदेकत्वे' ॥ त्वच मच त्वन्मत् प्रथमाद्विवचनान्तम् । सांकेतिकम् । एकस्य भाव एकत्वं तस्मिन्नेकत्वे सप्तम्येकवचनान्तम् । 'अ इ ए' 'चपा अबे जबाः' 'स्वरहीनं०' सिद्धम् । अग्रे वृत्तिः कण्ठ्या । एकवचने एकार्थवाचित्वे वा युष्मदस्त्वत् अस्मदश्च मत् आदेशः ॥ ९ ॥

( प्र० ) त्वन्मत् । एकत्वे एकार्थवाचित्वे इत्यर्थः । ततश्च त्वामतिक्रान्तौ अतिक्रा-न्तान्वेत्यादिविग्रहे अतित्वाम् अतित्वानित्यादि । यदा च युष्मानस्मान्वेति विग्रहस्तदा युष्मदस्मदोर्द्व्यर्थकार्थवाचित्वाभावाद्युवावत्वन्मदादेशानामभावादतियुष्मान् । अत्यस्मान् । अतियुष्मयेत्यादि ॥ ९ ॥

---

(क) त्वन्मदे । एकत्वे इत्यर्थपरो निर्देशः । ततश्चैकार्थवाचिनोर्युष्मदस्मदोरित्यर्थः । अत एव त्वमा-त्मन इच्छति त्वयति त्वत्पुत्र इत्यादावप्यादेशः । तथा युष्मानस्मान् वातिक्रान्ता अतियुष्मा मत्यस्मा मि-त्यादौ चादेशाभावः । समासस्यैकार्थत्वे युष्मदस्मदोरनेकार्थत्वात् ।

आम्स्भौ ॥ आ अम्स्भौ । युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे । अमूशसोरस्य । त्वाम् माम् । युवाम् आवाम् ॥ ६ ॥

(च०) त्वत् अम् मत् अम् इति स्थिते सूत्रम् 'आम्स्भौ' ॥ आ प्रथमैकवचनान्तं सांकेतिकम् । अम् च स् च भिस् च अम्स्भिसः देशैकग्रहणे देशीयग्रहणम् । तस्मिन् अम्स्भौ ससम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं०' आ अग्रे अम्स्भौ 'सवर्णे०' ॥ युष्मदः० । अनेन त्वत् इत्यस्य त्वा, मत् इत्यस्य च मा । 'अमूशसोरस्य' 'मोऽनुस्वारः' त्वां माम् ॥ द्विवचनेषु प्राग्वत् ॥ ६ ॥

(प्र०) आम्स्भौ इति । आ अम् स्भौ । अम् च स च भिश्च आम्भिसः तस्मिन् भिसः भिद्वपूलक्ष्यते । ननु अ एव विधीयताम् । विधानसामर्थ्याच्च टेरनुवृत्तौ पष्ठीनिर्दिष्टस्यायेनान्त्यस्यादेशेनेष्टसिद्धौ दीर्घविधिवैयर्थ्यमिति चेत् । मैवम् । युष्माभिरित्यादावकारान्तत्वेन भिसो भकारस्याकारप्रसंगात् ॥ ६ ॥

'त्यदादेष्टेरः स्यादौ' इत्यत्वे कृते शसि दीर्घत्वम् ॥ शसो नो वक्तव्यः ॥ युष्मान् । अस्मान् ॥

( च० ) शसि युष्मद् अस् अस्मद् अस् इति स्थिते । 'त्यदादेष्टे०' अकारे कृते । 'अमूशसोरस्य' इत्यकारलोपः । 'शसि' इति दीर्घः । वाच्यलिङ्गत्वात्केवलं पुंलिङ्गत्वाभावात् 'सो नः पुंसः' इति सूत्रेण सकारस्य नकारो न भवति । तेन विशेषमाह—'शसो नो वक्तव्यः' शसः सकारस्य नकारो भवति इत्यर्थः । युष्मदस्मदोरेवेति शेषः युष्मान् अस्मान् इति सिद्धम् ॥

(प्र०) शसो न इति ॥ सो नः पुंस इत्यस्य पुँल्लिंगविषयत्वेनानयोश्च लिङ्गविशेषाभावान्नत्वाप्राप्तावारम्भः । भ्यस् । ङसिभ्यसोस्तुरित्यत्र ङसिसाहचर्यान्नय स्पञ्चम्या एवेत्यवधारणात्परिशेषाच्चतुर्थ्यां भ्यसः भ्यं भवतीत्यर्थः । अनेकाक्षरादेशत्वाद्गुरुत्वेन सर्वादेशत्वसिद्धौ शित्करणप्रयोजनमाह । शकार इति । व्यर्थं सत्किञ्चिदिष्टं ज्ञापयतीति न्यायादित्यर्थः । अपवादनिवृत्तावुत्सर्गप्रवृत्तिरित्येत्वमपि नेत्यर्थः ॥

त्वन्मदेकत्वे ॥ ए टाङ्योः ॥ युष्मदस्मदोष्टेरेत्वं भवति टा ङि इत्येतयोः परयोः ॥ ए अय् । त्वया मया । युवाभ्याम् आवाभ्याम् । युष्माभिः अस्माभिः ॥ ७ ॥

( च० ) तृतीयैकवचने त्वन्मदादेशे कृते । 'त्यदादेष्टे०' अकारः ॥ त्व आ म आ इति स्थिते । सूत्रम्—'ए टाङ्योः' ॥ ए प्रथमैकवचनान्तं सांकेतिकम् । टाङ्योः टा च ङिश्च टाङी तयोः सप्तमीद्विवचनान्तम् । 'इयं स्वरे' 'स्वरहीनं०' सिद्धमिदं सूत्रम् । वृत्तिः कण्ठ्या । आदेशिवदादेशो भवतीति न्यायात् । अनेन यथाक्रमं त्वेमे 'एअय्' 'स्वरहीनं०' त्वया मया इति रूपद्वयं सिद्धम् ॥

द्विवचने भ्याम् । 'युवावौ द्विवचने' 'अद्भि' युवाभ्याम् आवाभ्याम् । एवं चतुर्थीपञ्चमीद्वित्वेऽपि ॥

भिसि 'आम्सौ' इति टेराकारः । युष्माभिः अस्माभिः ॥ ७ ॥

**तुभ्यं मह्यं ङया** ॥ ङया सहितयोर्युष्मदस्मदोस्तुभ्यं मह्यं इत्येता-वादेशौ भवतः ॥ तुभ्यम् मह्यम् । युवाभ्याम् आवाभ्याम् ॥ ८ ॥

( च० ) चतुर्थ्यैकवचने सूत्रम्—'तुभ्यं मह्यं ङया' ॥ तुभ्यं च मह्यं च तुभ्यं मह्यं प्रथमाद्विवचनान्तं सांकेतिकम् । ङया इति ङेशब्दस्य तृतीयैकवचनान्तम् । 'ए अय्' 'स्वरहीनं०' ॥ वृत्तिः सुबोधा । अनेन यथाक्रमं ङेसहितयोः युष्मदस्मदोस्तुभ्यं मह्यम् आदेशौ भवतः ॥ ८ ॥

**भ्यस् भ्यम्** ॥ युष्मदस्मदोः परो भ्यस् शभ्यं भवति ॥ शकारो भ-कारादेश(दित्व)व्यावृत्त्यर्थः । तेनात्वैत्वे न भवतः । युष्मभ्यम् अस्मभ्यम् ॥ ९ ॥

( च० ) चतुर्थ्यां बहुवचने—सूत्रम्–'भ्यस् शभ्यम्' ॥ भ्यस् प्रथमैकवचनान्तं सांके-तिकम् । शभ्यम् प्रथमैकवचनान्तम् । 'हसेपः०' ॥ युष्मदस्मच्छब्दाभ्यां परं यच्चतुर्थीब-हुवचनं तस्य कृत्स्नस्यापि शभ्यं भवति । भ्यमादेशस्य गुरुत्वात्सर्वस्य प्राप्तौ शकारग्रहणं किमर्थमित्याह—शकारो भकारादित्वनिषेधकः । उच्चारणमात्रः शकारो भकारादित्वव्या-वृत्त्यर्थः ; भकार एव आदिर्यस्य स भकारादिस्तस्य भावो भकारादित्वं तस्य व्यावृत्त्यर्थो निषेधार्थः । भ्यम् इत्येव चेत् क्रियते, तदा 'भ्सि' 'एस्भि बहुत्वे' एतयोः सूत्रयोः प्रा-प्तिर्भवति भकारपरत्वात् । अतस्तन्निवारणार्थं शभ्यमिति क्रियते । तेन 'भ्सि' इत्यात्वम् 'एस्भि बहुत्वे' इति एत्वं च न भवति अनेन चतुर्थीबहुवचनस्य शभ्यम् । 'त्यदादेष्टे०' 'मोऽनुस्वारः' । युष्मभ्यम् अस्मभ्यम् ॥ ९ ॥

**ङसिभ्यसोः शतुः** ॥ पञ्चम्या ङसिभ्यसोः शतुर्भवति(क) । शका-रः सर्वादेशार्थः । उकार उच्चारणार्थः । त्वत् मत् । युवाभ्याम् आवाभ्याम् । युष्मत् अस्मत् ॥ १० ॥

( च० ) पञ्चम्येकवचने–त्वन्मदादेशे कृते त्वत् अस् मत् अस् इति स्थिते ॥ सूत्रम्–'ङसिभ्यसोः शतुः' ॥ ङसिश्च भ्यस् च ङसिभ्यसौ तयोः षष्ठीद्विवचनान्तम् । 'स्वरहीनं०' 'सोर्वि०' । शतुः प्रथमैकवचनान्तम् । 'सोर्वि०' । पञ्चम्या एकवचनस्य बहुवचनस्य च शतुः इत्यादेशो भवति । अनेन ङसिस्थाने शतुर्भवति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । त् इति स्थितम् । 'त्यदादेष्टे०' । त्वत् मत् ॥ युवाभ्याम् आवाभ्याम् । बहुवचने भ्यस्स्थाने त् । 'त्यदादेष्टे०' युष्मत् अस्मत् ॥ १० ॥

( प्र० ) ङसिभ्यसोरिति । नानुबन्धकृतमनेकाल्त्वमित्युकारानुबन्धत्वादनेकवर्णा-देशत्वाभावात्षष्ठीनिर्दिष्टत्वेनान्त्यस्य प्राप्तौ शित्वात्सर्वस्येत्यभिप्रेत्योक्तं शकारः सर्वादेशा-र्थं इति । त्वन्मदादेशे त्यदाद्यत्वं संयोगान्तलोपो वा । नन्वेवं लोप एव विधीयताम् एक-त्ववाचित्वात् त्वन्मदादेशे चेष्टसिद्धिः स्यादेवेति चेत् । सत्यम् । भ्यसिप्रत्यये लक्षणत्वेन

(क) ङसीति । अत्र ङसिभ्यसः अ शतु रिति च्छेदादकारोऽन्तादेशोऽनयोरिति व्याख्यानात् । युष्मा-स्मोर्युष्मदस्मदिति सिध्यति ।

त्यदाद्यत्वप्रसङ्गाच । यद्यपि लुकि क्रियमाणे न प्राप्नोति तथाप्यतियुवद्त्यावदित्यादिसि-द्ध्यर्थं इतुविधिः ॥ १० ॥

**तवमम ङसा** ॥ ङसा सहितयोर्युष्मदस्मदोस्तव मम इत्येतावादेशौ भवतः ॥ तव मम । युवयोः आवयोः ॥ ११ ॥

( च ) षष्ठ्येकवचने । सूत्रम्—'तव मम ङसा' ॥ तव च मम च तवमम प्रथमाद्वि-वचनान्तं सांकेतिकम् । ङसेति ङस्शब्दस्य तृतीयकवचनान्तम् । 'स्वरहीनं०' ङसा० । अनेन ङस्सहितस्य युष्मदस्तव अस्मदो मम इत्यादेशः । तव मम ॥ ओस्विषये युव आवादेशे कृते 'ओसि' 'ए अय्' 'स्वरहीनं०' युवयोः आवयोः । एवं सप्तमीद्विवचनेऽपि॥११॥

**सामाकम्** ॥ युष्मदस्मदोः परः सामाकं भवति(क) । युष्माकम् अस्माकम् ॥ १२ ॥

( च० ) आमि 'त्यदादेष्टे०' 'छडामः' 'स्वरहीनं०' युष्मासाम् अस्मासाम् इति स्थिते ॥ सूत्रम् । 'सामाकम्' ॥ साम् प्रथमैकवचनान्तम् । 'हसेपः०' आकम् प्रथमैक-वचनान्तम् । 'हसेपः०' 'स्वरहीनं०' युष्मदस्मद्भ्यां परस्य छट्सहितस्य आमः आकम् इत्यादेशो भवति । अनेन आकम् । 'सवर्णे०' युष्माकम् अस्माकम् । छट्सहितस्यामः आकमादेशविधानम् 'ए स्भि बहुत्वे' इत्येकारनिवृत्त्यर्थं, न तु 'आमूस्भौ' इत्याकारस्य निवृत्त्यर्थं कृते तस्मिन्न रूपविपर्ययः स्यादिति ॥ १२ ॥

(प्र०) साम् छट्सहित आम् साम् स आकं भवतीत्यर्थः । सछट्कस्यादेशविधानाद्गौ-णत्वे च छडभावादाकमोऽप्राप्तेरटाङ्योरित्यत्र ए इति योगविभागाट्टेरत्वे अयादेशे च अ-तित्वयाम् अतियुवयाम् अतियुष्मयामित्यादि । केचित्तु सछट्कनिर्देशस्य भाविछट्निवृत्त्य-र्थत्वादाम एवाकम् । विधेर्गौणत्वेऽप्याकं भवत्येवेति अतित्वाकमित्याद्याहुः । अकम्विधाने-नैवेष्टसिद्धेराकम्विधानं भाविछणिवृत्त्यर्थम् । पक्षे तत्करोतिण्यन्तस्य क्विपि णिलोपे हलन्तस्यापि सिद्ध्यर्थं गौणत्वे वाचित्वे द्वित्वादिवाचित्वे युवावादिविधानमुक्तमुक्तचिन्ता-याम् । यथा । "यदि युष्मदस्मदी तु द्वित्वं वदतो समाससमायातः । भवतस्तदा युवावौ तदितरसङ्ख्ये समासार्थे ॥ अभिवदतो त्वेकत्वं समासतस्तदानयोस्त्वन्मत । इत्यादेशौ भवतो द्वित्वबहुत्वान्विते समासार्थे ॥ ङसङेजसिसु चातस्तव मम तुभ्यं तथा मह्यम् । यूयं वयं त्वहमिति सर्वदैव स्युरादेशाः ॥" इति । उदाहरणानि तु तत्र तत्रोक्ता-न्यूह्यानि ॥ १२ ॥

त्वयि मयि । युवयोः आवयोः । युष्मासु अस्मासु ॥

( च० ) सप्तम्येकवचने 'त्वन्मदेकत्वे' 'त्यादादेष्टे०' 'ए टाङ्योः' 'ए अय्' स्वरही-

---

( क ) अत्र तन्त्रैकशेषावृत्तीभिः सामिति द्वयं बोध्यम् । सकृदुच्चरितशब्दोऽनेकार्थगमको भवतीति तन्त्रम् । सरूपाणामित्येकशेषः । द्विरुच्चारणमावृत्तिः । एकस्य सुटा सह आम् साम् । द्वितीयस्य तु आमा सह साम् इत्यर्थः । ततः सुट् सहित आम् केवलमाम् च आकम् युष्मदस्मदोरन्त्यस्याकारश्च भवतीत्यर्थः । तेनातियुष्माकम् अत्यस्माकमित्यादि सिद्ध्यतीति लघुभाष्यकर्त्तुरपि प्रयासो व्यर्थ एव ।

नं०' त्वयि मयि । युवयोः आवयोः । सुपि । 'आम्भ्यौ' युष्मासु अस्मासु ॥

स्यदादित्वात्सम्बोधनाभावः ॥

तथा समासान्तत्वे प्राधान्ये च युष्मदस्मदोः सिजस्ङिङस्सु एत एव पूर्वोक्ताः त्वम् अहम् यूयम् वयम् तुभ्यम् मह्यम् तव आदेशाः स्युर्नान्यत्र । अन्यत्र तु सिऔजस्ङेङसुव-र्जितेषु सप्तदशसु वचनेषु एकत्वे त्वमौ, द्विवचने युवावौ, बहुत्वे युष्मास्मौ यथा—त्वामतिक्रान्तोऽतित्वम् अतित्वाम् अतियूयम् । अतित्वाम् अतित्वाम् अतित्वान् । अ-तित्वया अतित्वाभ्याम् अतित्वाभिः । अतितुभ्यं अतित्वाभ्याम् अतित्वभ्यम् । अति-त्वत् अतित्वाभ्याम् अतित्वत् । अतितव अतित्वयोः अतित्वाकम् । अतित्वयि अति-त्वयोः अतित्वासु ॥ एवं युवामतिक्रान्तः अतित्वम् अतियुवाम् अतियूयम् । अतियुवाम् अतियुवाम् अतियुवान् । अतियुवया अतियुवाभ्याम् अतियुवाभिः । अतितुभ्यम् अति-युवाभ्याम् अतियुवभ्यम् । अतियुवत् अतियुवाभ्याम् अतियुवत् । अतितव अतियुवयोः अतियुवाकम् । अतियुवयि अतियुवयोः अतियुवासु ॥ एवं युष्मानतिक्रान्तः अतित्वम् अतियुष्माम् अतियूयम् । अतित्वाम् अतियुष्माम् । अतियुष्मान् । अतियुष्मया अति-युष्माभ्याम् अतियुष्माभिः । अतितुभ्यम् अतियुष्माभ्याम् अतियुष्मभ्यम् । अतियुष्मत् अतियुष्माभ्याम् अतियुष्मत् । अतितव अतियुष्मयोः अतियुष्माकम् । अतियुष्मयि अतियुष्मयोः अतियुष्मासु । उक्तं च प्रक्रियाकौमुद्याम्–'सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ॥ त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ एते परत्वाद् बाधन्ते युवावौ विषये स्वके । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥' यथा–प्रियस्त्वम् प्रियौ युवां प्रिया यूयं वा यस्य प्रियत्वम् । एवं प्रियोऽहम् प्रियौ आवां प्रिया वयं वा यस्य स प्रियाहम् । एवं जसि प्रिययूयं प्रियवयम् । ङेविषये प्रियतुभ्यं प्रियमह्यं । ङसि प्रियतव प्रियमम ॥ तथा त्वामतिक्रान्त इत्यतित्वम् अत्यहमित्यत्रापि सिजस्ङेङस्सु प्राग्वदेदादेशाः स्युः । तथा द्विवचने युवावादेशौ च न भवतः । यथा अतित्वम् अत्यहम् अतित्वाम् अतिमाम् अति-यूयम् । अतिवयम् । अतित्वाम् अतिमाम् । द्वित्वेपि अतित्वाम् अतिमाम् अतित्वान् अतिमान् । अतित्वया अतिमया अतित्वाभ्याम् अतिमाभ्याम् अतित्वाभिः अतिमा-भिः । अतितुभ्यम् अतित्वाभ्याम् अतित्वत् अतिमत् । अतितव अतिमम अतित्वयोः अतिमयोः अतित्वाकम् अतिमाकम् । केचित्तु अतित्वयाम् अतिमयामिति । अतित्वयि अतिमयि अतित्वयोः अतिमयोः अतित्वासु अतिमासु ॥ एवं युवामावां वा अतिक्रान्त इत्यत्रापि सिजस्ङेङस्सु प्राग्वत् । अतित्वम् अत्यहम् अतियुवाम् अत्यावाम् अतियूयम् अतिवयम् । अतियुवाम् अत्यावाम् अतियुवाम् अत्यावाम् अतियुवान् अत्यावान् । अ-तियुवया अत्यावया अतियुवाभ्याम् अत्यावाभ्याम् इत्यपि ॥ एवं युष्मान् अस्मान्वा अतिक्रान्त इत्यत्रापि सिजस्ङेङस्सु प्राग्वत् । अतित्वम् अत्यहम् अतियुष्माम् अत्य-स्माम् अतियुष्मान् अत्यस्मान् । अतियुष्मया अत्यस्मया इत्यादि । एवं परमत्वं पर-माहं परमयूयं परमवयं परमतुभ्यं परममह्यं परमतव परमसम इत्यादि लोकाज्ज्ञेयम् ।

इति युष्मदस्मद् साधनम् ॥ १३ ॥

## * आदेशविशेषाः १४ * ।

अथानयोरादेशविशेषविधिर्निरूप्यते ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ** ॥ युष्मदस्मदोर्यथासंख्येनामी आदेशाः स्युः ॥ कीदृशयोः । षष्ठीचतुर्थीद्वितीयासहितयोः ( क ) । तत्रैकवचनेन सह तेमे भवतः । द्विवचनेन वांनौ । बहुवचनेन वस्नसौ च ॥१॥

( च० ) पुनर्विशेषमाह—अथेति । युष्मदस्मच्छब्दयोः साधनानन्तरं कश्चित् आदेशस्य विशेष आदेशविशेषस्तस्य विधिः । आदेशाः पूर्वं कथिताः । अथ आदेशविशेषविधिः कथ्यते इत्यध्याहारः ॥ सूत्रम्—'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ' ॥ युष्मदस्मदोः षष्ठीद्विवचनान्तम् । षष्ठीचतुर्थीद्वितीयाभिः तृतीयाबहुवचनम् । तेमे प्रथमाद्विवचनान्तं सांकेतिकम् । वांनौ प्रथमाद्विवचनान्तं सांकेतिकम् । वस्नसौ प्रथमाद्विवचनान्तम् । 'स्वरहीनं०' पञ्चपदमिदं सूत्रम् ॥ युष्म० । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयानामेकवचनबहुवचनेषु क्रमेण अमी अग्रे वक्ष्यमाणाः तेमे वांनौ वस्नस् आदेशा भवन्ति । अयं भावः—षष्ठीचतुर्थ्योरेकवचनेन सह युष्मदस्ते अस्मदश्च मे आदेशः । द्वितीयैकवचनस्य त्वा मा इति विशेषविधानात् ते मे न भवतः । षष्ठीचतुर्थीद्वितीयाद्विवचने युष्मदो वां अस्मदश्च नौ आदेशः । षष्ठीचतुर्थीद्वितीयाबहुवचने युष्मदो वस् अस्मदश्च नस् आदेशः । द्वितीयाचतुर्थीषष्ठीति वक्तव्ये व्युत्क्रमेण षष्ठीचतुर्थीद्वितीयाभिरित्युक्तत्वात् क्वचित्त्वया मयेत्यस्मिन्नर्थे तेमे भवतः इत्यपि सूचितम् । यथा 'श्रुतं ते निखिलं पार्थ' इत्यादि प्रयोगेषु । तथा च । 'कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम्' । तथा च रघुकाव्ये—'ज्ञेये केन विनीतौ वां' इत्यादि प्रथमाद्विवचनेऽपि वामित्यादेशार्थम् । केचित् वामित्यव्ययं मन्यन्ते ॥

'विपर्ययविधानेन नियमो नेष्यते बुधैः ॥
'अतो विभक्तिष्वन्यासु भवन्ति वस्नसादयः' ॥

यद्वा षष्ठीचतुर्थ्योरत्र षष्ठ्या अल्पस्वरत्वात् पूर्वं निपातः । द्वितीयापेक्षया चतुर्थ्याश्च समस्वरत्वात्पूर्वनिपातः ( ख ) इति द्वन्द्वः ॥ १ ॥

स्वामी ते स समायातः स्वामी मे सांप्रतं गतः ।
नमस्ते भगवन् भूयो देहि मे मोक्षमव्ययम् ॥ १ ॥
स्वामी वां स जहासोच्चैर्दृष्ट्वा नौ दानयातनाम् ।
राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः ॥ २ ॥

---

( क ) सहितग्रहणाद्युवयोः पुत्रः युष्मत्पुत्रः । आवयोः पुत्रः अस्मत्पुत्र इत्यादौ विभक्तिलोपे कृते आदेशा नेति ज्ञेयम् ।

( ख ) 'द्वितीयाचतुर्थ्योश्च समस्वरत्वात् पश्चान्निपात इति पाठान्तरम्, ॥

देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः।
स्वामी वो बलवान् राजा स्वामी नोऽसौ जनार्दनः ॥ ३ ॥
नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम्।
सानन्दान्वः प्रपश्याम: पश्यामो नः सुदुःखिनः ॥ ४ ॥

(च०) तत्रोदाहरणानि श्लोकैर्व्यञ्जयति—यथा स्वामी०। स ते तव स्वामी समायातः। मे मम स्वामी सांप्रतं गतः। अत्र स्वामित्वे षष्ठी तस्या एकत्वे ते मे इत्यादेशौ दर्शितौ। चतुर्थ्येकवचने दर्शयति—नमः भगो ज्ञानमस्यास्तीति भगवान् तस्यामन्त्रणे हे भगवन् भूयः पुनरपि वारंवारं ते तुभ्यं नमः। अत्र नमः शब्दयोगे चतुर्थी। तत्र युष्मदस्ते आदेशः। मे मह्यम् अक्षयं मोक्षं देहि प्रयच्छ। अत्र दानार्थे चतुर्थी। अस्मदो मे आदेशः एकवचनत्वात्॥ द्विवचनादेशं दर्शयति—स्वामी०। स वां युवयोः स्वामी उच्चैरतिशयेन जहास अहसत्। किं कृत्वा? नौ आवयोः दानयातनां पीडां दृष्ट्वा। अत्र षष्ठीद्विवचने युष्मदो वाम् अस्मदो नौ। वां युवाभ्यां राजा भूपतिर्दानं दास्यते मधुसूदनः कृष्णः आवाभ्यां ज्ञानं तत्त्वावबोधं दास्यते। अत्र चतुर्थीद्विवचनम् ॥ वां युवां विष्णुर्देवोऽवतात् पातु। जनार्दनः कृष्णो नौ आवां नरकाद्रक्षतु। अत्र द्वितीयाद्विवचनम् ॥ बहुत्वं दर्शयति—स्वामी०। वो युष्माकं स्वामी राजा बलवान् बलयुक्तः नोऽस्माकम् असौ जनार्दनः कृष्णः स्वामी। षष्ठीबहुत्वे रूपमिदम्। युष्मदो वस् अस्मदो नस्॥ चतुर्थीबहुवचने वो युष्मभ्यं नमः। किंविशिष्टेभ्यो वः? ब्रह्म विशेषेण जानन्तीति ब्रह्मविज्ञास्तेभ्यः। ज्ञानज्ञातृभ्य इत्यर्थः। नोऽस्मभ्यं ज्ञानं धनं ज्ञानमेव धनं दीयताम्। चतुर्थीबहुत्वरूपम्॥ वो युष्मान् वयं सानन्दान् सह आनन्देन वर्तमानान् सुदुःखिनोऽतीव दुःखयुक्तान् पश्यामः। 'पश्य त्वं नः सुखान्वितान्' इति पाठः। द्वितीयाबहुवचनरूपमिदम् ॥ १ ॥

(प्र०) षष्ठ्यादिसहितयोर्युष्मदस्मदोस्तेमयादिविधाने यथाऽमि तेमयौ बाधित्वा स्वामा इति विशेषादेशौ भवतस्तथा षष्ठ्याद्येकवचनबहुवचनयोस्तवममादिविशेषविधिभिस्तेमयादयो बाध्येरन्। ततश्च षष्ठीचतुर्थीद्वितीयाभिरिति सामान्यवचनमेतत्तद्द्विवचनमात्रविषयमेव स्यादेवं च यथासङ्ख्यत्वात्षष्ठ्यादित्रिवचनसहितयोस्तेमयौ प्रसज्येयातामित्यत आह। अथानयोरादेशविशेषविधिरिति आदेशास्तवममादयस्तेषां तेमयाद्यादेशविशेषविधानमित्यर्थः। एवं च न बाध्यबाधकभावादिदोषः। युष्मदस्मदोः तेमयादीनां प्रत्येकं युष्मदस्मद्भ्यां सम्बन्धाद्यथासङ्ख्यत्वम्। षष्ठ्यादीनां च त्रिवचनात्मकत्वेन तेमयादित्रिकाणां प्रत्येकं यथासङ्ख्यत्वमनुसन्धेयम्। षष्ठीत्यस्याल्पस्वरत्वात्पूर्वत्वम्। केचित्तु "वैपरीत्यविधानेन नियमो नेष्यते बुधैः। अतो भवन्ति सर्वासु विभक्तिषु वसादयः॥" अत एव "गेये केन विनीतौ वाम्" इत्यादिमहाकविप्रयोग इत्याहुः। अत्र "त्वौ वा" इत्यतो वानुवृत्तेस्तस्य च व्यवस्थया अनन्वादेशे विकल्पेन अन्वादेशे तु नित्यं विद्यमानपूर्वप्रथमान्तात्परयोरन्वादेशेऽपि विकल्पेन षष्ठीचतुर्थीद्वितीयाभिरिति सहार्थतृतीयानिर्देशाद्विभक्तिलोपेन भवन्ति। युवयोः पुत्रः युष्मत्पुत्र इत्यादौ अनन्वादेशे तेमयादीन् क्रमेणोदाहरन्ति। स्वामी ते इत्यादि चतुःश्लोकैः ॥ १ ॥

**त्वामाऽमा** ॥ अमा सहितयोर्युष्मदस्मदोस्त्वा मा इत्येतावादेशौ भवतः

( क ) पश्यामि त्वा मदालीढ पश्य मा मदभेदकम् ॥ २ ॥

( च० ) अमि विशेषमाह—सूत्रम्—'त्वामाऽमा' ॥ त्वामा प्रथमाद्विवचनान्तं लौकिकम् । अमा इति अम्शब्दस्य तृतीयैकवचनान्तम् । 'स्वरहीनं०' 'सवर्णे०' अमा० युष्मदः अम्सहितस्य त्वा अस्मदः मा आदेशः । अत्रोदाहरणम्—पश्यामि ॥ त्वा त्वाम् अहं मदालीढं मदव्याप्तं गर्वयुक्तं पश्यामि । मा मां मदभेदकं मदोच्चारकं पश्य ॥ २ ॥

( प्र० ) त्वामामा । अमेति तृतीया । तेमयोरपवादः । शेषं पूर्ववत् । मदेन आलीढो युक्तः मदोन्मत्त इत्यर्थः ॥ २ ॥

**नादौ** । पादादौ वर्तमानयोर्युष्मदस्मदोर्नैते आदेशा भवन्ति ॥ ३ ॥

तव ये शत्रवो राजन्मम तेऽप्यतिशत्रवः ।
तव मित्राणि यानि स्युर्मम मित्राणि तान्यपि ॥ १ ॥

( च० ) पुनरादेशनिषेधमाह—सूत्रम्—'नादौ' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । आदाविति आदिशब्दस्य सप्तम्येकवचनान्तम् । 'ङेरौ ङित्' टिलोपः पश्चात् स्वरहीनं०' ॥ सिद्धम् । पादः श्लोकचतुर्थांशः तस्यादौ तेमे वांनौ वस् नस् इत्येते आदेशा न भवन्ति । अत्रोदाहरणम् तवेत्यादि । हे राजन् ये तव शत्रवः ते ममापि अतिशत्रवः ॥

[ युष्माकं भगवान् देवश्चास्माकं पापनाशनः(ख) ॥ ] अत्र पादादित्वात्ते मे आदेशौ न भवतः ॥ "सम्बोधनपदादग्रे न भवन्ति वसादयः" ॥ सम्बोधनमामन्त्रणं तदन्तं यत्पदं तदग्रे वस्नसादय आदेशा न भवन्ति । यथा 'राजन् मम' इत्येवोदाहरणम् । अथवा 'हे देव तव दासोऽस्मि । देव तुभ्यं नमः सदा ।' पादादाविति किम् । पादादावेव एतेषामादेशानां निषेधो न तु पादमध्ये । तत्रोदाहरणं श्लोकः—"पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः । हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः ॥" नरसिंहस्य नरसिंहावतारस्य नखलाङ्गलकोटयः नखा एव लाङ्गला हलास्तेषां कोटयोऽग्रभागा वो युष्मान् पान्तु रक्षन्तु ।

---

( क ) त्वामामेति । त्वा मा अमा इति च्छेदः । तेमयोरपवादोऽयम् । आमस्तु न ग्रहणम् एकवचनान्तस्थानिनिर्देशात् । षष्ठीबहुवचनस्यामोऽत्र न ग्रहणं व्याख्यानात् । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति भावः ।

( ख ) अग्रे तव । देवास्मान्पाहि ॥ पदात्परयोरनयोरेते आदेशा वक्तव्याः ॥ त्वां पातु मां पातु ॥ एते आदेशा अन्वादेशे नित्यमनन्वादेशे वा वक्तव्याः ॥ यस्त्वं विश्वस्य जनकस्तस्मै ते विष्णवे नमः । अनन्वादेशे तु त्वं मे मम वा देवोऽसि ॥ विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा वक्तव्याः ॥ भक्तस्त्वमप्यहं तेन हरिस्त्वा त्रायते स मा ॥ अचाक्षुषज्ञानार्थधातुना योगे नैते आदेशा वक्तव्याः ॥ चेतसा त्वामीक्षते ध्यायति स्मरतीति वा ॥ चाक्षुषज्ञानार्थधातुयोगे तु भक्तस्त्वा पश्यति चक्षुषा । युक्तयुक्तेऽपि निषेधः । भक्तस्तव रूपं ध्यायति ध्यायते । रूपेण सह सम्बन्धाद्ध्यानेन युक्तं रूपं तद्रूपेण युक्तस्य तवेत्यस्य युक्तयुक्तत्वात् ॥ 'सम्बोधनपदादग्रे न भवन्ति वसादयः ।' विशेष्यपूर्वं सम्बोधनं हित्वा अन्यस्मात्सम्बोधनात्परयोर्नैते आदेशो भवन्ति ॥ इति केचित् ॥ 'देवास्मान्पाहि नृहरे विष्णोऽस्मान्पाहि सर्वतः ॥' विशेष्यपूर्वात् । हरे कृपालो नः पाहि । सम्बोधनेतरपूर्वात् । सर्वदा रक्ष देव नः ॥ अस्यापेन्यासः 'ते मे आदेशौ न भवतः' इत्युपसंहारविरुद्धः । इत्यधिकम् ।

कथम्भूताः ? हिरण्यकशिपुनाम्नो दैत्यस्य यद्वक्षो हृदयं तदेव क्षेत्रं तत्र योऽसौ असृजो रुधिरस्य कर्दमः पङ्कस्तेन अरुणा रक्ताः एवंविधा नरसिंहरूपधारिणो विष्णोर्नखरूपहका-ग्रभागा रक्षन्त्वित्यर्थः। पान्तु वः इत्यत्र पादाद्यभावात् न प्रतिषेधः(क) ॥

( प्र० ) नादाविति। आदाविति सामान्यत आदेशमात्रभूतयोरादेशनिषेधात्त्वां पातु मां पात्वित्यादौ वाक्यादिभूतयोरपि न पादादावित्यत्र नेति योगविभागात्सम्बोधनपदा-दित्याद्युक्तम्। यथा। "देवास्मान्पाहि नृहरे विष्णोऽस्मान् रक्ष सर्वदा।" विशेष्यपूर्वं सं-बोधनेतरपूर्वसम्बोधनान्तात्परयोस्तु भवन्त्येव। योगविभागस्येष्टसिद्धिहेतुत्वात् ॥ यथा। "हरे कृपालो नः पाहि सर्वदा रक्ष देव नः ॥

**चादिभिश्च ॥** चादिभिरपि योगे नैते आदेशा भवन्ति ॥ २ ॥

(च०) पुनर्निषेधान्तरमाह-सूत्रम्-'चादिभिश्च'॥ च आदिर्येषां ते चादयस्तैश्चादिभिः तृतीयाबहुवचनान्तम्। 'ङोर्विं०'। च प्रथमैकवचनान्तम्। 'अव्यया०' 'विसर्जनी०' 'स्तोः श्चुभिः श्चुः' सिद्धमिदम्। चादिभिरपि सह योगे च वा ह अह एव एतेषां पञ्चा-नामव्ययानां योगेऽपि समीपवर्तित्वे सति एते ते मे वां नौ वस् नस्रूपा आदेशाः प्रायो न भवन्ति। यथा ॥

'तव मम च समागमस्तदासीत्तव मम वा न किमप्यसाध्यमस्ति ॥

"तव मम इह मद्यकास्ति सख्यं न तव ममाह क्वचिद्भवेद्वियोगः" 'सदा तवैव भ-क्तोस्मि' इत्यादि ॥ द्विवचनादावपि प्रयोगवशाच्च ज्ञेयम् ॥ २ ॥

( प्र० ) चादिभिरिति। च वा ह अह एवेति पञ्च चादयः। "आवयोर्युवयोश्चे-शो वेधोऽहेशस्तथैव च। अहेश आवयोरेवं हरिर्मामेव रक्षतु ॥" साक्षाद्योगेऽयं निषेधः। युक्तयुक्ते तु हरो हरिश्च मे स्वामीत्यादौ भवन्त्येव। अनुक्तसमुच्चयार्थाच्चकारान्नेति योग-विभागाद्वा। अचाक्षुषज्ञानार्थे धातुभिः साक्षात्परम्परया वा योगे नैते स्युः। यथा। "चेतसा त्वां समीक्षते। भक्तस्तव रूपं ध्यायति।" चाक्षुषज्ञानार्थैस्तु। भक्तस्त्वा पश्य-ति चक्षुषेत्यादि प्रयोगतो ज्ञेयम्। नामाख्यातनिपातोपसर्गात्मकचतुर्विधशब्दानुशासनं तावच्छब्दशास्त्रम्। तत्र नाम निरूपितम्। वक्ष्यति चाख्यातम् ॥ २ ॥

इति युष्मदस्मत्प्रक्रिया ॥

## * अथाव्ययानि * ॥ १५ ॥

**चादिर्निपातः(ख) ॥** च वा ह अह एव एवं नूनम् पृथक् विना

---

( क ) युवयोरावयोश्चेशो हरिर्मामेव रक्षतु। तुभ्यं मह्यं च देवेशो दयाच्छं तुभ्यमेव च ॥ च वा ह अह एव। आदिशब्देनैते पञ्चैव गृह्यन्ते नान्ये। 'नच वाहाहैवयोगे' इति पाणिनीयवचनात् ॥ साक्षाद्योगेऽयं निषेधः। न पुनर्युक्तयुक्ते। शिवो हरिश्च मे स्वामीत्यादौ इत्यधिकम् ॥

( ख ) चादिरिति। च आदिर्यस्य चादिः। निश्चयेन पतत्यनेकेषु अर्थेषु द्योतकत्वादिति निपातः। पत्लृ पतने। अस्माज्ज्वलादेर्ण इति णप्रत्ययः। असत्त्ववाचिनामेव चादीनां निपातसंज्ञा अव्ययसंज्ञा च भवति। स्वरादीनां तु सत्ववाचिनामसत्ववाचिनां चाव्ययसंज्ञा न पुनर्निपातसंज्ञा। स्वस्ति वाचयति स्वः

-नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् स्वर् अन्तर् प्रातर् भूयस् आहोस्वित् सह नमः ऋते अन्तरेण अन्तरा नमस् अलम् कृतम् । अमानोनाः प्रतिषेधे । ईषत् किल खलु वै आरात् दूरात् भृशं यत तत् ॥ स्वराश्च । इत्येवमादिर्गणो निपातसंज्ञो भवति ॥ -द्रव्यवचनो नेति ज्ञेयम् ॥ १ ॥

( च० ) अथ चादीन्निपातानाह—सूत्रम्—'चादिर्निपातः' ॥ चादिः प्रथमैकवचनान्तम् । 'स्रोविं०' । 'निपतत्यनेकेष्वर्थेष्विति निपातः । 'स्रो०' सिद्धम् । च वा ह इत्यादि यावत् 'स्वराश्च' इत्येवमादिर्गणो निपातसंज्ञो भवति । एते निपाता उच्यन्ते । अथ तेषां किञ्चिद्विवरणं लिख्यते । पुनरर्थे समुच्चयादिषु च । वा विकल्पार्थे उपमानार्थे च । ह अह इति द्वौ खेदार्थौ पादपूरणार्थौ च । अहह इत्यपि खेदे आश्चर्ये च । एव निश्चयार्थे अवधारणे औपम्ये वा । एवम् अमुना प्रकारेण अङ्गीकारे च पूर्वोक्तस्मरणे च उपमायां च । नूनं निश्चये पृथक् भिन्नार्थो । विनाऽभावार्थो वर्जनार्थश्च । नाना बहुप्रकारवाची । स्वस्ति कल्याणार्थे । अस्ति सत्तार्थे । दोषा रात्र्यर्थे । मृषा मिथ्या एतौ द्वावसत्यार्थे । मिथस् परस्परार्थः । अथ अथो एतौ आनन्तर्यार्थे मङ्गलारम्भयोश्च अर्थान्तरकथने च । ह्यस्शब्दो गतदिनार्थे । श्वस् आगामिदिनार्थे । उच्चैस् उच्चत्ववाचकः अतिशयार्थवाचकश्च । एवम् उच्चकैरपि । एवं नीचैः नीचकैः नीचत्वार्थः हीनत्वार्थश्च । स्वर् स्वर्गार्थः । अन्तर् मध्ये । प्रातः प्रभाते । पुनर्भूयस् एतौ द्वौ पौनःपुन्ये । आहोस्वित् वितर्के । कुतश्चित् इत्यपि वितर्के । उत अथवार्थे । ऋते विनार्थे । सह सहार्थे । अन्तरेण विनार्थे । अन्तरा मध्यार्थः । नमस् नमस्कारे । अलं भूषायां निवारणे च पर्याप्ते सामर्थ्ये च । कृतं निवारणार्थे च । अ मा नो न एते चत्वारः प्रतिषेधार्थे । ईषत् स्तोकार्थे इत्यर्थः । किल खलु वै एते त्रयो निश्चयार्थे स्मरणार्थे च । आरात् निकटार्थे दूरार्थे । च दूरात् दूरार्थे च । भृशम् अत्यर्थे । यत् यस्मात्कारणात् । तत तस्मात्कारणात् । स्वराश्च । अ आ इ ई उ ऊ ऋ ॠ (ऌ) ए ऐ ओ औ एतेऽपि निपाताः। तत्र अ सम्बोधने निर्भर्त्सने च । आ वाक्यस्मरणे च । इ सम्बोधने । ई दुःखचिन्तने च । उ रोषोक्तौ निवारणे च । ऊ प्रश्ने निश्चये रोषे च । ऋकारऌकारौ क्षोभवाचकौ लोभवाचकौ च । लोभो दोषवृद्धिः । विश्रामवाचका वा । ए सम्बोधने । ऐ आश्चर्ये । ओ अनुनये । औ भवत्यर्थे । अं अङ्गीकारे । अः आश्चर्ये च इत्यादिर्गणो निपातसंज्ञो भवति । आदिशब्दादन्येऽपि ज्ञेयाः । सह साकं सार्धं सत्रा अमा एते सहार्थे । कच्चित् इष्टपरिप्रश्ने । अये कोमलामन्त्रणे । ननु निश्चये वितर्के च । नु वितर्के । नक्तं रात्रिवाचकं स्यात् । अनैकान्त्यपर्याया अनेकार्थवाचका इत्यर्थः इति समाप्त्यर्थे । नाम इति कोमलामन्त्रणे । मन्ये इति वितर्के विचारणे च । एतेषु च केचिद्वाचकाः केचित्सूचकाः । तत्र वाचकाः पृथगादयः ते ह्यर्थं वदन्ति । सु-

---

पश्यति स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वं स्वरादीनां ह्यस्त्येव । एकस्वराणां निपातानां -सन्धिर्न भवतीति निपातसंज्ञा फलम् । एकस्वराणां स्वरादीनां तु सन्धिर्भवत्येव तेषां निपातसंज्ञाभावात् ।

काश्चादयः ते किल सूचयन्त्यतः सूचका उच्यन्ते ॥ केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः । आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥ १ ॥

( प्र० ) निपातोपसर्गाणामपि स्याद्यन्तत्वात्तदन्तनिरूपणे प्राप्ते चादीन् प्रसङ्गतो निरूपयन् निपातसंज्ञासूत्रमवतारयति । चादिरिति । अद्रव्यार्थानामेव चादीनां निपातत्वदर्शनादद्रव्यार्थश्चादिर्गणो निपातसंज्ञो भवतीत्यर्थः । ततश्च चश्चोरशशाङ्कयोरिति प्राप्तमिधानाद्यादीनां चौरादिद्रव्यवाचित्वे निपातत्वं न । द्रव्यं चोक्तम् । "वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥" इति । भेद्यत्वेन विशेष्यत्वेनेत्यर्थः । अत्र यद्यपि निश्चयेन पतन्त्यनेकेष्वर्थेष्विति निपातानामन्वर्थसंज्ञाविज्ञानादनेकार्थित्वम् । तथापि प्रसिद्धप्रयोगानुसारेण बालव्युत्पत्तये कियन्तोऽप्यर्थाः कथ्यन्ते । "अन्वाचये समाहारेतरेतरसमुच्चये । विनियोगे तुल्ययोगितावधारणहेतुषु ॥ पादस्य पूरणेऽप्युक्तं नवस्वर्थेषु चाव्ययम् ।" तत्रान्वाचयो मुख्यसिद्धावप्रधाननिष्पत्तिः । समुदायप्रधानः निष्पत्तिः । समुदायप्रधानः समाहारः । प्रत्येक इतरेतरयोगः । एकत्रानेकप्रचयः समुच्चयः क्रमेणोदाहरणानि । भिक्षामट । गां चानय । पाणी च पादौ च पाणिपादम् । रामश्च कृष्णश्च रामकृष्णौ । ईश्वरं गुरुं च भज । त्वं चाहं च संयुज्यावहे । श्यातश्चोपश्रितश्च । अतीतः पन्थानं तव च महिमा वाङ्मनसयोः । ग्रामो गन्तव्यः श्रोतं च । भीमः पार्थस्तथैव च । "द्वन्द्वौ यमानावप्यति विकल्पानवक्लृप्तिषु । समुच्चये चाव्ययं वा षट्स्वर्थेषु प्रकीर्तितम् ॥" सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम । जाता मन्ये तुहिनमथिनो पद्मिनीवान्यरूपाम् । गन्तव्यं वा यवैर्व्रीहिभिर्वा । कल्प्य वेह भुजवीर्यशालिनः । वायुर्वा दहनो वा । "पादस्य पूरणे ह्युक्तं विनियोगे चातिक्रमे ।" मैत्रेयीति होवाच । त्वं ह ग्रामं गच्छ । स्तयमासते । उपविशति उपाध्यायं ह भूमौ । "विनियोगे तथाचारातिक्रमे पूजनेऽप्यह ।" त्वमह ग्रामं गच्छ । स्वयम रथेन यात्याचार्यमह पदातिं गमयति । सह माणवकमध्यापय । "अयोगस्य व्यवच्छेदेऽत्यन्तायोगान्ययोगयोः । एवावधारणे चोक्तमव्ययं चतुरर्थकम् ॥"तत्र विशेषणसङ्गतस्यायोगव्यवच्छेदोऽर्थः । क्रियासङ्गतस्यात्यन्तायोगव्यवच्छेदोऽर्थः । विशेष्यसङ्गतस्य चान्ययोगव्यवच्छेदोऽर्थः । शङ्खः पाण्डुर एव । नीलं सरोजं भवत्येव । पार्थ एव धनुर्द्धरः । कर्तव्यमेव । "एवं प्रकारे चार्थोपरेशाङ्गीकारनिश्चये । प्रकृतस्य परामर्शे निर्दिष्टेऽप्यव्ययं विदुः ॥" एवं कुरु । अग्निरेवं विप्रः । एवं पठ । एवं कुर्मः । एवमेतत् । एवंवादिनि देवर्षौ । एवं तावत् । "नूनं तर्केऽव्ययं प्रोक्तमर्थस्यापि विनिश्चये ।" नूनं शरत् फुल्ला हि काशाः । नूनं हन्तास्मि रावणम् । "पृथग्विना च भेदार्थे नानानेकविनार्थयोः ।" त्वत्तः पृथक् नास्ति बन्धुः । विना वार्तं विना वर्षम् । नानाविधं देहभृतां समाजम् । नाना नारीनिष्फला लोकयात्रा । "पुण्याशीः क्षेममाङ्गल्ये स्वस्ति प्रत्यभिवादने ।" स्वस्त्यस्तु ते धार्मिक मत्प्रसादात् । स्वस्ति तेऽस्तु लतया सह वृक्ष । स्वस्त्यस्तु ते सौम्य चिराय जीव । स्वस्ति श्रीअमुकशुभपुरात् राज्ञा नमस्कृता विप्राः स्वस्तीत्येते प्रयुञ्जते । "अस्तीति विद्यमानार्थे दोषा रात्रावुदीरितम् । मृषा मिथ्या च वितथे रहोऽन्योऽन्यार्थयोर्मिथः ।" अस्तिक्षीरा गौः । दोषामन्यमहः । मृषोद्याः । मिथ्यावादिनौ मन्त्रयेते । मिथः मिथः प्रहरतः । "प्रश्नकालस्त्र्यधिकारेषु

प्रतिज्ञायां समुच्चये । मङ्गलानन्तरारम्भेष्वष्टस्वर्थेष्वथाव्ययम् ॥" अथ शक्तोऽसि भोक्तुम् अथ कतून्ब्रूमः । अथ स्नानविधिः । गौडो भावानथेति ब्रूमः। भीमोऽथार्जुनः । अथ पञ्चमैपदानि । स्नातोऽथ भुंक्ते । अथ शब्दानुशासनम् । "अथो इत्यर्थेऽव्ययमन्वादेशे तथैव च ।" इमं वेदमध्यापय अथो एनं व्याकरणम् । "ह्यः स्यात्पूर्वदिने श्वस्तु परस्मिन्दिवसे तथा । उच्चैर्नीचैर्महत्यल्पे स्वः स्वर्गपरलोकयोः ॥" ह्योऽभवत् । श्वो गन्ता । उच्चैः पुरुषः । नीचैर्गच्छति । छायेव या स्वर्जलधेर्जलेषु । स्वर्यातस्य स्वपुत्रस्य । "अन्तर्मध्ये तथा प्रातः प्रत्यूषे श्वोऽर्थ एव च । पुनर्विशेषेऽप्रथमे भूयोऽपि पुनरर्थकम् ॥" अन्तर्बाष्पः । प्रातःसन्ध्यामुपासीत । प्रातर्भोक्ष्ये । किं पुनर्ब्राह्मणाः । पुनरुक्तम् । भूयो दर्शनम् । "आहोस्विच्च वितर्के चेदर्थेऽपि परिकीर्तितम् ।" अयं स्थाणुराहोस्वित्पुरुषः । आहोस्विदेवं वेदः । "सह साकं समं सत्रा सार्धमेव च । पुत्रेण सहागतः । एवमन्येऽपि । "मध्येऽन्तरा विनार्थे च प्रह्वीभावे नमः स्मृतम् ।" अन्तरा त्वां मां हरिः त्वामन्तरा तामरसायताक्षि । नमो देवेभ्यः । "अलं भूषणपर्याप्तिनिषेधे शक्तिवारणे ।" अलङ्कारः । अलमस्य धनम् । आलप्यालमिदं बभ्रोर्यत्स दारानपाहरत् । अलं मल्लो मल्लाय । अलमतिप्रसङ्गेन । "कृतं निषेधेऽमानोऽनास्तदर्थाः परिकीर्तिताः ।" कृतमतिविस्तरेण । अविप्र इव भाषसे । विप्रवन्न ब्रूषे इत्यर्थः । मा कुरु । नो अत्र स्थातव्यम् । नैकः सुप्तेषु जागृयात् । "ईषदल्पे किलेति स्याद्वार्तासम्भाव्यहेतुषु । रुचिन्यकरणालीकेष्वपि प्रोक्तं मनीषिभिः ॥" ईषद्गौरः । जघान कंसं किल वासुदेवः । पार्थः किल विजेष्यते । तत्किल कविनोक्तम् । एवं किल केचिद्वदति । त्वं किल योत्स्यसे गोत्रम् । वलितं किलाशुरं कृत्वा । "निषेधवाक्यालङ्कारजिज्ञासानुनयेषु च । नियमे निश्चये हेतौ विषादेऽपि खलूदितः ॥" खलूक्त्वा खलुवाचिकम् । अथो खल्वाटः । स खल्वधीते वेदम् । न खलु न खलु मुग्धे साहसं कार्य्यमेतत् । प्रवृत्तिसाराः खलु मादृशां धियः । न खलु दास्यौ । त्वदधीनं खलु देहिनां सुखम् । न विदीर्याः कठिनाः खलु स्त्रियः । "वै स्यात्संबोधने पादपूरणेऽनुनयेऽपि च ।" एवं वै विप्राः । बृहस्पतिर्वै देवानां पुरोहितः । न वै पुनः कार्यमिदं हि साहसम् । "आराद्दूरे समीपे च भृशमत्यर्थवाचकम् ।" आराच्छत्रोः सदा वसेत् । प्रतीतानारात्स्थापयेत् । भृशमाह महीपतिम् । "प्रत्कारणे तथा तत्स्यात्स्वराणां प्रतिरूपकाः । स्वरा निपातसंज्ञाः स्युरव्ययार्थस्य वाचकाः" अत्रआह प्रथमे । तत्पूज्योऽसि । "सम्बोधने तथाऽल्पार्थे अ प्रोक्तमव्ययं बुधैः । ई मर्षणे तथा खेदे रोषोक्तावपि कीर्तितम् ॥ उ हर्षोक्तौ तथा तर्के संक्रुद्धौ पादपूरणे । मन्त्रस्तोमे ऋकारः स्याल्लृकारोऽपि तथा मतः ॥ ए ऐ ओ औ च चत्वारो हूतिसम्बोधनार्थकाः । यथासम्भवमन्येषु अर्थेष्वेतेऽव्ययात्मकाः ॥" १ ॥

**त्रादिर्ङणो विभक्त्यर्थे निपात्यते ॥** तस्मिन्निति तत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र कुह क्व । अस्मिन्निति अत्र । तस्मिन्काले तदा । यस्मिन्काले यदा । कस्मिन्काले कदा । अन्यस्मिन्काले अन्यदा । सर्वस्मिन्काले सर्वदा । तेन प्रकारेण तथा । येन प्रकारेण यथा । केन प्रकारेण

कथम् । अनेन प्रकारेण इत्थम् । सर्वदा उभयथा अन्यथा अन्यतरथा इतरथा । तस्मादिति ततः । यस्मादिति यतः । अस्मादिति अतः । कुतः अमुतः युष्मत्तः अस्मत्तः भवत्तः ॥ २ ॥

( च० ) अथ विभक्त्यर्थसूचकान्निपातानाह—तत्रादिगणो विभक्त्यर्थे निपात्यते । तत्र सप्तम्यर्थे यथा सप्तम्येकवचने तस्मिन्नित्यर्थे तत्र निपातः । एवं तयोःतेषु तस्यां तयोः तासु एतेष्वपि तत्रेति निपातः । एवं सप्तम्यर्थे वर्तमानात्तच्छब्दात् त्रप्रत्ययः दलोपश्च । एवं सप्तम्यर्थे वर्तमानाद्यच्छब्दात् त्रप्रत्ययोः दलोपः । यस्मिन्नित्यस्य यत्र । किम्शब्दात् त्रप्रत्ययः किमः कुआदेशश्च । एवं सप्तम्यर्थे किम्शब्दात् अप्रत्ययः कुआदेशः । 'उवम्' स्वरहीनं० क्व । कस्मिन्नित्यस्य कुत्र कुह क्व ॥ एवं द्वि भवत् युष्मदस्मदौ च वर्जयित्वा सर्वादिगणात् सप्तम्या अर्थे त्र इति भवति । सर्वत्र उभयत्र अन्यत्र एकत्र पूर्वत्र परत्र इत्यादि । तस्मिन् काले तदा । यस्मिन्काले यदा । कस्मिन् काले कदा । एकस्मिन् काले एकदा । एवं सदा सर्वदा अन्यदा । येन प्रकारेण यथा । केन प्रकारेण कथं । अनेन प्रकारेण इत्थं । सर्वेण प्रकारेण सर्वथा । एवम् अन्यथा इतरथा अपरथा ॥ तस्प्रत्ययान्तानाह—पञ्चम्यर्थे तस् । तस्मादिति ततः यस्मादिति यतः । कस्मादित्यर्थे कुतः । अस्मादित्यर्थे इतः अतः । एवं ग्रामतः लोकतः सर्वतः ॥ २ ॥

( प्र० ) इत्येवमादिरिति इतिशब्दो गणसमाप्तिसूचकः प्रकृतपरामर्शको वा । एवमीदृशान्यादौ यस्य स तथा । आदिना श्रौषट्वौषट्वषट्प्रभृतयः प्रयोगतो ज्ञेयाः । एतेषु केचित् द्योतकाः । केचिद्वाचकाः । केचिदनर्थकाः । तदुक्तम् । "केऽप्येषां द्योतकाः केऽपि वाचकाः केऽप्यनर्थकाः । आगमा इव केपि स्युः सम्भूयार्थस्य वाचकाः ॥" इति अथ प्रत्ययान्तनिपातानाह ॥ तत्रादिरिति विभक्त्यर्थे देशकालाद्यधिकरणाद्यर्थे । युष्मदस्मदौ वर्जयित्वाऽन्यस्मात्सर्वादेर्बहुशब्दाच्च सप्तम्यर्थे त्रल् निपात्यते तद्धिते तदन्ता अव्ययसंज्ञा इत्यर्थः । तस्मिन् तयोस्तेषु तस्यां तासु वेत्यर्थे तत्र । यस्मिन् ययोः येषु यस्यां यासु वा यत्र । कस्मिन् कयोः केषु कस्यां कासु वा कुह-कुत्र-क्व ॥ २ ॥

सार्वविभक्तिकस्तस् इत्येके । पूर्वतः सर्वतः । पूर्वस्मिन्निति पुरस्तात् । अधरस्मिन्नित्यधस्तात् । परस्मिन्निति परेण–परस्तात् ॥ आहिच दूरे ॥ दूरेऽर्थे वाच्ये सति आहिच् प्रत्ययो भवति । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि वसन्ति चाण्डालाः । चकारादाच् ॥ दक्षिणा ॥ ३ ॥

(च०) सार्व० । एके आचार्या इत्याहुः । तस्प्रत्ययः सर्वविभक्तिषु भवति । सर्वासां विभक्तीनामर्थे भवतीत्यर्थः । स्वमते तु पञ्चम्यर्थे एव । कस्मादिति कुतः । पार्श्व इति पार्श्वतः । पूर्वस्यामिति पूर्वतः । एवं सर्वतः इतः इत्यादयोऽत्रसेयाः । पूर्वस्मिन्निति पुरस्तात् पूर्वस्मिन् काले देशे च पूर्वस्यां दिशि वेत्यर्थः । तथा च कालापके—'पूर्वशब्दात् दिग्देशकालार्थात्सप्तमीपञ्चमीप्रथमान्तादस्तातिः पूर्वस्य पुर्निपातः अनद्यतने काले' । एवम् अधस्तात् अध इति । एवमुपरिष्टात् उपरि इति । परस्मिन्निति परस्मिन् देशे काले

परस्यां दिशि वेति परेण । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि चाण्डाला वसन्ति । दक्षिणस्यां दिशि दूरे वसन्तीत्यर्थः । एवम् उत्तराहि वसन्ति कौरवाः । उत्तरस्यां दिशि दूरे वसन्तीत्यर्थः ॥ ३ ॥

( प्र० ) सार्वविभक्तिक इति । सर्वासां विभक्तीनामर्थे भवतीति सार्वविभक्तिकः पूर्वतः पश्यन्नग्रतो गच्छेत्यादिप्रयोगादित्यर्थः । दक्षिणस्यां दक्षिणाहि चाण्डालाः । इत्यनेन दूरार्थे सप्तम्यर्थे आहिप्रत्ययान्तनिपात इति सूचितम् । ग्रामाद्दूरेण तेषां निवासात ॥ ३ ॥

**किमः सामान्ये चिदादिः ॥** सर्वविभक्त्यन्तात्किंशब्दात्सामान्येऽर्थे चित् चन च इत्येते प्रत्यया भवन्ति ॥ कश्चित् कश्चन काचित् कचन ॥४॥

( च० ) 'किमः सामान्ये चिदादिः' त्रिषु लिङ्गेषु सिद्धादेव किं शब्दात् सामान्ये अज्ञाताद्यर्थे अनिर्धारणेऽर्थे सप्तसु विभक्तिषु चिदादिरिति । चित् चन प्रत्ययो भवति इत्यर्थः । अज्ञातः कः कश्चित् कौचित् केचित् काचित् किञ्चित् कुत्रचित् कचित् कश्चन काचन किञ्चन कचन । एवं सप्तस्वपि विभक्तिषु ॥ ४ ॥

( प्र० ) किम इति । सर्वप्रत्ययान्तात्किम्शब्दात्सामान्ये विशेषाप्रकाशनेऽर्थे चिदादिः प्रत्ययगणो भवतीत्यर्थः । केचित् । काचित् । किञ्चित् । कानिचित् । कस्मिंश्चित् । कस्याश्चिदित्यादि । किम् इति सामान्योक्तेः कचन । कुतश्चनेत्यादि ॥ ४ ॥

**तदधीनकार्त्स्न्ययोर्वा सात् ॥** तदधीनार्थे कार्त्स्न्यार्थे वा सात्प्रत्ययो भवति ॥ राज्ञोऽधीनं राजसात् । सर्वं भस्म इति भस्मसात् । अग्नेः अधीनमित्यग्निसात् ॥ सात्प्रत्ययस्य षत्वं नेच्छन्ति ॥ ५ ॥

( च० ) पुनर्निपातान्तरमाह—'तदधीनकार्त्स्न्ययोर्वा सात्' । तदधीनेति । यद्यस्याधीनमायत्तं तत्तधीनं । कृत्स्नस्य समग्रस्य भावः कार्त्स्न्यं समग्रत्वं तदधीनं च कार्त्स्न्यं च तदधीनकार्त्स्न्ये तयोः । तत एतयोरर्थे नाम्नः पुरतः सात् प्रत्ययो निपात्यते । राजन् भस्मन् । राज्ञोऽधीनं राजसात् । सर्वं भस्म भवति इति भस्मसात् । 'तदधीनकार्त्स्न्ययोः' इति सात्प्रत्ययः । 'नाम्नो नो०' राजसात् । भस्मसात् । सात्प्रत्ययस्य षत्वं नेच्छन्ति । यथा । अग्निसात् ॥ ९ ॥

( प्र० ) तदधीनेति तस्याधीन इत्यर्थे तस्य कार्त्स्न्यमित्यर्थे चेत्यर्थः । राजाधीनं राजसात् । सर्वं भस्म भस्मसादित्यर्थः । "किलात्षः सः" इत्यत्र वेड्योरित्यतो वानुवृत्तेरग्निसादित्यादौ सातः सस्य षत्वाभावः । पक्षे राजकीयम् । भस्ममयम् ॥ ९ ॥

**ऊर्युररर्यङ्गीकरणे ॥** ऊरीकृत्य उररीकृत्य ॥ ६ ॥

( च० ) 'ऊर्युररर्यङ्गीकरणे' । अङ्गीकरणेऽर्थ ऊरी उररी शब्दौ निपात्येते । ऊरीकृत्य उररीकृत्ये अङ्गीकृत्येत्यर्थः । ऊरीकृतम् । उररीकृतम् । उररीकरोति ॥ ६ ॥

**सद्यादिः काले निपात्यते ॥** सद्य अद्य सपदि अधुना इदानीम्

सम्प्रति साम्प्रतम् पूर्वेद्युः परेद्युः आशु शीघ्रम् झटिति तूर्णम् अपरद्युः यर्हि तर्हि (कर्हि) जोषम् मौनम् अन्येद्युः ॥ ७ ॥

( च० ) सद्य० । आदिकाले अर्थे कालविशेषे सद्यादिर्निपाते । सद्यस्तत्कालम् । अद्य साम्प्रतदिने । सपदि शीघ्रम् । अधुना इदानीम् । एतौ वर्तमानक्षणार्थे । अक्षिपक्ष्मावच्छिन्नकालः क्षणः । एवं सम्प्रति साम्प्रतमपि । झटिति शीघ्रम् तूर्णम् एते त्रयः औत्सुक्यार्थाः । पूर्वेद्युरिति गतदिवसार्थवाचकम् । परेद्युर्दिवसान्तरवाचकम् ॥ यर्हि यदि तर्हि तदा कर्हि कदा । आदिशब्दात् परुत् परारि एषमः अवरेद्यवि अपरेद्युः उत्तरेद्युः उभयेद्युः इत्यादयो ज्ञेयाः ॥ ७ ॥

प्रादिरुपसर्गः ॥ प्र परा अप सम् अनु अव निर् निस् दुर् दुस् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप श्रत् अन्तर् आविर् । अयं गण उपसर्गसंज्ञकः ॥ ८ ॥

( च० ) सूत्रम्—'प्रादिरुपसर्गः' ॥ प्र आदिर्यस्य स प्रादिः प्रथमैकवचनान्तम् । 'सोवि०' । उपसृज्यते धातोः समीपे क्रियते इत्युपसर्गः । प्रथमैकवचनान्तम् । 'सोवि०' ॥ प्रादि० । अग्रे उपसर्गः । 'नामिनोरः' द्विपदं सूत्रम् । प्र आरभ्य यावत् आविः प्र, परा, अप इत्यादि । 'प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिः प्रतिपर्यपयः । उप आङिति विंशतिरेष सखे उपसर्गगणः कथितः कविना' । अयं प्रादिः आविः पर्यवसानो गण उपसर्गसंज्ञकः । तत्र प्रशब्दः प्रकर्षार्थः । यथा प्रणम्य प्रवादः । 'प्रादिकर्मणि दीर्घे च सामर्थ्ये भृशसम्भवे । वियोगशुद्धिशक्तीच्छाशान्तिपूजाप्रदर्शने' । आदिकर्मणि प्रारब्धं प्रकृतम् । आयामे प्रलम्बः । सामर्थ्ये प्रभुः । भृशार्थे प्रतपति । सम्भवे प्रभवति । प्रीणने प्रतुष्यति । गमने प्रयाति । इच्छायां प्रार्थयते । शान्तौ प्रशान्तः । मुख्ये प्रवरः । अवलोकने प्रपश्यति । शुद्धौ प्रसन्ना आपः । प्रसन्नेन्द्रियः । प्रीतौ प्रसीदति राजा । पूजायां प्राञ्जलिः प्रह्वः । तत्परः पितामहात्परः प्रपितामहः । एवं प्रपौत्रः प्रशिष्यः इत्याद्यर्थेषु उपसर्गो ज्ञेयः ॥ परा इति विपरीतार्थे पराजयार्थे विमुखार्थे दूरीकरणे च । यथा पराजितः पराभूतः पराकृतः पराङ्मुखः । परावृतः पराक्रमः परामर्शः । अप असत्यार्थविकारवर्जनस्तेनकर्षणादौ । यथा अपकर्षति अपचरति । अपकृतः । अपहरति । सम् सम्भवसम्यक्प्रकारादौ । यथा सम्भवति । मिलने संगच्छति । समवाये संकरः । एवं सन्धिः सङ्केतः संस्कृतः संशयः संरम्भः संवृतम् । अनु अनुज्ञापश्चाद्वसादृश्याभिमुखहीनसामीप्यादीप्सादौ । अनुजानाति अनुवदति अनुगच्छति अनुकरोति अनुहरति । वत्सो मातरमनुधावति । अन्वर्जुनं योद्धारः । अनुमेघम् । अनुगृहम् । अव अवज्ञालम्बज्ञानशुद्धिव्याप्त्यादौ । अवगणयति । अवजानाति । यष्टिमवष्टभ्य तिष्ठति । अवगतोऽर्थः अवदानम् अवकीर्णः । निर् निश्चयनिगमनातिशयनिषेधनिर्णयादौ । निर्णयति निर्गतः निरुपमः निष्पन्नः निश्चयः निर्मक्षिकम् । दुरिति दुष्टे दुःखकष्टाद्यर्थे । दुर्जनः दुष्करम् । वि इति नानार्थवियोगविदीर्णवैषम्यवैमनस्यविशेषणाद्यर्थे । विविधं विदारितः

विकृतः विमनाः विराजते विशेषणादौ यथा । विशिनष्टि विरूप विलोमः विस्मितः विष्व. क्तः विप्रकृष्टः विमुखः विनयः । आङ् इति मर्यादाभिविधीषत्समन्तादाशंसनोपदेशाग. मादौ । यथा आसमुद्रक्षितीशानाम् आजन्मशुद्धानाम् आगच्छति आरोहति आशास्ते आलभते आलिङ्गति आरभते आदत्ते आसन्नः आवायः ॥ नि नितरं निक्षेपणादौ । निपीय निहितं निक्षिपति ॥ अधि इति अध्ययनाधीनाधिपत्याधिकाधिष्ठानादौ । यथा अधीते अधिगुणः अधितिष्ठति ॥ अपि आच्छादनादौ । अपिदधाति यतः 'अपि सम्भावना प्र. श्नशङ्कागर्हासमुच्चये' ॥ अति अतिशयादौ 'अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽव्ययः' । यथा अतिरथः अतितप्तं अतिक्रामति अतिशेते ॥ सु इति प्रशंसनातिशयसुखशोभनानु. भादौ । सुकरः ॥ उत् प्राबल्ये ऊर्ध्वक्रियोत्कर्षादौ । 'उत् प्राबल्ये वियोगे च प्रकाशे चोर्ध्वकर्मणि' । उत्कर्षति ॥ अभि अभिवादनेच्छारूपसम्मुखपराभवादौ । यथा अभिव दति अभिगच्छति ॥ प्रति प्रतिष्ठा प्रतिज्ञासादृश्यग्रहणाभिमुख्यसमीपहिंसाप्रतिषेधादौ । यथा प्रतितिष्ठति ॥ परि सामस्त्यदोषकथालिङ्गनपरिभवादौ परिभवति ॥ उप इति समी. पव्याप्त्योपरमप्रतिक्रियाध्ययनपूष्टयादौ । उपतिष्ठते ॥ श्रत् श्रद्धायामास्तिक्यबुद्धौ च । अ. न्तर्मध्ये । आविः प्राकट्ये । आविः करोति । अन्ये अर्था बृहद्वृत्तिभ्यो ज्ञेयाः । अयं प्रादिर्गणः उपसर्गसंज्ञकः । एतेऽपि बाधकानुवर्तकविशेषनिरर्थकभेदाच्चतुर्धा । यतः 'धात्व. र्थं बाधते कश्चित्कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते' । बाधते यथा—पराजयते 'उपसर्गेण धात्वर्थः' इति वचनात् ॥ तं धात्वर्थमनुवर्तते । यथा—विज्ञ. यते ॥ विशिनष्टि विशेषयति । यथा—प्रभवति ॥ निरर्थकस्तु अशोभमानार्थकः । यथा- प्रलोकते ॥ ८ ॥

( प्र० ) प्रादिः । प्र आदिर्यस्य स प्रादिर्गण उपसर्गसंज्ञः स्यादित्यर्थः । उपसृज्यते इत्युपसर्ग इत्यन्वर्थसंज्ञातो धातूपसृष्टानां तत्क्रियायोगे तां प्रत्येवोपसर्गत्वम् । ततश्च प्र. योगतो नायको यस्मात्स प्रनायकः । इत्यादौ । गमनक्रियायोगे नयनक्रियाया योगा. भावात्तां प्रत्युपसर्गत्वाभावाण्णत्वाभावः । "प्रादिः कर्मणि दीर्घेशभृशसम्भव. स्थिषु । वियोगशुद्धिशक्तीच्छाशान्तिपूजाप्रदर्शने ॥" क्रमेणोदाहरणानि । प्रयातः । प्रचला मूषकाः । प्रभुर्देशस्य । प्रवदन्ति दायादाः । हिमवतो गङ्गा प्रभवति । प्रयुक्तमन्नम् । प्रोषितः पतिः । प्रसन्नमुदकम् । प्रशक्तो विप्राय । प्रार्थयते कन्याम् । प्रशान्तोऽग्निः । प्राञ्जलिः । प्रवालम् । प्रलोकयति । "वधे गतौ दर्शने च विक्रमाभिमुखे भृशे । अधीन. मोक्षणप्रातिलोम्यकेषु परा मतः ॥" पराहतः । परागतः । परादृष्टः । पराक्रान्तः । परा. वृत्तः । पराजितः । पराधीनः । पराकृतः । पराङ्मुखः । "अपो वियोगे विकृतौ विपरीते निदर्शने । आनन्दे वर्जने चौर्ये वारणे सम्यगीरितः ॥" अपयाति । अपकृतवान् । अ. पशब्दः । अपदिशति । अपहसति । अपत्रिगर्तं वृष्टो देवः । अपहरति । अपसरति । "संयोगऐक्यप्रभवसत्यप्रत्यक्षसिद्धिषु । भूषाङ्गीकरणवलेपक्रोधाभिमुख्यवाचिसम् ॥" सङ्ग. तः । पुत्रेण संवदन्ति । संव्ययः । सम्भवत्यग्निः काष्ठैः । गां सञ्जानाति । सम्पश्यति । संसिद्धिः । संस्कृता कन्या । सङ्गृह्णाति । सन्धत्ते । संक्रुद्धः । संयाति । "वेदाधिष्ठान. सामीप्यपश्चाज्ञावानुबन्धने । साम्याभिमुख्यहीनेषु विसर्गे लक्षणेऽव्ययः ॥" अनुवाकमधीते।

अनुष्ठानदेशे । अनुमेघं वर्षति । अनुरथम् । अनुशयः । अनुकृतिः । अनुवत्सो मातरं धावति । अन्वर्जुनं योद्धारः । अनुज्ञातः । अनुधनमसतां गतिः । "ज्ञानावलम्बवृद्धीच्छार्थे व्याप्तिपराश्रवे । अन्वो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥" अवगतोऽर्थः । अवलम्ब्य यष्टिं याति । अवदातम् । अवलम्बते अवकीर्णम् । अवध्नन्ति । अवयातः । "निर्वियोगात्ययादेशातिक्रमे लाभनिश्चये ।" निःसङ्गः । निर्मेघम् । निर्दिष्टः । निष्क्रान्तः । निर्णेधः । निश्चितम् । "दुरीषदर्थे कृच्छ्रेऽर्थे कुत्सासम्पत्तिसङ्कटे ।" दुर्मतिः । दुर्जीवनः । दुर्बलः । दुर्गतः । दुर्दिनम् । "नानावियोगातिशये भृशमोहेशवाङ्मृधे । पैशुन्यात्मरणे भूषेषदर्थाभिमुख्यके ॥ अनवस्थासुखयशौर्यदर्शने विरुद्धाहृतः ।" विचित्रा गतिर्भवतः । पाणिनेर्वियुक्तः । विकीर्णः । वितता नद्यः । विमनस्कः । विभुः । विवदन्ति । विगायति । विस्मृताः । विभूषितः । विलोपितः । विमुखः । विभ्रान्तः । विशिष्टः । विक्रान्तः । विलोकयति । "आङिच्छाभयवाक्येपदर्थाश्लेपादिकर्मणि । बन्धनेऽभिविधौ शाट्ये कृच्छ्रसामीप्यसंश्रये ॥ अभिमन्वनिवृत्त्याशादानानुभवविस्मये । प्रतिष्ठादेशमर्यादास्पर्धामुख्योर्ध्वकर्मणि ॥" आकाङ्क्षते । आविग्नः । आजानाति । आताम्रनयः । आलिङ्गति । आरभते । कवचमाबध्नाति । आकुमारं यशः पाणिनेः । आचरति कपटेन । आहृतः ॥ आसन्ना वयम् ॥ आवसथः । आमन्त्रणम् । आधावति । आशास्ते । आवृत्ते । आशीतम् । आ एवं किल तत् । आस्पदम् । आदिष्टः । आमुक्तेर्दुःखम् । आहूयते मल्लं मल्लः । आगच्छति । आरोहति । "निराश्रयधोऽभूद्यादेशनित्यकौशलबन्धने । अन्तर्भावे समीपे निर्दर्शनोपरमाश्रये ॥" निकरो मणीनाम् । निपतति । निगृहीतः । निदिशति । निविशति । निपुणः । निबद्धः । निपीतमुदकम् । निकृष्टः । निदर्शनम् । निवृत्तः पापात् । निलयः । "अधिरध्ययनैश्वर्यवशित्वस्मरणाधिके ।" उपाध्यायादधीते । अधिपतिः । अधीनः । मातुरध्येति अधिकृतम् । "अपिः सम्भवगर्हाशीर्भूतिभूषासमुच्चये ।" अपि योजनमस्ति । अपि पापम् अद्यमपि । मरणमपि । अपि नह्यति हारम् । तदपि । "विक्रमातिक्रमे वृद्धौ भृशार्थातिशयेष्वतिः ।" अतिरथः । अतिक्रामति । अतिगहनम् । अतितप्तम् । अतिमनुते ज्ञानम् । "प्रशंसानुमते पूजाभृशकृच्छ्रानुमेषु सुः ।" सुपुरुषः । सुकृतम् । सुसाधुः । सुतप्तः । सुदुष्करः । सुगन्धिः । "उत्प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने । आश्चर्ये मोक्षणेऽभावे बलप्राधान्यशक्तिषु ॥" उद्बलः । उद्गच्छति । उत्क्षिपति । उत्पन्नम् । उच्चरति । उत्सुकः । उद्गतोऽश्वः । उत्पथः । उत्कः । उद्दिष्टः । उत्सहः । "अभिः पूजाभृशार्थेहाव्याप्तिसाम्याभिमुख्यके । सारूप्यवचनाहारस्वाध्यायेषु निरूपितः ॥" अभिवन्दति गुरुम् । अभियुक्तः । अभिलिप्सते । अभिस्यन्दो व्याधिः । अभिजातः । अभिमुखः । अभिरूपः । अभिधानम् । अभ्यवहरति । अभ्यस्यति । "लाक्षण्यादानहिंसाप्रोक्तौ प्रतिनिधौ क्वचित् । व्याख्याभिमुखयोर्व्याप्तौ वारणे प्रतिरुच्यते ॥" प्रतिदेवकृतस्य । प्रतिगृह्णाति । प्रतिघ्नन्ति । प्रतिज्ञातम् । अभिमन्युरर्जुनतः प्रति । प्रतिश्यायः । प्रतिसूर्यं गच्छति । प्रतिकीर्णः पांशुभिः । प्रतिषिद्धः । "परिः समन्ततोभावव्याप्तिदोषकथासु च । भूषाश्लेषे पूजने च वर्जने वसने शुभे ।" परिभ्रमति । परिगतोऽग्निर्ग्रामम् । परिवादः । परिष्करोति

कन्याम् । परिष्वजते । परिचरति गुरुम् । परित्रिगर्तेभ्यो वृष्टो देवः । परिधत्ते वासः । परिदेवनम् । "उपः सामीप्यसामर्थ्ये व्याप्याचार्यकृतौ स्मृतौ । दोषदानक्रियात्रोप्सारम्भाध्ययनपूजने ॥" उपकुम्भं तिष्ठति । उपकरोति । उपकीर्णः पांशुभिः । उपदिशति । उपरतः । उपघातः । उपहरत्यर्थम् । उपचारः । देवं देवमुपचरति । उपक्रमते भोक्तुम् । उपाध्यायादधीते । उपचितः पिता पुत्रेण । "अदित्यास्तिक्ययुद्धौ स्यादन्तर्मध्ये तथा मतम् । प्राकट्येऽर्थे तथा चाविः कविभिः परिकीर्तितम् ॥" अद्ध्यते । अन्तर्गीतः । आविष्कारः ॥ ८ ॥

**प्राग्धातोः** ॥ उपसर्गाः धातोः प्राक् प्रयोक्तव्याः ॥ ९ ॥

( च० ) अथैतेषां प्रयोजनमाह—सूत्रम्—'प्राग्धातोः' ॥ प्राक् प्रथमैकवचनान्तम् । 'अव्ययात्० ।' धातोरिति धातुशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'ओर्वि०' सिद्धम् । उपसर्गा धातोः भ्वादेः क्रियायोगे प्राक् पूर्वमादौ प्रयोक्तव्याः । यथा प्रभवतीत्यादि ॥ ९ ॥

( प्र० ) प्राग्धातोः ॥ प्रागिति सामान्योक्तेः प्रत्यवतिष्ठते । पर्याणद्धमित्यादौ व्यवधानप्रयोगेऽप्युपसर्गत्वम् । एतेषु च केचिद्धात्वर्थं बाधन्ते । यथा । आदत्ते । वितरति । केचित्तदर्थं विशिषन्ति । यथा विजयते । प्रभवति । केचिद्धात्वर्थमनुवर्तन्ते । यथा । अधीते । आचचक्षिरे । केचिच्च धात्वर्थस्य प्राधान्यादनर्थकाः । अवतिष्ठते । वितनोति । तदुक्तम् । "धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते" इति ॥ ९ ॥

**तदव्ययम्** ॥ तदिदं प्रादिचादिशब्दरूपमव्ययसंज्ञं भवति ॥ **क्त्वाद्यन्तं च** ॥ १० ॥

( च० ) अथ चादीनां संज्ञामाह—सूत्रम्—'तदव्ययम्' ॥ तत् प्रथमैकवचनान्तम् । 'नपुंसकात्स्य०' अव्ययं न व्येति न क्षयं यातीत्यव्ययम् प्रथमैकवचनान्तम् । 'अतोऽम्' 'अम्शसो०' 'मोऽनुस्वारः' पश्चात् 'स्वरहीनं०' तदिदं पूर्वोक्तं चादि चवाहेत्यारभ्य आविः पर्यन्तं यच्छब्दरूपं तदव्ययसंज्ञं भवति ॥ च पुनः 'क्त्वाद्यन्तम्' 'पूर्वकाले क्त्वा' इति सूत्रोत्पन्नः क्त्वा आदौ यस्य स क्त्वादिः । 'भुवो भावे क्यप्' इति यावत् सोऽन्ते यस्य तत् क्त्वाद्यन्तं क्त्वा तुम् क्यप् धा कृत्वस् शस् णम् वत् आम्प्रत्ययान्तः शब्दः तदव्ययसंज्ञं भवतीत्यर्थः ॥ यथा—कृत्वा कर्तुम् प्रणम्य द्विधा पञ्चकृत्वः कारं कारम् घटवत् किंतराम् बहुशः द्विः इत्यादि ॥ १० ॥

( प्र० ) क्त्वाद्यन्तम् । क्त्वादयः प्रत्यया अन्ते यस्य तत्तथा । क्त्वा, क्यप्, तुम्, णम्, च्वि, डाच्, धा, वत्, शस्, कृत्वस्, आम्, त इत्यादयः प्रयोगतो ज्ञेयाः ॥१०॥

**अव्ययाद्विभक्तेर्लुक्** ॥ अव्ययात्परस्या विभक्तेर्लुग् भवति ॥ **न तु शब्दनिर्देशे** ॥ अव्ययानां च न लिङ्गादिनियमः । तदुक्तं च-

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।

वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

उक्तान्यलिङ्गान्यव्ययानि ॥ ११ ॥

( च० ) ततः किं कार्यमित्याह—'अव्ययाद्वि०' ॥ अव्ययात् पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' । विभक्तेरिति विभक्तिशब्दस्य षष्ठ्येकवचनान्तम् । 'ङिति' 'ङस्य' 'चपा अबे०' ॥ लुक् प्रथमैकवचनान्तम् 'हसेपः०' 'नामिनो०' ॥ अव्ययात्परा या विभक्तिस्तस्या लुग्भवति । तत्रापि विशेषः—न तु शब्दनिर्देशे तु परं शब्दनिर्देशे विभक्तेर्लुक् न भवति । शब्दस्वरूपत्वेन प्रतिपादनं शब्दनिर्देशः अव्ययस्य नामग्रहणमित्यर्थः । न तु तदर्थवाचकत्वमित्यर्थः । यथा 'अवाप्योरुपसर्गयोः' इति । तथा द्वितीयवृत्तौ—'क्रीडोऽनुसम्परिभ्यः' 'समवप्रविभ्यः स्थः' 'उद्विभ्यां तपः०' इत्यादौ शब्दनिर्देशत्वादव्ययात्परस्थाया अपि विभक्तेर्न लुक् । च पुनः अव्ययानां लिङ्गादिनियमो नास्ति लिङ्गवचनविभक्तिभेदो न । उक्तं च शास्त्रान्तरे । सदृशं० । यत्त्रिषु लिङ्गेषु पुंस्त्रीनपुंसकेषु सदृशं, च पुनः सर्वासु प्रथमादिषु सप्तम्यन्तासु विभक्तिषु सदृशं, सर्वेषु वचनेषु च एकद्विबहुवचनेषु सदृशं समानरूपं, यन्न व्येति व्ययं न याति रूपान्तरं न भजति तदव्ययमित्युच्यते । अव्ययोपसंहारमग्रेतनसूत्रसम्बन्धं व्याचिकीर्षुः फक्किकामाह—उक्ता० । अव्ययानि उक्तानि कथितानि । किम्भूतानि ? अलिङ्गानि पुंस्त्वादिलिङ्गभेदरहितानि ॥ ११ ॥

( प्र० ) लिङ्गादिनियमाभावे ओङ्कारस्तुतिपराथर्वणश्रुतिसम्मतिमाह । उक्तं हीति । चादीनामव्ययीभावानां तत्रादीनां च साधारण्यार्थक्रमाल्लिङ्गविभक्तिवचनसादृश्यमुक्तम् । एतेनान्वर्थसंज्ञेयमित्युक्तम् ॥ ११ ॥

इति सारस्वतप्रसादेऽव्ययानि ॥ १९ ॥

## * स्त्रीप्रत्ययप्रक्रिया १६ ॥ *

अधुना लिङ्गविशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते ॥

**आवतः स्त्रियाम्** ॥ अकारन्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति(क) ॥ जाया माया श्रद्धा मेधा धारा इत्यादि ॥ **अजादेश्चाप् व**क्तव्यः अजाएडका कोकिला बाला शूद्रा गणिका इत्यादि ॥ १ ॥

( च० ) अधुना वक्ष्यमाणसूत्रैर्लिङ्गविशेषविजिज्ञापयिषया लिङ्गरूपो विशेषः तस्य विशेषेण ज्ञापयितुमिच्छया स्त्रीलिङ्गज्ञापनाय स्त्रीप्रत्ययाः स्त्रीत्वसूचका ये प्रत्ययास्ते प्रस्तूयन्ते प्रारभ्यन्ते इत्यर्थः । सूत्रम्—'आवतः स्त्रियाम्' आप् प्रथमैकवचनान्तम् । 'हसेः

---

(क) "अजाश्वाकोकिलाबालावत्सादौ त्रिफलादिके ।
इवादेरपवादार्थमजादेर्ग्रहणं पृथक्" ॥

अजादेश्चेति चकारग्रहणाच्छूद्रा कन्यकेत्यादौ प्रथमवयोवाचकत्वेन जातिवाचकत्वेन च ईप् प्राप्तिः । सोऽजादित्वान्न भवतीति सूचितम् ।

प:०' । अत इति अतशब्दस्य पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'स्त्रौविं०' 'वपा अवे०' । स्त्रियामिति स्त्रीशब्दस्य सप्तम्येकवचनम् । 'स्त्रियां योः' 'स्त्रीभ्रुवोः' 'वेयुवः' 'स्वरहीनं०' । सिद्धं त्रिपदम् ॥ अकारान्तं स्त्रियां वर्तमानं स्त्रीलिङ्गत्वेन निर्दिष्टं यन्नाम तस्मात्परत आप् प्रत्ययो भवति । पकारः सिलोपार्थः । उदाहरणम् जाय माय मेध श्रद्ध धार अनेन आप् प्रत्ययः । 'सवर्णे०' 'आपः' इति सेर्लोपः । अग्रे गङ्गावत् ॥ १ ॥

पुनर्विशेषमाह—'आवतः स्त्रियाम्' इत्यादिसिद्धौ पुनः 'अजादे०' इति 'जाते-रयोपधात्' इतीपो निषेधार्थं पठ्यते । अजादेरिति । अजादेः शब्दगणाज्जातिवाचि-त्वेऽपि आप् प्रत्ययो भवति । अजा एडका कोकिला बाला शूद्रा गणिका । अत्र शूद्रा अभीरजातिः । एवम् अश्वा चटका मूषिका इत्यजादयः । अत्र 'अजादे०' इत्याप् । 'सवर्णे०' । प्रथमैकवचनम् । 'आपः' ॥ १ ॥

( प्र० ) उक्तानुवादपूर्वकं स्त्रीप्रत्ययनिरूपणं प्रतिजानीते । उक्तानीत्यादि । लिङ्गेषु स्त्रीपुन्नपुंसकेषु विशेषस्त्रीलिङ्गस्य विशेषणेन ज्ञापयितुमिच्छया स्त्र्यधिकारविहिताः प्रत्ययाः स्त्रीप्रत्ययाः । यद्वशेन लोके स्त्रीयमिति प्रत्ययः । स धर्मः स्त्रीत्वम् । स च गोत्वादिव-त्सामान्यविशेषः स्तनकेशाद्यभिव्यङ्ग्यः । तदुक्तम् , "स्तनकेशादिसम्बन्धो विशिष्टा वा स्तनादयः । तदुपव्यञ्जना जातिर्गुणावस्थागुणास्तथा ॥ शब्दोपजनितोऽर्थात्मा शब्दसं-स्कार इत्यपि । लिङ्गानां लिङ्गतत्त्वज्ञैर्विकल्पाः सप्त दर्शिताः ॥" इति । तथा "इयमय-मिदमिति येषु व्यपदेशो दृश्यते लोके । स्त्रीपुन्नपुंसकानि प्रोच्यन्ते तानि लोकेन ।। गोत्वा-दिस्वाश्रयैर्दृष्टसामान्यमुपलक्ष्यते । व्यंजकैरनुवृत्तत्वात्स्त्रीत्वं पुंस्त्वादिकं तथा ।। ततो व्य-ञ्जकवैचित्र्यादेवात्र स्त्रीत्वमेव हि । व्यज्यते न तु पुंस्त्वादिः सोऽर्थः स्त्रीत्यभिधीयते ।।" इत्यादि ।। १ ॥

अजादेरिति । जातेरयोपधादित्यादिविशेषविधानादीपि प्राप्ते वचनम् । बाला वत्सा कन्यकेत्यादौ च प्रथमवयोवाचित्वादीपि चाकारादनुक्तसमुच्चयार्थात्सम्भ-स्त्राजिनशणपिण्डेभ्यः फलात् । सम्फला । भस्त्रफलेत्यादि । एकफलेत्यपि केचित् । अन्यत्र दासी फलीत्यादि । तच्चा ज्येष्ठा कनिष्ठा मध्यमेति । पुंयोगेऽपि । तथा सत्प्राक्काण्डप्रा-न्तशतैकेभ्यः परात्पुष्पादपि । सत्पुष्पा । एकपुष्पा । अन्यत्र तु शङ्खपुष्पीत्यादि । तथा नञ्पूर्वान्मूलादपि अमूला अन्यत्र दर्भमूली । ऋचि वाच्यायां पादान्तादपि । द्विपदा ऋक् । मन्नन्तादन्नन्ताच्च बहुव्रीहेर्वा । नो वेति टिलोपः । बहुसीमे । बहुसीमानौ । बहुयज्वे । बहुयज्वानौ । उपधालोपिनोऽन्नन्ताद्वा । आबीयौ नो वेति वाशब्दस्य व्यव-स्थया काप्यत्र टिलोपो न ईति । बहुराज्ञी बहुराज्यौ । बहुराजानौ इत्यादि प्रयोगानुसा-रतोऽनुसारणीयम् ।। १ ।।

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ।। १ ॥

अवगाह्य वगाह्य । अपिहितम् पिहितम् । आपिधानम् पिधानम् ॥

( च० ) अथ आप्प्रत्ययाधिकारे व्यञ्जनेभ्योऽपि तत्करणसूचकं श्लोकमाह--वष्टि-

भागु० । भागुरिराचार्यः अतोऽकारस्य लोपं वष्टि अभिलषति । कयोः ? अव अपि इत्ये-तयोर्द्वयोरुपसर्गयोः । यथा पिदधाति मुखम् अपिधानं पिधानम् । अवगाहः वगाहः । विमलगिरिवितंसः, तोयनिधौ वगाह्य इत्यादयः । च पुनः । एव अवधारणे । हलान्तानां शब्दानामापम् आप् प्रत्ययं वष्टि । यथेत्युदाहरणोपन्यासे । वाच् निश् दिश् सर्वत्र आप् 'स्वरहीनं० आपः' इति श्लोकव्याख्या ॥ 'सीमन् शब्दस्य वा आप् टिलोपश्च' ॥ सीमा ॥

( प्र० ) वष्टीति । हलान्तानामिति । स्वमतसिद्धहलप्रत्याहाराभिप्रायेण । पाठस्तु हलन्तानामिति ॥

**काप्यतः ॥ कापि इ अतः । स्त्रियां कापि परे पूर्वस्याकारस्य इकारो भवति ॥ कारिका । पाचिका । पाठिका ॥ २ ॥**

( च० ) सूत्रम्—'काप्यतः' ॥ ककारेण सहित आप् काप् तस्मिन् कापि सप्तम्येक-वचनान्तम् । अग्रे इ प्रथमैकवचनान्तं सांकेतिकम् । अग्रे अतः इति षष्ठ्येकवचनान्तम् । 'स्वरहीनं०' 'स्रोर्वि०' ॥ कापि अग्रे इ 'सवर्णे०' अतः 'इ यं स्वरे' 'स्वरहीनं०' सूत्रं सि-द्धम् ॥ स्त्रियामिति स्त्रीलिङ्गे कसहिते आपि परे अकारस्य इकारो भवति । उदाहरणं च—'डुकृञ् करणे' । कृ । 'डुपचष् पाके' पच् । करोतीति कारकः । पचतीति पाचकः । पठ-तीति पाठकः 'तृवुणौ' इति वुण् प्रत्ययः । वु । 'धातोर्नां०' इति वृद्धिः । कृ इत्यस्य कार् । पच इत्यत्र 'अत उपधायाः' इति प इत्यस्य पा । 'युवोरनाकौ' इति वु इत्यस्य अकादेशः । 'स्वरहीनं०' कारकः पाचकः पाठकः इति सिद्धम् । ततः 'आबतः स्त्रियाम्' 'सवर्णे०' ततः । 'काप्यतः' इत्यनेन अकारस्य इकारो भवति प्रथमैकवचने स् 'आपः' इति सेर्लोपः । कारिका पाचिका पाठिका इति रूपत्रयम् । 'कारिका तु स्वल्पवृत्तौ ब-हवर्थस्य सूचिका' । एवमन्यान्यप्यवसेयानि । वाटिका शाटिका ॥ कन्यायाः कापि परे ह्रस्वत्वेन नत्विकारः । कन्यका इत्यादि । क्वचिन्न भवति यथा बहुपरिव्राजका । बहु-पाठका ॥ २ ॥

( प्र० ) कापीति । ककारेणाव्यवहित आप् काप् तस्मिन् । ततश्च बहवः परिव्रा-जका यस्यां सा बहुपरिव्राजकेत्यत्रापः स्यादिपरत्वेन तेन व्यवधानान्न । अप्रत्यये साह-चर्यात्ककारोऽपि प्रत्ययसम्बन्ध्येव बोध्यः । एवं च शक्नोतीति शक्ल् शक्ताविसत्यादेः पचाद्यचि आप्प्रत्यये च शकेत्यादौ न । ह्रस्वे वेत्यतो वानुकर्षणान्ममेयं मामिकेत्यत्रैत-दर्थे ममकादेशे आपि च प्रत्ययककाराभावेऽपि भवति । तथा नरान्कायति नरिकेत्यत्रा-पि । अथ वा कापीति सामान्योक्तावपि वाशब्दव्यवस्थया शकेत्यादाविस्वाभावः । यका सकेत्यादौ प्रत्ययसम्बन्धिकाप्यपि न । एवं अधित्यका । उपत्यका । जीवका । भवका । देवका । यज्ञिका । क्षिपका । ध्रुवका । चटका । दण्डका । इष्टका । हलका । पिप्पल-का । डका । पुलका । करका । मेनका । कन्यका । पुरकेत्यादिषु प्रयोगानुसारेण नेत्व-म् । तारका ज्योतिषि । अन्यत्र तारिका । वर्णका तान्तवे अन्यत्र वर्णिका । वर्तका शकुनौ प्राचाम् । उदीचां तु वर्तिका । अष्टका पितृदैवत्ये । अष्टिकान्या । इत्यादिष्वर्थभेदेन मत-भेदेन चेत्वाभावतद्भावव्यवस्था ॥ तथा सूतकादीनां वा ॥ सूतिका । सुत्रका । पुत्रका ।

पुत्रिका । वृन्दारिका-वृन्दारका । तथा यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्त-स्यापि वा । आर्यका-आर्यिका । चटकका-चटकिका । तथा भस्त्रैषाजाज्ञाद्वास्वा एषां नञ्पूर्वाणामपि वा । भस्त्रका । भस्त्रिका । अभस्त्रिका-अभस्त्रका । एषका-एषिका । अजका-अजिका । ज्ञका-ज्ञिका । द्वके-द्विके । स्वका-स्विका । एषा द्वा एतयोर्नञ्पूर्वयोर्नेत्वम् । अनेषका । अद्वके । भस्त्रादेरुपसर्जनत्वेऽपि वा । निर्भ-स्त्रका-निर्भस्त्रिका । अभाषितपुंस्काद्विहितस्यातः स्थाने योऽकारस्तस्यापि वा । गङ्गका-गङ्गिका । अगङ्गका-अगङ्गिका । परमगङ्गका-परमगङ्गिका । उक्तपुंस्कस्य तु शुभ्रिका । तथा बहुव्रीहौ नित्यम् । अखट्विका । तथा दाक्षिणात्यिका । इहत्यिका । क्षत्यिकेत्यादौ । त्यक्त्यपोर्नित्यम् । तथा सुनयिका । सुपाकिकेत्यादौ । धात्वन्तयकयो-रपि नित्यमित्यादि । यथाप्रयोगं व्यवस्थाऽवसेया । वाशब्दाल्लोकाद्वा । अभाषितपुंस्का-दतः स्थाने आद्वा । गङ्गका । ह्रस्वो वेति व्यवस्थया ह्रस्वाभावो वा । पक्षे प्रागुक्तम् । आवतः स्त्रियामित्यत्र आविति योगविभागात्क्वचिद्धलान्तेभ्य आप्प्रत्यय इत्यभिप्रेत्य भागुरिसम्मतिमाह ॥ २ ॥

**ह्रस्वो वा ॥ स्त्रियां कापि परे तरादौ च पूर्वस्य ह्रस्वो वा भवति ॥ वेणिका वेणीका । नदिका नदीका । श्रेयसितरा श्रेयसीतरा(क) ॥ ३ ॥**

( च० ) अज्ञाते कुत्सिते चैव संज्ञायामनुकम्पने । तद्युक्तनीतावल्पे ह्रस्वे स्वार्थे च कः स्मृतः ॥ अज्ञाते—अश्वकः, संज्ञायां देवदत्तकः, तद्युक्तनीतौ गुडेन मिश्रा धाना गुडधानका, अल्पे तैलकम् , ह्रस्वत्वे वृक्षकाः, चकारात् स्वार्थेपि, चौर एव चौरकः ॥ अथ कावधिकारात् कपि परे अन्यत्कृत्यमाह—सूत्रम्-'ह्रस्वो वा' ॥ ह्रस्वः प्रथमैकवचनान्तम् । 'स्रोत० ।' वा प्रथमैकवचनान्तम् । 'अव्यया०' 'ह्वे' 'डत्रो' ॥ स्त्रियामित्यादिवृत्तिः सुगमा । न वरम् । तरादाविति । तरतमौ तद्धितप्रत्ययौ । 'तरतमेयस्विष्ठाः प्रकर्षे' इति सूत्रोत्पन्नौ । उदाहरणम्—वेणी नदी । वेण्येव वेणीका वेणिका वा । नद्येव नदीका । न-दिका वा । 'स्वार्थेऽपि' इति कप्रत्ययः । यद्वा ह्रस्वा वेणी वेणीका वेणिका वा । ह्रस्वा नदी नदीका नदिका वा । ह्रस्वात्कप्रत्ययः । 'आक्तः स्त्रियाम्' इत्याप् । अनेन सूत्रेण एकत्र णी इत्यस्य णि नदी । सर्वत्र प्रथमैकवचने स् 'स्थापः' 'सेतौ चावरणे वेणी नदीवाहे कचोचये ।' अग्रे श्रेयसितरा अतिशयेन श्रेयसी श्रेयसितरा श्रेयसीतरा वा । 'तरतमेय-स्विष्ठाः' इति तरप्रत्ययः । 'ह्रस्वो वा' इति सी इत्यस्य वा सि ॥ एवं श्रेयसीतमा श्रेय-सितमा(ख) ॥ ३ ॥

(प्र०) ह्रस्व इति । कापीति पूर्वतः तरादाविति वाशब्दव्यवस्थयोक्तम् । ते च तर-तमरूपकल्पादयः । बहुव्रीहौ कप्रत्यये वा सुसोमपाकः-सुसोमपकः ॥ ३ ॥

---

( क ) तरतः पूर्वस्य पुंवत् ॥ श्रेयस्तरा । विदुषितरा-विदुषीतरा विद्वत्तरा । भवतितरा-भवतीतरा-भवत्तरा । सतितरा-सतीतरा-सत्तरा इत्यधिकम् ॥

( ख ) आबन्तस्यानाबन्तस्यापि कप्रत्यये परे बहुव्रीहौ वा ॥ बहुमालकः बहुमालाकः । सुसोमपाक-सुसोमपकः ॥

नौकादौ न भवति । नौका ॥ वाग्रहणादेवेयं विवक्षा । निश्चीय पतन्त्यनेकेष्वर्थेष्विति निपाताः । निपातानामनेकार्थत्वात्(क) ॥

( च० ) प्रयोगान्तरे ह्रस्वनिषेधमाह—नौकादाविति । नौकादौ ह्रस्वो न भवति ॥ ह्रस्वा नौः नौका इत्यादौ शब्दे तु का इति पदं न भवति । एवं रैका ग्लौका द्यौः ॥ एवमन्येऽपि यथासम्भवमवसेयाः ॥ कुतो ह्रस्वनिषेध इत्याह—वाग्रहणादेवेति । सुगमम् । अत्राह परः—ननु विकल्पसूचको वाशब्दः कथं निषेधार्थं सूचयति ? तत्राह—निपातानामनेकार्थत्वात् । कथं ? निपतन्त्यनेकेषु बहुष्वर्थेष्विति । यथा चशब्दः पुनरर्थे समुच्चयार्थे च । एवं वा शब्दो विकल्पार्थो निषेधार्थश्चेति कुत्रचिद् विकल्पं कुत्रचिन्निषेधं सूचयतीति न दोषः ॥

(प्र०) नौका । रैका । ग्लौकेत्यादौ च नावि द्व्यक्षरेत्यादौ पुंवद्भावोऽपीत्यादि वाशब्दादवसेयम् । वाशब्दस्य विकल्पार्थत्वेऽपि निपातसंज्ञा बह्वर्थक्यादनेकार्थत्वमित्याहुः । निश्चयेनेत्यादि ॥

न्ऋण ईप् ॥ नकारान्तादृकारान्तादणन्ताच्च स्त्रियामीप् प्रत्ययो भवति ॥ दण्डिनी करिणी मालिनी । **ईपि राज्ञः अलोपो वक्तव्यः** ॥ राज्ञी । शुनी कर्त्री हर्त्री । औपगवी ॥ ४ ॥

( च० ) स्त्रीप्रत्ययाधिकारादाप्प्रत्ययमुक्त्वा ईप्प्रत्ययमाह—सूत्रम्—'न्ऋण ईप्' ॥ न् च ऋश्च अण् च न्ऋण् तस्मात् न्ऋणः पञ्चम्येकवचनान्तम् । 'स्वरहीनं०' 'ऋरम्' 'स्त्रोर्वि०' । ईप् प्रथमैकवचनान्तम् । 'हसेपः०' नकारान्ता इन्प्रत्ययादयः, ऋकारान्तास्तृप्रत्ययादयः, अणन्ता औपगवादयः, एतेभ्यः शब्देभ्यः स्त्रियां स्त्रीलिङ्गे ईप् प्रत्ययो भवति । उदाहरणम्—दण्ड दन्त कर माला । दण्डोऽस्त्यस्या इति दण्डिनी । दन्तोऽस्त्यस्या इति दन्तिनी । करोऽस्त्यस्या इति करिणी । माला अस्त्यस्या इति मालिनी । 'मान्तोपधात्' इति इन्प्रत्ययः । 'यस्य लोपः' इति अवर्णलोपः । 'स्वरहीनं०' अग्रे 'न्ऋण ईप्' इति सूत्रेण ईप्प्रत्ययः । 'स्वरहीनं' प्रथमैकवचने स् 'हसेपः०' ॥ करिणी इत्यत्र 'रषर्णो णो०' इति सूत्रेण नस्य णः ॥ एवं राजन् अग्रे ईप् प्रत्ययः । ईपि परे राज्ञो राजन् शब्दसम्बन्धिनोऽकारस्य लोपो वक्तव्यः । अनेन उपधाया अकारस्य लोपः । स्तोः श्चुभिः श्चुः' इति नस्य ञः । 'जजोर्ज्ञः' 'स्वरहीनं' राज्ञी । अन्येऽपि शुनी मघोनी इत्यादयो नान्ताः । अथ ऋकारान्ताः हृञ् हरणे । हृ । डुकृञ् करणे । कृ । हरतीति हर्त्री । करोतीति कर्त्री । शीले तृन्प्रत्ययो गुणः कर् हर् 'राचपो द्विः' जलतुम्बि० । ऋकारान्तत्वात् 'न्ऋण ईप्' इतीप् । 'ऋरम्' 'स्वरहीनं०' ॥ ४ ॥

(प्र०) न्ऋण इति । न् च ऋ च अण् च एतेषां समाहारः न्ऋण् तस्मात् । अत्र नो वेत्यतो मण्डूकप्लुत्या वानुवृत्तेः स्वस्रादिभ्यः संख्यावाचीकारान्तेभ्यश्च न । आबतः स्त्रि-

(क) उक्तं हि । निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥

यामित्यत्रापि तत एवानुवृत्तेः । पञ्चस्त्रिय इत्यादौ नलोप अकारान्तत्वेनापि प्राप्तेऽपि नकारान्तसङ्ख्यावाचित्वान्नेत्यादि व्यवस्थापनीयम् । ईपि राज्ञ इति । राज्ञीति राजन्-शब्दस्य नान्तस्य वकारमकारान्तसंयोगादुत्तरस्य चेत्यर्थो विवक्षितः । द्विदाम्नी सूरिदाम्नीत्यादिसिद्धिः ॥ ४ ॥

**यस्य लोपः ॥ इश्च अश्च यः तस्य लोपो भवति स्वरे यकारे च परे(क) ॥ ५ ॥**

( च० ) अथ अणन्ताः । उपगु उपगोरपत्यमौपगवी । 'अपत्येऽण्' 'आदिस्वरस्य ञ्णिति वृद्धिः' उ इत्यस्य औ, 'वोऽव स्वरे' इति उकारस्य अव् , 'स्वरहीनं०' अणन्तत्वादीप् । औपगव ई इति स्थिते । सूत्रम्—'यस्य लोपः' ॥ इश्च अश्च यस्तस्य यस्य षष्ठ्येकवचनान्तम् । ङस् 'ङस्य' 'इ यं स्वरे' स्वरहीनं०' लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' सिद्धम् । यद्वा इश्च ई च ई 'सवर्णे०' अश्च आ च आ 'सवर्णे०' ततः ईश्च आश्च या । यस्येति याशब्दस्य षष्ठ्येकवचनान्तम् । 'नपुंसकस्य' इति ह्रस्वः । 'ङस्य' । लोपः प्रथमैकवचनान्तम् । 'स्रोर्वि०' इति इकारस्य ईकारस्य च अकारस्य आकारस्य च लोपो भवति । वृत्तिः कण्ठ्या । न वरम् । यस्येति इवर्णस्य अवर्णस्य च लोपो भवति ईपि प्रत्यये परे तद्धिते स्वरे परे यकारे च परे । अनेन वकारस्य अलोपः । 'स्वरहीनं०' औपगवीति सिद्धम् । अणन्ताच्चेति चकारात् पञ्चादीनां नकारान्तत्वेऽपि स्वस्रादीनाम् ऋकारान्तत्वेऽपि ईप् न स्यात् । पञ्च सप्त स्वसा दुहिता ननान्दा माता तिस्रः चतस्रः इत्यादि ॥ ५ ॥

(प्र०) औपगवीत्यत्राकारलोपार्थमाह । यस्येति । इश्च अश्च यं ञितो वेत्यतो वानुवृत्त्या स्त्रीप्रत्ययसमासान्ततद्धितप्रत्ययसम्बन्धियकारस्वरेष्वेव न विभक्त्यादिस्वरे । अतो वायुः दध्यत्रेत्यादावप्रसङ्ग इति व्यवस्था ॥ ५ ॥

**षिद्गौरादिभ्यश्च ॥ षकारटकारउकारऋकारानुबन्धाच्च स्त्रियामिप् प्रत्ययो भवति । ष् वराकी । ट् कुरुचरी । उ गोमती । ऋ पचन्ती । पठन्ती इत्यादि ॥६॥**

( च० ) सूत्रम्—'ष्ट्रितः' ॥ ष् च ट् च उश्च ऋश्च ष्टृ ते इती यस्य स ष्ट्रित् तस्मात् ष्ट्रितः पञ्चम्येकवचनान्तम् । अस् । मध्ये 'उवम्' ऋरम्' 'स्वरहीनं०' 'स्रोर्वि०' इत् इति पदं षकारादिषु प्रत्येकं योज्यम् । तेन षकारानुबन्धाः षाकप्रत्ययान्तादयः, टकारानुबन्धाः टप्रत्ययान्तादयः, उकारानुबन्धा मत्वन्तादयः, ऋकारानुबन्धाः शतृप्रत्ययान्तादयः,

---

( क ) विभक्तिस्वरं युप्रत्ययं च वर्जयित्वान्यस्मिन्स्वरे यकारे च परे इति ज्ञेयम् । तेन देवे वातायुः ऊर्णायुः इत्यत्र न भवति ॥ समासतद्धितस्त्रीप्रत्ययेष्वयं विधिर्वेदितव्यः ॥ स्वस्रादीनामन्नन्तानां संख्यावाचिनां च नेप् वक्तव्यः ॥ स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ स्वसा दुहिता सीमा पञ्चेत्यादि ॥ पादन्तात्स्त्रियामीप् वा वक्तव्यः ॥ द्विपदी–द्विपात् ॥ ऋचि पादन्तादीप् वक्तव्यो न ईप् ॥ पादः पद् द्विपदा ऋक् ॥ अन्नन्ताद्बहुव्रीहेर्ङप् वा वाच्यः । बहुसीमा बहुसीमे बहुसीमाः । पक्षे बहुसीमानौ बहुसीमानः । बहुयज्वा बहुयज्वे बहुयज्वाः । पक्षे बहुयज्वा बहुयज्वानौ बहुयज्वानः ॥ उपधालोपिनोऽन्नन्ताद्बहुव्रीहेरीप् वा ॥ बहुराज्ञी बहुराज्ञ्यौ । पक्षे डाप् । बहुराजा बहुराजे । डापोऽभावे बहुराजा बहुराजानौ ॥ संख्यादेर्दाम्न ईप् ॥ द्विदाम्नी ।

तत एतेभ्यः स्त्रियामीप् प्रत्ययो भवति ॥ पानुबन्धमाह—वर निवारणे। 'पाको कगः' इति पाकप्रत्ययः। पकारस्येत्संज्ञत्वाल्लोपः। आकः 'स्वरहीनं०' पकारानुबन्धत्वात् 'ष्ट्वितः' अनेन ईप्प्रत्ययः। 'यस्य लोपः' 'स्वरहीनं०' सू। 'हसेपः'। टानुबन्धो यथा—चर गति-भक्षणयोः चर् कुरुपूर्वः। कुरुषु देशेषु चरतीति कुरुचरी। 'अटौ' इति टप्रत्ययः। टकारः इत्। अ इति। 'स्वरहीनं०' ईप्प्रत्ययादिकं प्राग्वत् ॥ उकारानुबन्धो यथा—गो गौरस्या अस्तीति गोमती। अस्त्यर्थे मतु भव। उकारानुबन्धत्वादीप् प्रत्ययः शेषं प्राग्वत्। ऋकारानुबन्धो यथा—'डुपचष् पाके' पच्। 'पठ व्यक्तायां वाचि' पठ्। 'शतृशानौ' इति शतृ प्रत्ययः। ऋकार इत् अत्। 'अप् कर्तरि' इत्यप् प्रत्ययः। अ 'स्वरहीनं०' 'अदे' इत्यप्रत्ययाकारस्य लोपः। 'स्वरहीनं' ऋकारानुबन्धत्वात् ईप्प्रत्ययः। "अप्ययोरान्नित्यम्" इति नुमागमः। 'नश्चापदान्ते०' 'स्वरहीनं०' शेषं प्राग्वत्। 'ष्ट्वितः' इति केवलधातोर्न भवति तेन—'त्रपूष् लज्जायाम्' त्रपा। 'क्षमूष् सहने' क्षमा ॥ ६ ॥

(प्र०) ष्ट्वितः। प् च ट् च उश्च आ च ष्टूत्रृ तदित् यस्य तस्मात् अत्रापि पूर्ववद्धातुवृत्तेस्त्रपूष् लज्जायामित्यादेः पचाद्यचि त्रपेत्यादौ षित्वेऽपि न। स्तनन्धयीत्यत्र घेटस्तु स्यादित्यादि व्यवस्थापनीयम् ॥ ६ ॥

**नदादेः** ॥ नदादेर्गणास्त्रियामीप्प्रत्ययो भवति। नदी गौरी गौतमी(क) ॥ ७ ॥

(च०) सूत्रम्—'नदादेः' ॥ नद आदिर्यस्य स नदादिस्तस्मात् पञ्चम्येकवचनान्तम्। 'ङिति' इतीकारस्य एकारः। 'ङस्य' इत्याकारलोपः। स्त्रोर्वि०' नदादिर्योऽसौ गणस्तस्मात्स्त्रीलिंगे ईप् प्रत्ययो भवति। नद गौर गौतम। अनेन ईप्प्रत्ययः। 'यस्य लोपः' 'स्वरहीनं०' नदादिराकृतिगणो द्रष्टव्यः। यथा नर्तकी तैषी पौषी मत्सी अनडुही अनड्वाही मातामही पितामही महिषी सूरी आगस्ती त्रिदशी ॥ ७ ॥

(प्र०) नदादेरिति। नदादेराकृतिगणत्वात्सौपर्णेयी। पीवरी जित्वरी। शर्वरी। द्वादशी। पञ्चमीप्रभृतयोऽविहितलक्षणा नदादौ ज्ञेयाः ॥ ७ ॥

**इन्द्रादेरानीप् च** ॥ इन्द्रादेर्गणास्त्रियामानीप्प्रत्ययो भवति(ख) ॥ इन्द्राणी भवानी रुद्राणी मृडानी वरुणानि। **चकारान्मातुलोपाध्यायचक्षत्रियाचार्यसूर्यार्याद्वा ॥ अर्यक्षत्रियाभ्यां वा स्वार्थे ॥** मातुलानी मातुली उपाध्यायानी उपाध्यायी क्षत्रियाणी क्षत्रिया आचार्यानी आचार्या। आचार्यादणत्वम्। सूर्याणी सूर्या अर्याणी अर्या ॥ **हिमार-**

---

(क) नदादिराकृतिगणः। तेन चतुर्थी पञ्चमी द्वादशी पौर्णमासी इत्यादि ॥ ईम्यनडुहो वाम् वक्तव्यः। अनड्वाही अनडुही ॥ हायनाद्वयसि च ॥ द्विहायनी चतुर्हायणी ॥ पुरुषाच्च परिमाणे ॥ द्विपुरुषी—द्विपुरुषा परिखा इत्यधिकम्।

(ख) इन्द्रादेरित्यादिशब्दादिन्द्र-ब्रह्म-रुद्र-भव-शर्व-मृड-वरुणादयः ॥

**ण्ययोर्महत्त्वे ॥ महद्धिमं हिमानी महदरण्यमरण्यानी । यवनाल्लि-प्याम् ॥ यवनानां लिपिर्यवनानी । यवाद्दोषे ॥ दुष्टो यवो यवानी ॥८॥**

( च० ) सूत्रम्–'इन्द्रादे०' पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्रोर्वि०' । आ-नीप् प्रथमैकवचनान्तम् । 'हसेपः०' पश्चात् 'नामिनोरः' 'स्वरहीनं' ॥ इन्द्रादेर्गणात् स्त्रियामानीप् प्रत्ययो भवति । इन्द्र भव|शर्व मृड वरुण ब्रह्म रुद्र । अनेन सूत्रेण आनीप् प्रत्ययो भवति । यथासम्भवं नकारस्य णकारः । 'यस्य लोपः' इन्द्रस्य स्त्री इन्द्राणी । 'स्वरहीनं०' 'हसेपः०' ॥ मातुलश्च उपाध्यायश्च क्षत्रियश्च आचार्यश्च सूर्यश्च अर्यश्च मातुलोपाध्यायक्षत्रियाचार्यसूर्यार्यं तत एतस्माच्छन्दषट्काद्वा आनीप् प्रत्ययो भवति । अर्य-क्षत्रियाभ्यां च स्वार्थे एव वा आनीप् ॥ मातुल २ एकत्र आनीप् अन्यत्र ईप् । 'यस्य लोपः' शेषं सुकरम् । एवम् उपाध्याय २ एकत्र आनीप् अन्यत्र 'पुंयोगे च' इतीप् । मातुलानी मातुली उपाध्यायानी उपाध्यायी । एवं क्षत्रियसुर्ययोः । 'रुर्नोणो०' भवति ॥ आचार्यादणत्वम् इति । आचार्यानी आचार्या । क्षत्रियाणी क्षत्रिया । सूर्याणी सूर्या । अर्याणी अर्या । पुंयोगे तु ईप् एव अर्यी क्षत्रियी उपाध्यायी ॥ स्वयं व्याख्यात्री तु उपाध्याया । अत्र आप् ॥ 'हिमारण्ययोर्महत्त्वे आनीप् प्रत्ययो भवति' महत् हिमं हिमानी । महत् अरण्यमरण्यानी ॥ यवनशब्दाल्लिप्यामानीप् । यवनानां तुरुष्काणां लिपिर्यवनानी ॥ यवाद्दोषे आनीप् । दुष्टो यवो यवानी ॥ ८ ॥

(प्र०) इन्द्रादेरिति । इन्द्रादेर्गणादानीप्प्रत्ययो वक्तव्य इत्यर्थः । ते च । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्यादयः । वक्तव्यत्वाल्लोकाचाराद्वा । हिमारण्ययोर्महत्त्वे । महद्धिमं हिमानी । अरण्यानी । यवाद्दोषे । दुष्टो यवो यवानी । यवनाल्लिप्याम् । यवनानी । मातुलोपाध्यायाभ्यां च वा । मातुलानी–मातुली । उपाध्यायानी–उपाध्यायी । आचार्यादणत्वं च आचार्यानी । अर्यक्षत्रियाभ्यां वा स्वार्थे । अर्याणी–अर्या । क्षत्रियाणी–क्षत्रिया । पुंयोगे तु ईवेव । ब्रह्माणी । सूर्याणी इत्यपि केचित् । इत्याद्यूह्याः । ननु अनीबेव विधीयतां सवर्णदीर्घत्वे चेन्द्राणीत्यादिसिद्धेः । विधानसामर्थ्याच्च यस्य लोप इत्यलोपो न स्यात् । अन्यथानीपमेव कुर्य्यादिति चेत्सत्यम् । इन्द्रमाचष्टे इन्द्रयति । इन्द्रयतीन्द्रस्तस्य स्त्री इन्द्राणीत्यादावपि दीर्घश्रुत्यर्थमानीब्विधिः ॥ ८ ॥

## ईप्समाहारे गुणश्च ॥ त्रयाणां समाहारः त्रयी ॥

( च० ) सूत्रम्—ईप् समाहारे गुणश्च' ॥ समाहार एकीभावस्तत्रार्थे ईप् प्रत्ययो भवति नामिनो गुणश्च। त्रि त्रयाणां समाहारस्त्रयी समाहारत्वात् ईप् । इकारस्य एकारो गुणः । 'ए अय्' 'स्वरहीनं०' 'हसेपः०' ॥ केचित्तु ईप्समाहारे गुणश्च इति न मन्यन्ते । तन्मते 'तयायटौ संख्यायाम्' इति त्रिशब्दादयटि कृते 'यस्य०' इतीकारलोपे टित्वात् 'ष्टिवतः' इतीप् । पुनः 'यस्य लोपः' 'स्वरहीनं०' त्रयोऽवयवा यस्मा इति त्रयी ॥

(प्र०) ब्रह्माणीत्यादौ नो वेति टिलोपेऽपि दीर्घश्रवणार्थं च ईप्समाहार इति । समा-

हारेऽर्थे वाच्ये ङ्प्रत्ययः पूर्वस्य गुणो वक्तव्य इत्यर्थः। त्रयाणां समाहारस्त्रयी। एवं द्वयीत्याद्यपि॥

**पुंयोगे च॥** पुंयोगे च स्त्रियामीप्प्रत्ययो भवति। शूद्रस्य भार्या शूद्री। गणकी(क)॥ ९॥

(च०) सूत्रम्—'पुंयोगे च'॥ पुमान् पुरुषः तस्य योगेऽपि ईप् प्रत्ययो भवति। शूद्र गणक। शूद्रस्य भार्या शूद्री। जात्या या काचित् भवतु परं शूद्रस्य पुरुषस्य स्त्रीत्वात् शूद्री। गणकस्य भार्या गणकी। ईप्प्रत्ययः। 'यस्य लोपः' शेषं सुकरम्॥ ९॥

(प्र०) पुंयोगे। यः शब्दः पुंयोगात्स्त्रियां वर्तते तस्मादीप्स्यादित्यर्थः। शूद्रस्य गणकस्य स्त्रीत्यर्थः। चकारात्पालकशब्दान्तान्न। गोपालिका॥ ९॥

**जातेरयोपधात्॥** जातिवाचिनोऽयकारोपधादकारान्तात्स्त्रियामीप्प्रत्ययो भवति(ख)॥ सूकरी हंसी कुक्कुटी ब्राह्मणी इत्यादि॥ अयकारोपधग्रहणात्क्षत्रिया वैश्या(ग)॥ १०॥

(च०) सूत्रम्—'जातेरयोपधात्'॥ जातेरिति पञ्चम्येकवचनान्तम्। 'ङिति' इकारस्य एकारः। 'ङस्य' इत्यकारलोपः। 'स्नोर्वि०'। अयोपध०। यो यकारः उपधा यस्य स योपधः न योपधः अयोपधस्तस्मात् पञ्चम्येकवचनान्तम्। 'ङसिरत्' 'सवर्णे०' पश्चात् 'नामिनो रः' 'स्वर०'। सिद्धम्॥ जातिं मेषादिकां वक्तीति जातिवाची तस्मात्। जातिवाची शब्दो यकारोपधोऽपि स्यादत आह अयकारोपधादिति यकारोपधावर्जितादित्यर्थः। यकारोपधावर्जिता अपरेऽपि स्वराः स्युरत आह—अकारान्तादिति सुगमम्॥ जातिलक्षणमाह 'आकृतिग्रहणाजातिर्लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह' इति। आकृतिः आकारः ग्रहणं व्यञ्जकं यस्याः सा॥ च पुनः लिङ्गानां सर्वभाक् न सर्वलिङ्गानि न भजतीत्यर्थः। यथा ब्राह्मणः पुंसि स्त्रियाम्। च पुनः सकृदुपदिष्टा सति निर्ग्राह्या निश्चेतुं शक्या सा जातिः॥ [अपत्यप्रत्ययान्तस्य चरणसंज्ञा गोत्रमपत्यप्रत्ययान्तः शब्दोऽपि जातिः चरणैः अपत्यैः सह गोत्रं जातिरुच्यते(घ)। यद्वा नित्या एका अनेकसमवेता सामान्यरूपा जातिः। यदि नित्या न, तर्हि पिण्डे नष्टे सैव नश्यति। यद्येका न, तर्हि अनेकेष्वप्येका जातिर्न स्यात्। यद्यनेकसमवेता न, तर्हि यस्मिन् पिण्डे उक्ता तस्मिन्नष्टे अन्यतरे पिण्डे न प्रतीयत इति। तस्माज्जातिवाचकशब्दादीप् प्रत्ययो

---

(क) गोपालिकादीनां न॥ गोपालिका पशुपालिका॥ सूर्याद्देवतायां चाप्॥ सूर्यस्य स्त्री देवता सूर्या। अन्या सूरी॥

(ख) अस्त्रीविषयादिति वाच्यम्। तेन मक्षिका बलाका इत्यादौ न॥ गवयहयमुकयमत्स्यमनुष्याणां न निषेधः॥ गवयी।

(ग) शूद्राज्जातौ न। शूद्रस्य जातिः शूद्रा॥ महत्पूर्वात्तु ईप्॥ महाशूद्री आभीरजातिः॥ पुंयोगे च॥ महाशूद्रस्य भार्या महाशूद्री॥

(घ) 'अपत्यप्रत्ययान्तस्य' 'गोत्रम्' इति संज्ञा, शाखाध्येतृवाचिनः 'चरणसंज्ञा', अपत्यप्रत्ययान्तः शाखाध्येतृवाची च जातिरुच्यते' इत्येवं पाठ्यम्॥

भवति । 'यस्य लोपः' प्रथमैकवचने 'हसेपः०' शेषं पूर्ववत् ॥ क्षत्रिया वैश्या । अत्र जातिवाचिनोऽपि यकारोपधत्वादीप् प्रतिषेधः । तत आप्प्रत्ययः ॥ मत्स्यमनुष्यहयगवयानां यकारोपधत्वेऽपि ईप्प्रतिषेधो न । मत्स्य ईप् प्रत्ययः 'यस्य लोपः' 'यलोपश्च' 'स्वरहीनं०' मत्सी ॥ जातेः किम् । मुण्डा ॥ अकारान्तात्किम् । गौः ॥ १० ॥

(प्र०) जातेरिति । अयोपधादिति सामानाधिकरण्योक्तेर्जातिशब्देनाभिधेयाभिधायका । भेदोपचाराज्जातिवाचका लक्ष्यन्ते इत्यभिप्रेत्याह । जातिवाचिन इति । लक्षणं चोक्तम् । "आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥" इति । गृह्यतेऽनेनेति ग्रहणम् । आकृतिः संस्थानं ग्रहणं ग्राहकं यस्याः अवयवविशेषव्यङ्ग्येत्यर्थः । एतेन गोत्वादिजातिरुक्ता । ब्राह्मणाद्याकृतेः क्षत्रियादिषु सम्भवात्तत्सङ्ग्रहायाह । लिङ्गानां चेति । या सर्वलिङ्गानि न भजतीत्यर्थः । ब्राह्मणः ब्राह्मणीत्यादेर्द्विलिङ्गत्वात् । एतच्चाधिकृतसङ्ग्रहार्थमिति । तटादेः सर्वलिङ्गत्वेऽपि पूर्णैवाल्यजातित्वम् । देवदत्तादेरसर्वलिङ्गत्वेनातिव्याप्तावाह । सकृदाख्यातेति । सकृदुपदेशनिश्चेयेत्यर्थः । एतेन निश्चयत्वमेकत्वं प्रत्येकपरिसमाप्तत्वं चोक्तम् । ततश्चोक्तस्मिन् पिण्डे उपदिष्टा तस्मिन्नष्टेऽपि पिण्डान्तरे उपलम्भात् । देवदत्तादेश्च संज्ञाशब्दत्वेनातथाभावान्नातिव्याप्तिरिति भावः । नन्वेवमत्यप्रत्ययान्तस्य सर्वलिङ्गेऽप्याकृतिग्रहणाभावादव्याप्तिः स्यादत आह । गोत्रं च चरणैः सहेति । गोत्रमिति पूर्वाचार्याणामपत्यसंज्ञा । चरणानां वेदशाखाध्ययनक्रियासम्बन्धात् क्रियाशब्दानां जातित्वार्थमुक्तिः । अत्र जातेरिति योगविभागात् गवयहयमुकयमत्स्यमनुष्येभ्यो योपधेभ्यो निषेधो न गवयीत्यादि । नो वेत्यतो मण्डूकप्लुत्या वानुवृत्तेर्मक्षिका बलाकेत्यादौ स्त्रीमात्रविषयत्वाज्जातिवाचिनो न ॥ १० ॥

**प्रथमवयोवाचिनोऽत ईप् वक्तव्यः ॥ [ कन्याशब्दान्न ]**

**कुमारी किशोरी कलभी ॥ प्रथमवयोग्रहणाद्वृद्धा स्थविरा इत्यत्र न । अद्ग्रहणाच्छिशुः ॥**

( च० ) प्रथम० । कालकृता शरीरावस्था वयः । प्रथमवयो बाल्यं तद्वाचीत्येवंशीलादकारान्ताच्छब्दादीप्प्रत्ययो भवतीत्यर्थः । कुमार किशोर कलभ अनेन ईप् प्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने 'हसेपः०' ॥ वृद्ध स्थविर । अत्र प्रथमवयोवर्जितत्वादाप्प्रत्ययः नत्वीप् ॥ शिशुः । अत्र प्रथमवयोवाचित्वे सत्यपि अकारान्तत्वाभावादीप्प्रत्ययप्रतिषेधः । प्रथमैकवचने 'स्रोर्विः' ॥

(प्र०) प्रथमवयोवाचिन इति । कालकृता शरीरावस्था यौवनादिर्वयः । तत्र यद्यपि केचित्कौमारयौवनमध्यत्ववृद्धत्वानि चत्वार्याहुः । अन्ये तु कौमारयौवनस्थविरत्वानि त्रीणीच्छन्ति । अपरे " आषोडशाद्भवेद्बालो यावत्क्षीरनिवर्तकः मध्यमः । सप्ततिर्यावत्परतो वृद्ध उच्यते ॥" इत्यन्यथा त्रीण्याहुः । तथापि यावत्यो वृद्धिमत्योऽवस्थास्ताः सर्वा एकीकृत्य प्रथमं वयः । याश्चापचयवत्यस्ता राशीकृत्य द्वितीयमिति । द्विवयःपक्षोऽत्राभिप्रेतः । स चोक्तः । "वर्द्धतां यावदन्नेन वर्धितव्यं पश्चादपायेन युज्यताम् ।" इति । एतदेवाभिप्रेत्याह । प्रथमग्रहणाद्वृद्धेति ॥

**स्वाङ्गाद्वा ॥ स्वाङ्गवाचिनो वा स्त्रियामीप्प्रत्ययो भवति ॥ सुमुखी–सुमुखा ॥ मृगाक्षी–मृगाक्षा ॥ तन्वङ्गी–तन्वङ्गा (क) ॥ ११ ॥**

( च० ) सूत्रम्—'स्वाङ्गाद्वा' ॥ स्वं स्वकीयमङ्गं स्वाङ्गं तद्वाची शब्दोऽपि स्वाङ्ग इत्युच्यते । यद्वा सुष्ठु शोभनमङ्गं स्वङ्गम् स्वङ्गमेव स्वाङ्गम् । यद्वा सुष्ठ शोभनं आसमन्तात् अङ्गम् स्वाङ्गम् । स्वस्य प्राणिनोऽङ्गं स्वाङ्गम् तस्मात् पञ्चम्येकवचनान्तम् । 'इसिरत्' 'सवर्णे०' ॥ वा प्रथमैकवचनान्तम् । 'अव्यया' 'चपा अबे०' 'स्वरहीनं०' । सिद्धम् । स्वाङ्गेति 'प्राणिस्थमद्रवं मूर्तं स्वाङ्गं स्यादविकारजम् । तत्र दृष्टमतत्स्थं चेत्स्थितं तद्वच्च तादृशि' ॥ प्राणिस्थं चेतनशरीरे वर्तमानम् । पुनः अद्रवं स्वेदादिरहितम् पुनर्मूर्तम् आकारसहितम् पुनः अविकारजं शोफादिविकाररहितं तत् स्वाङ्गमुच्यते । पुनर्मूर्तं तत्र प्राणिनि दृष्टं पश्चात् यदि अतत्स्थं अप्राणिस्थं भवति तदपि स्वाङ्गम् ॥ च पुनः तद्वत् प्राणिवत् तादृशि प्राणिसदृशे अप्राणिन्यपि स्थितं भवति तदपि वा स्वाङ्गम् । यत्तु अप्राणिस्थं द्रवरूपं अमूर्तम् अरूपम् विकाराज्जातम्, तत् स्वाङ्गं न । यथा सुमुखा शाला अप्राणिस्थत्वात् । बहुस्वेदा द्रवत्वान्नेप् । सुज्ञाना अमूर्तत्वात् । बहुशोफा विकारजत्वान्नेप् । सुकेशी सुकेशा वा रथ्या प्राणिस्थस्य अप्राणिनि दृष्टत्वात्, सुस्तनी सुस्तना वा प्रतिमा प्राणिवत् प्राणिसदृशे स्थितत्वात् । इत्यादौ विकल्पेनेप् । स्वाङ्गं मुखकर्णादि तद्वाचिनः शब्दात् स्त्रियामीप्प्रत्ययो भवति । वाशब्दः प्रयोगान्तरे निषेधार्थो न विकल्पार्थः । सुमुख मृगाक्ष तन्वङ्ग । सुष्ठु मुखं यस्याः सा सुमुखी । मृगवत् अक्षिणी यस्याः सा मृगाक्षी । तनु कृशमङ्गं यस्याः सा तन्वङ्गी 'स्वाङ्गा०' इतीप् । 'यस्य लोपः' 'स्वरहीनं' 'हसेपः' ॥ वा शब्दस्य निषेधार्थत्वात् पद्मवदना कमलनयना इत्यादौ ईप्प्रत्ययो न भवति ॥ ११ ॥

(प्र०) स्वाङ्गादिति । स्वाङ्गस्वरूपं चोक्तम् । "अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥" इति । शरीराभ्यन्तरचारी वायुः प्राणः सोऽस्यास्तीति प्राणी तत्र तिष्ठतीति प्राणिस्थं तत्स्वाङ्गम् । एवं स्वेदस्यापि प्राणिस्थत्वात्स्वाङ्गता स्यात्तत्राह । अद्रवमिति । तस्य तु द्रवत्वान्न । एवमपि ज्ञानस्य प्राणिस्थत्वादद्रवत्वाच्च स्वाङ्गता स्यादत आह । मूर्तिमदिति । असर्वगतद्रव्यपरिमाणं काठिन्यादि स्पर्शविशेषो वा मूर्तिर्यस्यास्तीति तथा । ज्ञानस्यात्मगुणत्वेन परिमाणलक्षणस्य गुणस्पर्शलक्षणस्य वा तत्रानङ्गीकारादमूर्तिमत्त्वं ज्ञानस्येत्यर्थः । एवमपि

---

(क) सुष्ठु आसमन्तादङ्गं स्वाङ्गम् ॥ स्वस्य प्राणिनो अङ्गं स्वाङ्गमित्युक्तेऽङ्गाङ्गिभावेन ज्ञानादेरपि स्वाङ्गत्वं स्यात् । अतः स्वाङ्गलक्षणमाह ॥ स्वाङ्गं स्यादद्रवं मूर्तं प्राणिस्थमविकारजम् । तत्र दृष्टमतत्स्थं चेत्स्थितं तद्वच्च तादृशि ॥ पूर्वार्धस्य प्रत्युदाहरणानि ॥ सुमुखा शाला अप्राणिस्थत्वात् ॥ सुस्वेदा द्रवत्वात् ॥ सुज्ञाना अमूर्तत्वात् ॥ सुशोफा विकारजत्वात् । उत्तरार्धस्योदाहरणानि ॥ सुकेशी–सुकेशा वा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ॥ सुस्तनी–सुस्तना वा प्रतिमा । प्राणिवत्प्राणिसदृशे स्थितत्वात् ॥ स्वाङ्गत्वेऽपि वाशब्दस्य व्यवस्थितत्वात् । ओष्ठादिषु विकल्पः । वादनादिषु न वक्तव्यः । बिम्बोष्ठी–बिम्बोष्ठा ॥ चारुकर्णी–चारुकर्णा । समदन्ती–समदन्ता ॥ पद्मवदना । मृगनयना इत्यादौ ईप् ॥ नखमुखयोश्च संज्ञायां नेप् ॥ शूर्पणखा । गौरमुखा ॥ नासिकाशब्दात्केवलान्नेप् ॥ नासिकेत्याधिकम् ।

शोफादेश्चोक्तलक्षणवत्स्वाङ्गता स्यादत आह । अविकारजमिति । विकारो वातादि-वैषम्यं ततो न जातम् । शोफादिस्तु विकारजः । रथ्यादिपतितकेशादेः स्वाङ्गतासङ्ग्रहार्थमाह । अतत्स्थं तत्र दृष्टं चेति । तत्र प्राणिनि न दृष्टम् । अन्यदा तत्रावर्तमानमपि स्वाङ्गम् । एवमपि प्रतिमाद्यवयवानां मुखादीनां प्राणिस्थेनाविशेषादिना सम्बन्धः तथा यद्यत्प्राणिनापि सम्बद्धं स्यात्तदपि तथेत्यर्थः । प्राणिमुखादिसदृशमप्राणिमुखाद्यपि स्वाङ्गमिति भावः । उदाहरणं तु सुकेशी-सुकेशा वा रथ्या । सुस्तनी-सुस्तना वा प्रतिमा । प्रत्युदाहरणं तु क्रमेण । सुमुखा शाला । बहुस्वेदा । सुज्ञाना । सुशोफेत्यादि ॥ ११ ॥

**कृदिकारादक्तेरीप् वा वक्तव्यः** ॥ अङ्गुली-अङ्गुलिः ॥ धूली-धूलिः ॥ आजी-आजिः ॥ अक्तेरिति विशेषणात्कृतिः मतिः भूतिः ॥

( च० ) 'कृदिकारा०' ॥ कृदिति तृतीयावृत्तिः । तत्प्रत्ययोत्पन्नो योऽसौ इकारस्तस्मादीप्प्रत्ययो भवति किंविशिष्टात् ? । अक्तः क्तिप्रत्ययवर्जितादिकारादित्यर्थः । उदाहरणम्—धू । 'ध्वादेरुलिः' इति उणादित्वादुलिप्रत्ययः । 'सवर्णे०' धूलिः धूली ॥ अगि रगि लगि गत्यर्थाः । अग उलिप्रत्ययः । 'इदित०' इति नुमागमः । 'नश्चापदा०' 'स्वहीनं०' अङ्गुलिः अङ्गुली ॥ अज गतौ क्षेपणे च । अज् । उणादौ इञ् प्रत्ययः । णित्वात् 'अत उपधायाः' इति वृद्धिः । 'स्वरहीनं०' आजिः आजी । अनेन वा ई प्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' 'हसेपः' प्रथमैकवचने । अन्यत्र 'स्त्रीविं०' ॥ अक्तेरिति किम् । डुकृञ् करणे । कृ । मनु ज्ञाने । मन् । भू सत्तायाम् । भू । 'क्तिरापा०' इति क्तिप्रत्ययः । ति मन् इत्यत्र । 'लोपस्त्वनुदात्ततनाम्' इति न लोपः । अक्तेरिति विशेषणादीप्प्रत्यय प्रतिषेधः ॥

(प्र०) कृदिकारादिति । अक्तेरित्यत्र क्तिशब्देन क्त्यर्थो गृह्यते । अक्त्यर्थादित्यर्थः । ततश्च अकरणिः । अहरणिरित्यादौ न वक्तव्यत्वाद्वा ॥

**ऐ च मन्वादेः** ॥ मन्वादेर्गणात्स्त्रियामीप्प्रत्ययो भवति ऐकारादेशश्च ॥ आदिशब्दान्मन्वग्निवृषाकपिपूतक्रतुकुसितकुसीदा ग्राह्याः ॥ मनोर्भार्या मनायी वृषाकपायी । चकारान्मनोष्टैरौ वा ॥ मनावी(क) ॥ १२ ॥

( च० ) सूत्रम् । 'ऐ च मन्वादेः' ॥ ऐ प्रथमैकवचनान्तं सांकेतिकम् । च प्रथमैकवचनान्तम् । 'अव्यया०' मनुरादिर्यस्य स मन्वादिस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' 'स्त्रीविं०' ॥ मन्वादेरिति वृत्तिः सुकरा । अन्त्यस्वरस्य च ऐकारादेशो भवति । उदाहरणम्—मनु । मनोर्भार्या मनायी । वृषाकपि । वृषस्य धर्मस्य आसमन्तात् कं फलं पिबतीति वृषाकपिस्तस्य भार्या वृषाकपायी । उकार—इकारयोरैकारः । 'ऐ आय्' 'स्वरहीनं०' प्रथमैकवचनान्तं 'हसेपः' ॥ चकारान्मनुशब्दसम्बन्धिन उकारस्य औकारो भवति । तत 'औ आव्' 'स्वरहीनं०' मनावी । एवम् अग्नायी स्वाहा वह्निप्रिया । पूतक्रतोः स्त्री पूतक्रतायी । 'यया तु क्रतवः पूताः स्यात् पूतक्रतुरेव सा' । कुसित ऋषि-

(क) अग्नेर्भार्या अग्नायी ॥ पूताः क्रतवो यस्येति पूतक्रतुः । पूतक्रतोर्भार्या पूतक्रतायी इति विशेषः ।

स्तस्य भार्या कुसितायी। कुसीदो वृद्धिजीविकः तस्य भार्या कुसितायी॥ १२॥

(प्र०) ऐ चेति। मन्वादेरित्यादिशब्दाद्वृषाकप्यग्निकुसितकुसीदपूतक्रतवो गृह्यन्ते। पूतक्रतोस्तु पुंयोग एव। अन्या पूतक्रतुः। स्त्री॥ १२॥

**पत्न्यादयः॥** पत्न्यादयः शब्दा निपात्यन्ते(क)॥ अन्तर्वत्नी। पतिवत्नी। सखी। अशिश्वी। अर्धजरती। युवती॥ प्राची। प्रतीची॥ उदीची। नारी। दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गः। दाराः। दारान्। दारैः। दारेभ्यः। दारेभ्यः। दाराणाम्। दारेषु॥ १३॥

(च०) सूत्रम्—'पत्न्यादयः'॥ पत्नी आदिर्येषां ते पत्न्यादयः। प्रथमाबहुवचने जस्। 'ए ओ जसि' 'ए अय्' 'स्वरहीनं' 'स्रोर्विं०'॥ पत्न्यादयः शब्दा ईप्प्रत्ययान्ता निपात्यन्ते। न वरम्। पत्नी भार्या। अन्तर्वत्नी गुर्विणी। नारी स्त्री। सखी प्रसिद्धा। पतिवत्नी जीवद्भर्तृका। अशिश्वी अप्रसूता। अर्धजरती अर्धवृद्धा युवती स्त्री। प्राची पूर्वा दिक्। प्रतीची पश्चिमा दिक्। एवमन्येऽप्यूह्याः। सपत्नी एकपत्नी वीरपत्नी इत्यादि ईप्प्रत्ययान्ता निपातसिद्धा इत्यर्थः। तथा उदीची मत्सी मानुषी आगस्ती पाणिगृहीती असिक्नी पलिक्नी पितामही स्थाली कुण्डी गोणी स्थली कबरी नागी कलशी कामुकी इत्यादयः पत्न्यादिषु ज्ञेयाः॥ अकारान्तो दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गे कलत्रवाची तत आप्प्रत्ययः ईप्प्रत्ययोऽपि न भवति। किंतु दाराः दारान् दारैः दारेभ्यः दारेभ्यः दाराणां दारेषु। देवशब्दस्य बहुवचनान्तवत्साध्यः॥ १३॥

(प्र०) पत्न्यादय इति। स्वाङ्गाद्वेत्यतो वानुवृत्तेः क्वचिदर्थविशेषे क्वचिच्च वेति व्यवस्थापनीयम्। तत्र पत्नीति यज्ञसंयोग एव। अन्यत्र गवां पतिः स्त्री वृषलपत्नीत्युपमानात् विद्यमानपूर्वस्य तु वा। दृढपत्नी दृढपतिः। सपत्न्यादिषु नित्यम्। सपत्नी। एकपत्नी। अन्तर्वत्नी गर्भयोगे एव। अन्यत्रान्तर्वती शाला। तथा भर्तृयोगे। पतिवत्नी। अन्यत्र पतिमती नगरी। तथा। सखी। सवयस्था, सख्युर्भार्यापि। न शिशुर्यस्याः सा अशिश्वी। अर्धजरती। युवती। प्राची। मत्सी। मानुषी। सूरी। अगस्ती। असितपलितयोरसिक्नी। पलिक्नी। एता—एनी। जानपदी। कुण्डी अमत्रं चेत्। कुण्डा अन्या। गोणी आवपनं चेत्। गोणाऽन्या। स्थली अकृत्रिमा चेत्। स्थलाऽन्या। भाजी पक्वा चेत्। भाजान्या। नागी स्थूला चेत्। नागाऽन्या। काली वर्णा चेत्। कालाऽन्या। नीली अनाच्छादनं चेत्। नीलाऽन्या। कुशी अयोविकारश्चेत्। कुशान्या। कामुकी मैथुनेच्छावती चेत्। कामुका अन्या। कबरी केशवेशश्चेत्। कबराऽन्या। औषधौ प्राणिनि च नीली। संज्ञायां वा। नीली—नीला। शोणी—शोणेत्यादयो विहितलक्षणाः पत्न्यादौ द्रष्टव्याः॥ १३॥

**वोर्गुणात्॥** उकारान्ताद्गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति॥ पट्वी-पटुः। मृद्वी-मृदुः। तन्वी-तनुः(ख)॥ १४॥

---

(क) पत्नी आदिर्येषां ते तथा। आदिशब्दः प्रकारे। (ख) खरुसंयोगोपधान्न॥ खरुः पाण्डुः॥

( च० ) सूत्रम् । 'वोर्गुणात्' ॥ प्रथमैकवचनान्तम् । 'अव्यया०' । ओरिति उका. रदस्य पञ्चम्येकवचनान्तम् 'ङिति' 'ङस्य' इत्यकारलोपः । 'ओर्वि०' 'ओ औ औः' । अथ गुणादिति पञ्चम्येकवचनान्तम् । 'ङसिरत्' 'सवर्णे०' 'नामिनो०' जलतुम्बि० ॥ गुणा रूपादयश्चतुर्विंशतिः । 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥ बुधैः स गुण उच्यते । स कः ? यः सत्त्वे द्रव्ये निविशते वर्तते इत्यर्थः । पुनः तस्माद् द्रव्यात् अपैति याति । च पुनः पृथग् जातिषु द्रव्यत्वावान्तरजातिषु दृश्यते । च पुनः आधेयः उत्पाद्यः यथा कस्तूरिका योगाद् वस्त्रे गन्धः । पुनः अक्रियाजः अनुत्पाद्यः यथा आकाशादौ महत्त्वादि । पुनः असत्त्वप्रकृतिः अद्रव्यस्वभावः स गुणस्तद्वाची उकारान्तो यः शब्दस्तस्मात् स्त्रियां स्त्रीलिङ्गे वा ईप् प्रत्ययो भवति । पटु २ अनेन वा ईप्प्रत्ययः । 'उवम्' 'स्वरहीनं' प्रथमैकवचने' 'हसेपः' । अन्यत्र प्रथमैकवचने 'स्त्रो०' ॥ एवं मृद्वी–मृदुः । तन्वी-तनुः । बह्वी–बहुः । ऋज्वी-ऋजुः । वाग्रहणादेव खरुः पाण्डुः इत्यादौ नेप्प्रत्ययः । गुणग्रहणात् धेनुः रज्जुः अणुः इत्यादौ नेप् ॥ १४ ॥

(प्र०) वोरिति । वा ओः गुणशब्देन मतुप उपादानादभेदोपचाराद्वा गुणवद्वाचको गृह्यते । वाशब्दव्यवस्थैव खरुसंयोगोपधान्न । खरुः पतिंवरा कन्या । पाण्डुः । गुणलक्षणं चोक्तम् । "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥" इति । सत्त्वं द्रव्यं वाक्यस्यान्यवच्छेदकत्वात्सत्त्वे निविशते इत्यनेन सत्त्वस्य द्रव्यमात्रवृत्तित्वं लक्ष्यते । ततश्च सत्ताव्यवच्छेदः । तस्याद्रव्यगुणकर्मसुवृत्तेः । एवं च द्रव्यत्वस्य द्रव्यमात्रवृत्तित्वात्तत्रातिव्याप्तिः स्यादत आह । अपैति । अपगच्छति । अर्थात्सत्त्वादेव । यथा पीततायां जातायामाम्रादेर्नीलिमा । न चैवं द्रव्यत्वादिर्द्रव्यादपैति । यद्येवं गोत्वं सास्नादिमति वर्तमानमश्वादेरपैति । अत आहुः । पृथग्जातिषु न दृश्यते । दृश्यत इति । गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु गुणस्य वाम्रादौ दृष्टस्य नीलादेस्तृणादिष्वपि दर्शनात् । एवं सकलजातिव्यवच्छेदे पूर्वोक्तविशेषणविशिष्टत्वात्क र्मण्यतिव्याप्तिवारणायाह । आधेयश्चाक्रियाजश्चेति । आधेयः उत्पाद्यः पुष्पादियोगाद्वस्त्रादिष्विव गन्धनम् । अक्रियायां नित्यः आकाशादौ महत्त्वादिः । कर्म तूत्पाद्यमेव । नन्वेवं द्रव्येऽतिव्याप्तिः । तस्य स्वारम्भकावयवेषु निवेशाच्चनाशेऽपगमादुत्पाद्यरूपत्वाच्चेत्यत आह । सोऽसत्त्वप्रकृतिर्गुण इति । गुणो न द्रव्यस्वभावः । द्रव्यं तु द्रव्यस्वभावमिति । ननु स ादीनां नित्यत्वानुत्पाद्योभयरूपत्वाभावादेवातिप्रसङ्गाभावात्पूर्वार्द्धे विशेषणवैयर्थ्यमिति चेत्सत्यम् । नित्यगुणसङ्ग्रहार्थं व्यधिकरणोत्पाद्यगुणेनास्योभयरूपत्ववत् । वाक्यद्रव्यरूपजात्योर्मिलितयोरुत्पाद्यानुत्पाद्यरूपत्वादतिप्रसङ्गः स्यात्तद्वारणार्थं तदिति दिक् । "कर्मणो व्यतिरिक्तत्वे जातिमात्राश्रयो गुणः ।" इति तान्त्रिकाः ॥ १४ ॥

उत ऊः ॥ उकारान्ताद्वा ऊप्रत्ययो भवति ॥ पङ्गुः पङ्गूः ॥ वामोरुः–वामोरूः(क) ॥ १५ ॥

( क ) वाशब्दाद्रज्ज्वादौ न भवति । रज्जुः धेनुः 'इत्यधिकम् ॥ माधवकल्पे तु यूनस्तिरिति सूत्रं नास्तीति पत्न्यादित्वात् बोध्यम् ।

( च० ) सूत्रम्—'उत ऊः' ॥ उत इति उतशब्दस्य पञ्चम्येकवचनान्तम्। 'स्वरहीनं०' 'स्त्रोर्वि०'। ऊः प्रथमैकवचनान्तं 'स्त्रोर्वि०' मध्ये। 'आदवे लोपश्' वृत्तिः कण्ठ्या। नवरम्। गुणवाचिनोऽगुणवाचिनोऽपि मनुष्यजातिवाचिन उकारान्तात् ऊ प्रत्ययो वा भवति ॥ उदाहरणम्—पङ्गु अनेन ऊप्रत्ययः। 'सवर्णे०' 'स्त्रोर्वि०' पङ्गुः-पङ्गूः ॥ एवं वामोरुः-वामोरूः करभोरुः करभोरूः ॥ २१ ॥

( प्र० ) उत इति। अत्रापि पूर्वतो वानुवृत्त्यैव। धेनुः रज्जुरित्यादौ न। यद्यपि ह्रस्वोकारविधानेऽपि दीर्घैकादेशाद्दीर्घश्रवणमुपपद्यते। तथापि दीर्घविधानसामर्थ्यात्। ब्रह्मबन्धूः। जीवबन्धूरित्यादौ समासान्तकप्रत्ययाभावार्थमित्यनुसन्धेयम् ॥ २१ ॥

**यूनस्तिः** ॥ युवन्शब्दास्त्रियां तिप्रत्ययो भवति। (क)युवतिः ॥ एभ्यो नामत्वात्स्यादयः ॥ आबन्तात् 'आपः' इति, ईबन्तात् 'हसेपः सेर्लोपः' इति सिलोपः पूर्ववत्प्रक्रिया ॥ २२ ॥

इति स्त्रीप्रत्ययप्रक्रिया ॥ १६ ॥

---

( क ) अत्रेदमवधेयम्।

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥

इति लक्षणलक्षितमवयवसंस्थानविशेषात्मकं लौकिकं स्त्रीपुंसयोर्लिङ्गम्। तदभावे तयोरुभयोरभावे सति तदुभयोरन्तरं सदृशं तन्नपुंसकमित्यर्थः। तदिदं लौकिकं लिङ्गमस्मिन् शास्त्रे नोपयुज्यते। तस्य अचेतनं खट्वामालादौ बाधात् स्त्रीप्रत्ययानापत्तेः। दारानित्यादौ 'सोनः पुंसः' इति नत्वानापत्तेश्च किं तु सत्त्वरजस्तमसां प्राकृतगुणानां वृद्धिः पुंस्त्वम्। अपचयः स्त्रीत्वम्;—स्थितिमात्रं नपुंसकत्वम्। अत एव उत्कर्षापकर्षसत्त्वेऽपि स्थितिमात्रमादाय 'सामान्ये नपुंसकम्। इति प्रवादः। उत्कर्षापकर्षसाम्यात्मकावस्थात्रयसाधारणस्थितिमात्रविवक्षायां नपुंसकं भवतीति तदर्थः। ईदृशमवस्थात्रयं केवलान्वयि। अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु, इतिव्यवहारस्य सार्वत्रिकत्वात्। तच्चेदं लिङ्गमर्थनिष्ठमेव तदुक्तं भाष्ये—

"एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च" इति एकस्मिन्नेवार्थे पुष्यः तारका नक्षत्रमिति शब्दनानात्वदर्शनात्। कुटीकुटीरादौ रेफाद्यवयवोपजनने लिङ्गभेददर्शनाच्च स्तनकेशाद्यतिरिक्तमेव लिङ्गमित्यर्थ इति कैयटः। पुलिङ्ग शब्द इत्यादि व्यवहारस्तु वाच्यवाचकयोरभेदोपचाराद् बोध्यः। न च उपचयादिधर्म्माणां विरुद्धत्वादेकत्र समावेशायोगादेकस्य द्वित्रिलिङ्गतानापत्तिरिति वाच्यम्। एकस्मिन् वस्तुनि क्षणभेदेन त्रयाणां धर्माणामपि समावेशोपपत्तेः। उक्तं च भाष्ये—

"कश्चिदपि सत्त्वादिधर्मः क्वचिन्मुहूर्त्तमपि नावतिष्ठते यावदनेन वर्धितव्यमपायेन वा युज्यते' इति। न चैवं सति युगपत् द्वित्रिलिङ्गत्वानापत्तिरिति वाच्यम्। न हि व्यवहारे स्वसमकालिकपदार्थसत्ता प्रयोजिका। तथा सति भूतभविष्यद्व्यवहारोच्छेदापातात्। तत्र कश्चिच्छब्द एकलिङ्गविशिष्ट एवार्थे प्रयोज्यः। कश्चित्तु द्विलिङ्गः। कश्चित्तु त्रिलिङ्गः। इत्येतत्तु लिङ्गानुशासनशास्त्रादवगन्तव्यम्। एषां पुंस्त्रीनपुंसकशब्दानां वृद्ध्यादिशब्दवदस्मिन् शास्त्रे सङ्केतश्च लिङ्गानुशासनत एव ज्ञेयः। उक्तं च भाष्ये—

'अवश्यं तावत् कश्चित् स्वकृतान्त आस्थेयः' वैयाकरणसिद्धान्त इत्यर्थः। 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः। तत्र टद्यादिसंज्ञावल्लघुसंज्ञामकृत्वा महासंज्ञाकरणसामर्थ्यात् सति सम्भवे स्तनकेशवतीत्यादिलौकिकं लिंगमप्यत्राश्रीयते। अन्यथा 'पशुना यजेत' इत्यत्र स्त्रीव्यक्तावपि सत्त्वाद्युपचयात्मकपुंस्त्वाद्यनपायात् 'आङो नाऽस्त्रियाम्' इति नाभावस्याविरोधात् स्त्रीपशुरप्यालभ्येत।

(च) 'यूनस्तिः' युवन्शब्दात् तिप्रत्ययो भवति स्त्रियाम् । ईप्निषेधः ॥ युवन् अग्रे ति-प्रत्ययः । 'नाम्नोनो०' 'स्रोर्वि०' ॥ एवं स्त्रीप्रत्यया ज्ञेयाः ॥ अथैतेषां विभक्तिकार्यमाह-एभ्य इति । एभ्यः पूर्वोक्तस्त्रीप्रत्ययान्तेभ्यः शब्देभ्यो 'अविभक्ति नाम' इति सूत्रोक्तल-क्षणनामत्वात् स्यादयो विभक्तयो दीयन्ते । तत्र आबन्तात् 'आपः' इति सूत्रेण सि-लोपः । ईबन्तात् 'हसेपः०' इति सेर्लोपः । तत्र आबन्ता गङ्गाशब्दवत्साध्याः । ईब-न्ता नदीशब्दवत् । इकारोकारान्ता बुद्धिरज्जुवत् । ऊकारान्ता वधूवत् । इति स्त्रीप्रत्य-यावचूरिः ॥ २२ ॥

( प्र० ) युनस्तिरिति । युवन्शब्दात्तिप्रत्ययो भवति । ईपोऽपवादः । नलोपः । युवतिः ॥ २२ ॥

इति सारस्वतप्रसादे भट्टवासुदेवविरचिते स्त्रीप्रत्ययाः ॥ १६ ॥

## * कारकप्रक्रिया ॥ १७ ॥ *

अथ विभक्त्यर्थो निरूप्यते(क) ॥

**लिङ्गार्थे प्रथमा ॥** धातुप्रत्ययातिरिक्तमर्थवच्छब्दरूपं लिङ्गं तस्यैवार्थे सन्मात्रे प्रथमा विभक्तिर्भवति ॥ १ ॥

( च० ) एवं ये 'लिङ्गादयः स्त्रीप्रत्ययान्ता उक्तास्ते विभक्तिमन्तरा न शब्दतां प्रा-प्नुवन्तीति विभक्तिकार्यसम्बन्धमाह—अथेति । संज्ञासन्धिकार्यस्वरान्तहसान्तलिङ्गत्रयप्र-क्रियायुष्मदस्मत्स्त्रीप्रत्ययकथनानन्तरं विभक्तीनां कर्तृत्वादिसूचकानां प्रथमादीनामर्थोऽभि-धेयो निरूप्यते ॥ तत्र प्रथमाविभक्तेः कार्यमाह—सूत्रम्—'लिङ्गार्थे प्रथमा' ॥ लिङ्गार्थे लिङ्गस्यार्थो लिङ्गार्थस्तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' । प्रथमा इति प्रथमैकव-चनान्तम् । 'आपः' सिद्धं सूत्रम् । लिङ्ग्यन्ते चिह्न्यन्ते ज्ञायन्ते पुंस्त्रीनपुंसकतया शब्दा अनेनेति लिङ्गम् । तत्किं विशिष्टं ? धातुप्रत्यातिरिक्तमिति । धातुर्भ्वादिः, प्रत्ययाः कृदा-दयस्तेभ्योऽतिरिक्तमधिकमन्यत् पृथक् यत् पुंस्त्रीनंपुसकलिङ्गभेदज्ञापकं तल्लिङ्गम् । 'नामैव लिङ्गम्' इति कौमाराः । 'संस्त्यानप्रसवौ लिङ्गम्' इति महाभाष्यकारः । संस्त्यानं स्त्री-त्वम् । प्रसव उपचयः । क्रमादुपचयापचयस्थितिरूपो वस्तुधर्मः । उपचये यथा हरिः रविः । अपचये गङ्गा शाला । क्वचिदुपचयापचयाभावः कुलं ज्ञानम् ॥ तस्य लिङ्गस्य एवार्थे अभिधेये । सन्मात्रे सत्तामात्रे विद्यमानमात्रे । वाच्यमाने प्रथमा सिऔजसरूपा विभक्तिर्भवति ॥ १ ॥

---

( क ) 'तत्र क्रियासिद्ध्युपकारकं कारकम् । तच्च षड्विधम् ॥ कर्ता कर्म च करणं सम्प्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट् ॥ उक्तानुक्ततया द्वेधा कारकाणि भवन्ति षट् । उक्ते तु प्रथमैव स्यादनुक्ते तु यथाक्रमम् ॥' तानि विभक्तिरित्यभिधीयन्ते इत्याधिकपाठो मूलपुस्तके । सम्बन्धार्थकषष्ठीभिन्नविभक्त्यर्थद्वारा क्रियान्वयित्वं कारकत्वमिति कारकसामान्यलक्षणं । मातुः स्मरतीत्यादौ षष्ठ्या कारकत्वसंग्रहाय सम्बन्धार्थकेति ।

(प्र०) लिङ्गविशेषप्रतिपादकप्रत्ययान्निरूप्य पूर्वोक्तस्यादिप्रत्ययनियामकप्रकरणम-वसरसङ्गत्या प्रारिप्सुः प्रतिजानीते। अथेति। विभक्तीनां द्योत्यो वाच्यो वार्थः विभ-क्त्यर्थः। स च प्रातिपदिकार्थपक्षे द्योत्यस्त्विकपक्षे वाच्यः। येषु येष्वर्थेषु या या विभक्तयो भवन्ति ते विभक्त्यर्था उच्यन्ते इति भावः। एकवचनं जात्यभिप्रायेण। तत्र प्रथमो-द्दिष्टप्रथमार्थमाह। लिङ्गार्थे इति। धातुविभक्तिवर्ज्जमर्थवल्लिङ्गमिति कोशादिषु लिङ्गश-ब्देन नामाभिधानान्नामलक्षणेनैव लिङ्गलक्षणमाह। धातुप्रत्ययवर्जमित्यादि। प्रत्ययश-ब्देनात्र प्रत्ययविशेषा विभक्तिरूपो लक्ष्यते। नामलक्षणे लिङ्गलक्षणे च विभक्तिवर्जनस्या-भिधानात्। धातुवर्जमिति तु सम्भवदाभिप्रायं विचारविशेषश्च नामलक्षणोक्तोऽवसेयः। सन्मात्र इति। शब्दप्रवृत्त्युपलक्षणम्। यत्रार्थान्तरानपेक्षया शब्दप्रवृत्तिः स सर्वोऽपि लिङ्ग-इत्यर्थः। पुंस्त्रीनपुंसकलिङ्गादि तु तन्नान्तरीयकत्वाल्लिङ्गार्थ एवाभिहितकारकार्थः प्रातिपदि-कार्थः सम्पद्यत इति। तत्रापि लिङ्गार्थे प्रथमा। लिङ्गार्थस्य सर्वत्रानुस्यूतत्वेऽपि तत्र तत्र कर्माद्यर्थविशेषविवक्षायां द्वितीयादिविशेषविधानात्सामान्यविहितप्रथमाया बाधान्नाति-प्रसङ्गः॥ १॥

(क) लिङ्गादयोऽपि प्रथमार्था इति केचित्॥

(च०) लिङ्गादयोऽपि प्रथमार्थाः इति मतान्तरवाचकं पदम्। लिङ्गं पुंलिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गम्॥ २॥

आदिशब्दाल्लिङ्गवचनपरिमाणमात्रेऽपि प्रथमा(ख)॥

तत्सद्ब्रह्म।

रविरिव राजते राजा रोषात्कुमारी रोरूयते।
बोभुज्यते भुवं भूपालः प्रागास्तां रामलक्ष्मणौ॥ १॥

सन्ति सन्तः कियन्तः(ग)॥

कुमाराः शेरते स्वैरं रोरूयन्ते च नारकाः।
जेगीयन्ते च गीतज्ञा मेम्रीयन्ते रुजार्दिताः॥ २॥

(च०) आदिशब्दात्परिमाणवचनप्रभृतयः। प्रथमैव अर्थो येषां ते प्रथमार्थाः। लि-ङ्गवचनपरिमाणानां त्रयाणामप्यर्थे प्रथमा विभक्तिर्भवतीत्यर्थः॥ यथा देवः श्रीः ज्ञानं खारी द्रोणः आढकम् एकः द्वौ बहवः॥ उदाहरणम्—'तत्सद्ब्रह्म' तदिति ज्ञानदृष्टिगोचरं सदिति

---

(क) 'लिङ्गार्थे प्रथमा। एतस्य सूत्रस्येमान्युदाहरणानि। उच्चैः नीचैरित्यादीनि॥ सकलकारकभेद-शून्यं वस्तु सत्ता' इत्यधिकपाठो मूलपुस्तके।

(ख) कृष्णः श्रीः ज्ञानम्॥ वचने। एकः द्वौ बहवः॥ परिमाणे। खारी द्रोणः आढकम्॥ अष्टमुष्टि-र्भवेत्किञ्चित्किञ्चिदष्टौ च पुष्कलम्॥ पुष्कलानि च चत्वारि आढकं परिकीर्तितम्॥ चतुर्भिराढकैर्द्रोणः खारी षोडशभिश्च तैः॥

(ग) 'मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः। परगुणपरमाणून्पर्व-तीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः। इति सम्पूर्णश्लोकः॥

वर्त्तमानम् अविनाशि प्रधानं वा । एवंविधं ब्रह्म परब्रह्म वर्तते(क) । तत्सद्ब्रह्म इति त्रि॰ ष्वपि स्थानेषु नपुंसकलिङ्गस्य प्रथमाया उदाहरणम् ॥ रविरिव॰ राजा राजते । क इव ? रविरिव सूर्य इव । राजा इत्यत्र पुंलिङ्गे प्रथमैकवचनोदाहरणम् । पुनः कुमारी रोरूयते अ॰ तिशयेन रोदिति । कस्मात् ? रोषात् ॥ कुमारी । अत्र स्त्रीलिङ्गप्रथमैकवचनोदाहरणम् । भूपालो राजा भुवं पृथ्वीं बोभुज्यते अतिशयेन पालयतीत्यर्थः । भूपालः अत्रापि पुंलिङ्गे प्रथमैकवचनोदाहरणम् । रामलक्ष्मणौ प्राक् पूर्वमास्तामभूताम् रामलक्ष्मणाविति पुंलिङ्गे प्रथमाद्विवचनस्योदाहरणम् ॥ सन्तः सज्जनाः कियन्तः सन्ति ॥ कुमाराः बालकाः स्वैरं स्वेच्छया शेरते । तु पुनः नारकाः नरकस्थाः रोरूयन्ते । अतिशयेन फूत्कुर्वन्ति । पाठान्तरे तु रोरूयन्ते कुमारिकाः इति । गीतज्ञा जेगीयन्ते अत्यर्थं गायन्ति । रुजा रोगेण जिता ( अर्दिताः ? ) ग्रस्ताः पुरुषा मेम्रीयन्ते । सन्तः कुमाराः नारकाः गीतज्ञाः । अत्र सर्व॰ त्रापि पुंलिङ्गे प्रथमाबहुवचनस्योदाहरणानि ॥

( प्र॰ ) लिङ्गादयोऽपीति । केचित् पाणिनीयाः । लिङ्गं स्त्रीपुन्नपुंसकशब्दवा॰ च्यम् । क्रमादपचयोपचयसाम्येष्विति रूपो वस्तुधर्मः । "सङ्ख्यानुप्रसरौ लिङ्गम्" इत्या॰ दिना महाभाष्याद्युक्तेः । परिमाणं खारी । द्रोणः । आढकमित्यादि शब्दवाच्यम् । प॰ रितः सर्वतो मानं दारुलोहादिमयं पात्रम् । उन्मानं प्रमाणवचनं एकत्वद्वित्वबहुत्वानि । एते प्रथमाया अर्थाः । एष्वर्थेष्वपि प्रथमा भवतीत्यर्थः । उदाहरति । तदित्यादि । त॰ त्त्वमसीति वाक्ये तदित्यनेककारकविशेषानाकलितवस्तुमात्रमुच्यते । सदित्यनेनापि सद॰ स्मीति वाक्ये तदेवोच्यते । नित्यं विज्ञानमानन्दं ब्रह्मेत्यादौ ब्रह्मपदेनापि निरस्तसमस्त॰ विशेषं सन्मात्रमुच्यते । यद्वा । यत्तदोर्नित्यसम्बन्धो यत् सत् कालत्रयावाध्यत्वेन परमा॰ र्थसत् । तद् ब्रह्मेत्यर्थः । रविरिव राजते राजेत्यादौ कर्त्राद्यर्थस्य तिङाद्युक्तत्वाल्लिङ्गार्थ इत्यनेनैव प्रथमा । तथा चोक्तं महाभाष्ये । "अभिहितो योऽर्थः सम्पन्नः प्रातिपदिका॰ र्थः" इति । न चैवमन्योक्ते प्रथमेत्यस्य वैयर्थ्यापत्तिरिति वाच्यम् । तस्य कर्माद्यर्थस॰ ज्ञावाद्द्वितीयादिप्राप्तावपि नियमार्थत्वात् । ततश्चार्थादनुक्ते कर्माद्यर्थे द्वितीयाद्य इत्यर्थः ॥

**आमन्त्रणे च ॥** आमन्त्रणे अभिमुखीकरणे प्रथमा विभक्तिर्भवति ॥ २ ॥

> मां समुद्धर गोविन्द प्रसीद परमेश्वर ।
> कुमारौ स्वैरमासाथां क्षमध्वं भो तपस्विनः ॥ १ ॥

( च॰ ) सूत्रम्—'आमन्त्रणे च' ॥ आमन्त्र्यते आहूयन्ते पुरुषा अनेनेत्यामन्त्रणं तस्मिन्नामन्त्रणे सप्तम्येकवचनान्तम् । 'अ इ ए' अपि प्रथमैकवचनान्तम् । 'अन्वयार्थ॰' आमन्त्रणमभिमुखीकरणमित्यादि सुगमम् । उदाहरणम्—श्लोकः–मां समुद्धर ॥ व्याख्या– हे गोविन्द, मां समुद्धर भवसमुद्रादिति गम्यम् । हे परमेश्वर, प्रसीद प्रसन्नो भव । हे कुमारौ स्वैरं स्वेच्छया सुखेन आसाथामुपविशतम् । भो तपस्विनः यूयं क्षमध्वं क्षमां कुरुध्वम् । अत्र गोविन्द परमेश्वर प्रथमैकवचनान्तम् । कुमारौ प्रथमाद्विवचनान्तम् ।

( क ) 'एवंविधं ब्रह्मज्ञानस्वरूपं ब्रह्म वर्तते' इति क्वचित् पाठः ।

तपस्विनः प्रथमाबहुवचनान्तम् । अत्र यथाक्रमं प्रथमाया एकद्विबहुवचनानि ॥ २ ॥

(प्र० ) आमन्त्रण इति । आमन्त्रणमभिमुखीकरणम् । तस्य च लिङ्गार्थत्वाभावादारम्भः । हे पचन् । हे पचमानेत्यादौ सम्बोधनस्य शतृशानज्भ्यामुक्तत्वात्पूर्वेणापि ।२।

**भोसः ॥ भोस् भगोस् अघोस् ॥ एते शब्दा निपात्यन्ते धिविषये ॥ ३ ॥**

**क्षमस्व भो दुराराध्य भगोस्तुभ्यं नमोऽस्तु ते ।**
**अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम्(क) ॥ १ ॥**

( च० ) सूत्रम्—'भोसः' ॥ भोसः इति भोस्शब्दस्य प्रथमाबहुवचनान्तम् । 'स्वरही०' 'एकग्रहणे तज्जातीयान्यशब्दस्य ग्रहणम्' इति न्यायात् भोस इत्यनेन भोस् भगोस् अघोस् इति त्रयाणामपि ग्रहणम् । सूत्रपाठे तु 'भोसभगोअघोस्' इत्येव सूत्रं दृश्यते । तेन भवन्नित्यस्य भो इति निपातः । भगवन्नित्यस्य भगो इति निपातः । अघवन्नित्यस्य अघो इति निपातः । यतः 'भवद्भगवदघवतां भो भगो अघोः एते शब्दा वा निपात्यन्ते धौ विषये सम्बोधने इत्यर्थः । भो इत्यामन्त्रणे । भगो इति पूजामन्त्रणे । अघो इति पापजनवाचि सम्बोधनविषये एते शब्दा निपात्यन्ते ॥ उदाहरणम्—क्षमस्व भो० ॥ भो दुराराध्य दुःखेन आराध्यते इति दुराराध्यस्तस्यामन्त्रणं भो दुराराध्य । क्षमस्व क्षमां कुरु । न विद्यते स्तुतिर्वचनगोचरा यस्य सः अस्तुतिस्तस्यामन्त्रणं हे अस्तुते, वचनागोचरस्तवनातीत इति सम्बोधनपदम् । यद्वा न स्तौति अन्यं कञ्चन इति अस्तुतः तस्मै अस्तुते तुभ्यम् इति चतुर्थ्यन्तम् । एवंविध हे भगवन् तुभ्यं नमः । अथवा 'भगोस्तुभ्यं नमोनमः' इति पाठे सुगमम् भो महाप्राज्ञ महांश्चासौ प्राज्ञश्च महाप्राज्ञस्तस्यामन्त्रणं भो महाप्राज्ञ त्वम् आधीष्व पठ । घातया० । हे अघो हे पापिष्ठ स्वघस्मरं स्वभक्षकमर्थात्स्वपापं कालं वा घातय विनाशयेति श्लोकार्थः ॥ ३ ॥

( प्र० ) भगोस्तुभ्यं नमोऽस्तु ते इत्यत्र अस्तु ते इति च्छेदः । न स्तौतीत्यस्तुत तस्मै अस्तुते । परस्य स्तव्यस्याभावादविद्यमानस्तव्यायेत्यर्थः । अथवा । असद्गुणारोपणं गुणवत्तया ज्ञापनं वा स्तुतिः । तत्र भगवद्गुणानामनन्तत्वात्तेषामज्ञानात्तद्विशिष्टवचनासम्भवादविद्यमाना स्तुतिर्यस्य तत्सम्बोधनं स्तुतावसामर्थ्यात्केवलं तुभ्यं नम इत्यर्थः । अत एवोक्तं कालिदासेन "भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ।" इति । यद्वा । "अः केशवे विरिञ्चे च" इत्यभिधानात् । एन ब्रह्मणा स्तुतिर्यस्य स तथा । सर्वसेव्यविरिञ्चिस्तव्य इत्यर्थः । हे अघो अघवन् । स्वस्य घस्मरं नाशकं पापं घातयेत्यर्थः॥३॥

**शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ स-**

---

(क ) जातावेकस्मिन् बहुत्वं वा । गौरयं गाव इमे । सम्पन्नो यवः सम्पन्नाः यवाः । स्वरूपाणां बहुत्वयोश्चैकत्वं । केशा दीर्घाः केशौ दीर्घौ केशो दीर्घः । युष्मदो गौरवे त्वेकत्वे द्वित्वे च बहुवचनम् । त्वं मे गुरुः युवां मे गुरू । यूयं मे गुरवः । द्विवर्जत्यादादिमात्राच्च । द्विवर्जत्यदादिमात्रादेकत्वे द्वित्वे च बहुवचनं वा भवति । स कुतस्तव गुरुः तत्र ते विराजन्ते । पूज्यवाचिभ्यस्त्वादराधिक्ये । गुरवः समादिशन्ति । तत्र भवन्तः कुर्वन्ति । अस्मदोऽविशेषणस्य च ॥ अहं ब्रवीमि आवां ब्रुवः वयं ब्रूमः । इति विशेषः ।

सम्बन्ध आधारभावयोः ॥ शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति ॥ ४ ॥

( च० ) इत्थं प्रथमार्थमुक्त्वा इदानीं द्वितीयादिशेषविभक्तिसूचकं सूत्रमाह—'शेषाः कार्ये' ॥ शेषाः प्रथमाबहुवचनान्तम् 'सवर्णे०' 'स्रोवि०' । कार्यं क्रियते इति कार्यं तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' । कर्तृसाधनयोः । करोतीति । कर्ता साध्यते छिदादिक्रिया अनेनेति साधनम् , कर्ता च साधनं च कर्तृसाधने तयोः सप्तमीद्विवचनान्तम् 'ओसि' 'ए अय्' 'स्वरहीनं' । दानार्थं पात्रं दानपात्रं तस्मिन् सप्तम्येकवचनान्तम् 'अ इ ए' पश्चात् 'नामिनेरः' जश्तु० । अग्रे विश्लेषावधौ विश्लेषे विश्लेषं प्रति वा अवधिः विश्लेषावधिस्तस्मिन् सप्तम्येकवचनान्तम् । 'ङेरौ ङित्' टिलोपः । 'स्वरहीनं' अग्रे सम्बन्धे सम्बध्यते भृत्यस्वाम्यादिरनेनेति सम्बन्धस्तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' । आधारभावयोः आध्रियते स्थाप्यते वस्तु यत्र स आधारः । भूयते क्रियालक्षणतया अनेनेति भावः । ततश्च आधारश्च भावश्च आधारभावौ तयोः । सप्तमीद्विवचनान्तम् । 'ओसि' 'ए अय्' 'स्वरहीनं०' 'स्रोवि०' पश्चात् । 'च्वोर्लो०' सिद्धं सूत्रम् ॥ शेषाः० । प्रथमा उक्ता । अतः शेषाः द्वितीयाद्याः षट् विभक्तय इत्यादिवृत्तिः तत्र कार्ये द्वितीया । कर्तृसाधनयोस्तृतीया । दानपात्रे चतुर्थी । विश्लेषावधौ पञ्चमी । सम्बन्धे षष्ठी । आधारभावयोः सप्तमी । इति संक्षेपार्थः ॥ ४ ॥

( प्र० ) शेषाः कार्ये इत्यादि । भिन्नपदनिर्देशो द्वितीयादिविभक्तीनां षट्पदार्थैर्यथासङ्ख्यत्वार्थः । उक्तादन्याः शेषा इति । प्रथमाया उक्तत्वात् अन्या अवशिष्टा द्वितीयाद्याः षड्विभक्तय इत्यर्थः ॥ ४ ॥

कार्ये कर्मकारके—

उत्पाद्ये आप्ये संस्कार्ये च द्वितीया विभक्तिर्भवति(क) ॥

कटं करोति कारुको रूपं पश्यति चाक्षुषः ।

राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ १ ॥

( च० ) अथ विस्तरार्थः—कार्ये इत्यादि । कार्ये द्वितीया विभक्तिर्भवतीति योगः । कार्ये इति कोऽर्थः ? । कर्मकारके । क्रियते यत्तत्कर्म नाम कारकं तस्मिन् कर्तुः कर्मतापन्ने वस्तुनीत्यर्थः । यद्वा कार्यं कर्म तत्कारकसंज्ञत्वात्कारकम् कर्मकारकं षष्ठीं विना अन्या विभक्तयः कारकसंज्ञाः क्रियाहेतुः कारकम् । षष्ठ्यास्तु क्रियाहेतुत्वाभावेन कारक-

---

( क ) तच्च कर्मकारकं चतुर्विधम् । उत्पाद्यं आप्यं संस्कार्यं विकार्यं च । उत्पत्त्यर्थमुत्पाद्यं वा यदुक्त्वा भावि तदुत्पाद्यम् ॥ यत्सिद्धमेव प्राप्यते तदाप्यम् ॥ संस्कारो नाम प्राक्तनकर्मजो गुणः कश्चिद्गुणातिशयो वा गुणाधानं मलापकर्षो वा इति चतुर्विधः संस्कारः । संस्कारमर्हतीति संस्कार्यम् ॥ विकारो नाम पूर्वावस्थापरित्यागेनावस्थान्तरप्राप्तिः ॥ कटादिकमुत्पाद्यादि चतुर्विधं कर्म ॥ गुणातिशयः संस्कार्यम् व्रीहीन्यवान्वा प्रोक्षति । प्रोक्षणेन व्रीहिषु कश्चिद्गुणातिशयो जन्यते ॥ गुणाधानमलापकर्षयोरुदाहरणम् वस्त्रं रञ्जयति देवदत्तः । रजको वस्त्रं क्षालयति ॥ इति विशेषः क्वचित् पुस्तके,–कर्म कार्यम् ॥ यत्साधनार्थं क्रिया प्रवर्त्तते तत्कार्य्यं कर्म इत्यधिकम् ।

संज्ञा न । यतः—'कर्ता कर्म च करणं सम्प्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कारकाणि षट्' । इति ॥

तस्मिन् कर्मकारके कथम्भूते ? इत्याह—उत्पाद्ये आप्ये संस्कार्ये विकार्ये एवं चतुर्विधे । तत्र उत्पाद्ये यन्नवीनं क्रियते तदुत्पाद्यम् । यदाप्यते सिद्धं प्राप्यते तदाप्यम् । संस्क्रियते इति संस्कार्यम् । संस्कारो नाम कश्चिदतिशयस्तदर्हं संस्कार्यम्' संस्कारो द्विधा—गुणाधानं मलापकर्षो वा । पूर्वजन्मकृतः शुभोऽशुभो वा संस्कारः तस्माद् सर्वं संस्कार्यं सिद्धमेव । रूपं पश्यतीत्यत्र गुणाधानम् । यद्वा रूपमिति चक्षुर्ग्राह्यत्वादाप्यमिति केचित् । राज्यमिति । राज्ञः संस्कारात् संस्कार्यम् । विकार्यं इति विक्रीयते अवस्थान्तरं भजते इति विकार्यं । ततः एवं चतुर्विधे कर्मकारके द्वितीयाविभक्तिर्भवति । उदाहरणं—कटमित्यादिश्लोकः । कारुकः पुमान् कटं करोतीत्यत्र कटस्य उत्पादकार्यत्वात् द्वितीयान्तत्वम् । एवं चाक्षुषो नेत्रवान् जनो रूपं पश्यतीति रूपम् आप्यं कर्म तत्र द्वितीया ॥ केचित्तु रूपस्य नेत्रेन्द्रियेण गुणास्थापने संस्कार्ये द्वितीया । धर्मिष्ठः पुमान् राज्यं प्राप्नोति । अत्र राज्यं संस्कार्यम् । तत्र द्वितीया । केचित्तु राज्यमाप्यं तत्र द्वितीया । सोमममृतवल्लीरसं पिबतीति सोमपाः ब्राह्मणः सोमममृतवल्लीं लुनाति ख(क)ण्डयतीत्यर्थः । अत्र सोमस्यामृतवल्ल्याः ख(क)ण्डनरूपो विकारस्तत्र द्वितीया । अवस्थान्तरापादनं विकार इति ॥

( प्र० ) तत्र तावदीप्सितानीप्सितद्विविधकर्मणोरीप्सितस्य त्रैविध्येऽपि संस्कार्यविकार्ययोरवान्तरभेदमाश्रित्य चातुर्विध्येनाह । उत्पाद्य इत्यादि । तत्र यदसज्जायते तदुत्पाद्यम् । यत्र चोत्पाद्यविकार्य्यसम्बन्धिनो विशेषाः प्रत्यक्षेणानुमानेन वा न प्रतीयन्ते केवलं प्राप्यते तदाप्यम् । गुणान्तराधानेन व्यपदेशान्तरनिमित्तं संस्कार्यम् । प्रकृत्युच्छेदेनावस्थान्तरत्वमापाद्यं विकार्य्यम् । प्रकृत्यनुच्छेदतदुच्छेदाभ्यां संस्कार्यविकार्ययोः भेदो न वास्तवः । अत एव त्रैविध्यमुक्तं भर्तृहरिणा । "निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् । तत्रेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम् ॥ तथा सज्जायते पूर्वजन्मना यत्प्रकाशते । तन्निर्वृत्यं विकार्यं च कर्म्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥" अनीप्सितं च द्विधोक्तम् । "औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥" इति । संज्ञान्तरैरनाख्यातम् । अपादानादिकारकविशेषैरकथितमित्यर्थः । अन्यपूर्वकम् "दिवः कर्म च" इत्यादिलक्षणम् । तदेवं सप्तविधं कर्म्म । उत्पाद्यादिचतुर्विधं कर्म क्रमेणोदाहरति । कटं करोतीत्यादिरूपमिति प्राप्यस्योदाहरणम् । राज्यमिति च संस्कार्यस्य अभिषेकादिसंस्कारस्य राज्यशब्देन विवक्षणात् । अनीप्सितोदाहरणं च अन्नं भक्षयन्विषं भुङ्क्ते । ग्रामं गच्छंस्तृणं स्पृशति । अकथितस्य च । "दुहियाचिरुधिप्रच्छिचिञ्ब्रूशासिजिकर्मयुक् । नीहृकृष्मन्थिवहदण्डिग्रहमुषिपचिकर्म्मभाक् ॥" दुहादीनां धातूनां यत्कर्म्म यद्युक्तमपादानादिभिरकथितं कर्म्म । यथा । "गां दुदोह धरामन्नं ययाचे वसुधां बलिम् । रुरोध दैत्यान्पातालं पप्रच्छेदं च वाञ्छितम् ॥ धर्मान्नवाचिनो द्वैदमब्रवीत्सं

स्वसेविनः । पार्थिवानन्वशाद्भक्तिं त्रिलोकीमजयद्रिपून् ॥ द्वारकामनयद्बन्धून्रुक्मिणीमहा- त्पुरम् । चकर्ष कंसं विपिनं ममन्थ क्षीरधिं सुधाम् ॥ अवहन्मन्दरं सिन्धुमदण्डयदरीन्नृ- रान् । जग्राह द्युतरुं शक्रमसुष्णाद्दितिजान्वधाम् ॥ पचति प्राणिनां कर्म्म यः फलं तं हरिं भजे ।" इत्यादि । हरिः प्राणिनां कर्म्म धर्माधर्मलक्षणं फलं स्वर्गनिरयादिरूपं पच- ति । तत्कर्मणा निमित्तभूतेन फलं निष्पादयतीत्यर्थः । तं हरिं भजे इत्यन्वयः । एवम् अकथितमिति सर्वत्र सम्बध्यते । धरादीनामवक्षरणाद्यपादानादित्वेऽपि तदविवक्षायां नि- मित्तत्वमात्रार्थत्वे षष्ठ्यादिप्राप्तौ सकर्म्मकत्वविधिः । तथा गमनाद्यर्थकधातूनामण्यन्ताव- स्थायां कर्तुर्ण्यन्तावस्थायां कर्मत्वम् । यथा । "शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ॥ आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् । आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥" इत्यादिप्रयोगानुसारेणोह्यम् । अन्यत्पूर्ववत् । अक्षैरक्षान्वा दीव्यतीत्यादि ॥

अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ १ ॥

अभितो ग्रामं सर्वतो ग्रामं नदी वहति धिग्देवदत्तम् ॥ देवदत्तस्य धि- क्(क) ॥ उपर्युपरि पुरोहितं याचकाः पतन्ति ॥ अधोऽधो नगरं निधानानि सन्ति ॥

( च० ) एवं द्वितीयार्थमाख्यायाधुना तदधिकारात् पुनर्वृत्तिकार उपपदद्वितीयार्थ- माह—अभिसर्वतसोः इत्यादि श्लोकः । तस् च तस् च तसौ अभिश्च सर्वश्च अभिसर्वौ ताभ्यां सहितौ तसौ अभिसर्वतसौ । अभितस्सर्वतसावित्यर्थः । अथवा द्वन्द्वान्ते श्रूय- माणः शब्दः प्रत्येकं सम्बध्यते इति तयोरर्थयोगे षष्ठ्यर्थे द्वितीया विभक्तिः कार्येति योगः। पुनर्धिगिति धिगर्थेऽपि धिक्शब्दयोगेऽपि द्वितीया कार्या । 'धिक् निर्भर्त्सननिन्दयोः'। पुन- स्त्रिषूपर्यादिष्विति । उपरि अधः अधि इत्येषु त्रिष्वव्ययेषु प्रयुज्यमानेषु द्वितीया विधेयेति। कथम्भूतेषु ? आम्रेडितान्तेषु आम्रेडितमिति द्विस्त्रिर्भाषणं तदन्तं येषां ते आम्रेडिता- न्ताः द्विर्वारमुच्चरिता इत्यर्थः । यथा उपर्युपरि अधोऽधो अधिअधिरूपास्तेषु । तत इति अभितः सर्वतसादिव्यतिरिक्तेऽन्यत्र अन्यस्मिन्नप्यर्थे षष्ठ्यर्थे द्वितीया दृश्यते रूढिवशा- दिति ॥ तत्रोदाहरम्—अभि०। अभितोग्रामं ग्रामस्याभितः अभितो ग्रामम् अनेन द्विती- या । अभितोग्राममिति ग्रामस्य समीपे चतुर्दिक्षु वेत्यर्थः । तत्र नदी वहति । एवं सर्वतो ग्रामं वनं ग्रामस्य सर्वतः चतुर्दिक्षु वनमित्यर्थः । एवं धिग्देवदत्तमित्यत्र धिगर्थे द्वितीया। उपर्युपरि ग्रामं पक्षिणो गच्छन्ति । ग्रामस्योपरीत्यर्थः । अधोऽधोग्रामं निधानं दृश्यते ग्राम- स्याध इत्यर्थः । अध्यधिग्रामं ग्रामे ग्रामे तापसास्तिष्ठन्ति । एवमत्र त्रिष्वव्याम्रेडितान्तेषु द्वितीया । ततोऽन्यत्रापि दृश्यत इति वचनात् उभयतः, परितः, समया, निकषा, हा, प्रति, अनु, एतेषां योगेऽपि द्वितीया । [ उभयतः कृष्णं गोपाः कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः ।

( क ) उपर्यध्यधसः सामीप्ये ॥ एषां द्वे स्तो देशतः कालतश्च सामीप्ये ॥ तस्य परमाम्रेडितम् ॥ द्विरु- क्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् इत्यधिकम् ॥

परितः कृष्णम् कृष्णस्य सर्वदिक्षु ] समया ग्रामं तीर्थं वर्तते । निकषा ग्रामं हतः ग्राम्यः ग्रामस्य समीप इत्यर्थः । एवं ग्रामं ग्रामं प्रति प्रतिग्रामं हा स्वामिनमित्यादि ॥ अनुग्रामं ग्रामस्यानु पश्चात् सीमा वर्तते ॥

( प्र० ) एवं कारकद्वितीयामुक्त्वोपपदद्वितीयामाह । अभिसर्वतसोरिति । अभिश्च सर्वश्चाभिसर्वौ ताभ्यां तसौ अभिसर्वतसौ द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायात्तसः प्रत्येकं सम्बन्धः । तथा धिग्योगे द्वितीया कार्या । उपर्यादयः उपरि अधि अधः एते त्रयस्तेषु आम्रेडितं द्विस्त्रिरुक्तमिति त्रिकाण्डीस्मरणाद्द्विरुच्चारितमन्ते येषु तेषु योगे द्वितीया कार्येत्यर्थः । ततोऽन्यत्रापि । अभितः परितः समया निकषा हा कृते प्रतीत्यादियोगेष्वपि क्रमेणोदाहरति । अभितो ग्राममित्यादि । धिग्जाल्ममेत्यादौ जाल्मादीनां सम्बोध्यत्वेन विवक्षणात्कुत्साद्यर्थाविवक्षणाद्धिगर्थयोगाभावान्न द्वितीया । उपर्युपरीत्यादौ उपर्यध्यधसः सामीप्य इति द्विर्वचनम् । समयानिकषाशब्दौ सामीप्यलक्षणसम्बन्धद्योतकौ । अत्र यद्यपि सम्बन्धस्योभयनिष्ठत्वादुभयत्रापि योगस्तथाप्येतद्वचनस्य षष्ठ्यपवादत्वादपवादो ह्युत्सर्गनिवर्तक इति न्यायाद्यत्रैव षष्ठी प्राप्ता तत्रैव द्वितीया । सम्बन्धस्य द्विनिष्ठत्वेऽप्यप्रधानादेव षष्ठीति वक्ष्यमाणत्वात् । अपिशब्दस्य विकल्पार्थत्वेन हा राम हा देवर तात मातरित्यादौ न । क्रियाविशेषणानामपि कर्मत्वम् । स्तोकमोदनं पचति । क्रियाविशेषणानामपि कार्त्स्न्यादीनां करणत्वम् । कार्त्स्न्येन करोति । प्रत्यक्षेण पश्यति । सुखादीनां च वा । सुखं सुखेन वा करोतीत्यादिप्रयोगानुसारेणान्यत्रापीत्यतोऽवसेयम् ॥

**कालाध्वनोर्नैरन्तर्ये** ॥ कालाध्ववाचकशब्दानां नैरन्तर्येऽर्थे वाच्ये सति द्वितीया विभक्तिर्भवति(क) ॥ मासमधीते देवदत्तः ॥ क्रोशं पर्वतः॥५॥

( च० ) कालाध्वनोरितीयं फक्किका । अन्तरेण 'रहितं निरन्तरं तस्य भावो नैरन्तर्यं तस्मिन्नैरन्तर्ये वाच्यमाने । तथा कालो दिवसादिः, अध्वा मार्गः, क्रोशयोजनादिस्तत एतयोर्द्वयोर्विषये द्वितीया कार्या । नैरन्तर्ये कालवाचकशब्दात् अध्वशब्दाच्च द्वितीया भवतीत्यर्थः । तत्रोदाहरणम्--काले--मासमधीते मासंयावत् निरन्तरमधीते । पठति । अत्र नैरन्तर्ये द्वितीया । अन्यथा मासस्य द्विरधीते मासे वा दश दिवसानधीते इति भवति । एवं मार्गे क्रोशं पर्वतः क्रोशं यावन्निरन्तरं पर्वत इत्यर्थः । क्रोशप्रमाणलम्ब इत्यर्थः । अन्यथा क्रोशस्यैकभागे पर्वत इत्यर्थः । अन्यत्रापीति ग्रहणात् अन्तर्ग्रामसुपग्राममित्यादयः शब्दा ज्ञेयाः ॥ इति ॥ ९ ॥

( प्र० ) कालाध्वनोरिति । कालाध्वार्थनैरन्तर्ये अत्यन्तसंयोगेऽर्थे द्वितीयेत्यर्थः । नैरन्तर्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ॥ ९ ॥

**कर्तरि प्रधाने क्रियाश्रये साधने च** ॥ प्रधाने कर्तरि, ( क्रि-

---

( क ) अविच्छिन्नसंयोगत्वं नैरन्तर्यम् । नैरन्तर्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः । इति विशेषः ॥

याश्रये ) क्रियासिद्ध्युपकारके करणेऽर्थे च तृतीया विभक्तिर्भवति(क) ॥६॥

भिन्नः शरेण रामेण रावणो लोकरावणः ।
कराग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः(ख) ॥ १ ॥

( च० ) अथ तृतीयार्थसूचकं कर्तृसाधनयोरिति पदं व्याचिख्यासुराह—'कर्तरि०' कर्तरि कर्तृविषये तृतीया विभक्तिर्भवति । कथम्भूते कर्तरि ? प्रधाने मुख्ये क्रियाया आश्रये मुख्यवृत्त्या कार्यस्य कारके उत्पादके ईदृशे कर्तरि तृतीया भवति ॥ च पुनः साधनेऽपि तृतीया भवति कथम्भूते साधने ? क्रियासिद्ध्युपकारके क्रियासिद्धेः उपकारके कार्यस्य साहाय्यकारके ॥ पुनः करणनामकारके साधनेऽपि तृतीया । यः प्रधानभूतः सन् क्रिया या आश्रयभूतः स्वातन्त्र्येण क्रियां कर्तुं प्रवृत्तः स कर्ता तस्यार्थं तृतीया भवति । च पुनः क्रियासिद्धेः उपकारके करणे प्रकृष्टकारणभूते साधनेऽपि तृतीया भवति । करोतीति कर्ता । स क उच्यते ? इत्याह—क्रियाश्रयः क्रियायाः कार्यस्य आश्रयः ॥ क्रियाया आश्रयोऽप्रधनोऽपि भवति । पटोत्पत्तौ तुरीवेमादिवदित्याह—प्रधान इति । सकलकारकप्रयोक्तृत्वे सति इतरकारकाप्रयोज्यत्वमत्र प्रधानत्वम् । तस्मिन् किंविशिष्टे साधने ? क्रियासिद्ध्युपकारके क्रियायाः सिद्धिमुपकरोतीति क्रियासिद्ध्युपकारकं क्रियासिद्धेः साहाय्यदायकं । तस्मिन् । पुनः कीदृशे साधने ? करणे । 'साधकतमं करणं' क्रियासिद्धेः प्रकृष्टं करणं यद्वा करणं करणनाम कारकं तस्मिन् । एवं कर्तृसाधनयोर्द्वयोरर्थे तृतीया भवति ॥ उदाहरणम्—भिन्नः शरेणेत्यादिश्लोकः । रामेण रावणो भिन्नः । केन ? शरेण । रामेण इति कर्तरि तृतीया । शरेणेति साधने तृतीया कथम्भूतो रावणः ? लोकरावणः । लोकान् रावयति क्रन्दयतीति लोकरावणः । उदाहरणान्तरमाह—तथा रावणो वानरैः कराग्रेण नखेन विदीर्णोऽपि विदारितोऽपि पुनः पुनरपि युध्यते । अत्र वानरैरिति कर्तृपदम् । कराग्रेणेति साधनपदम् । उभयत्रापि तृतीया । कराग्रेणेत्यत्र जातावेकवचनम् । पुनस्तृतीयार्थं 'विना सह' इत्यादिना अग्रे वक्ष्यति । इति तृतीयार्थः ॥ ६ ॥

( प्र० ) "कर्तृसाधनयोः" इति पदं व्याचष्टे । कर्तरीत्यादि । तत्र तावत्कर्ता द्विविधः । स्वतन्त्रः प्रयोजकश्च । स्वतन्त्रोऽभिहितानभिहितभेदात् द्विविधः । प्रयोजकोऽपि प्रेषकोऽध्येषकः आनूकूल्यभागी चेति त्रिविधः । तत्र प्रभुत्वेन प्रयोजयन्प्रेषकः । यथा । शिष्येण कारयति । हीनः प्रयोजयन्नध्येषकः । यथा गुरुं भोजयति । यस्तु प्रभुत्वहीनत्वाभावेनानुकूल्यमात्रेण याजयति स आनुकूल्य भागी । यथा । आनन्दयति पितरं सत्पुत्रः । एवं पञ्चविधः कर्ता । तत्राभिहिते प्रथमाऽभिधानादनभिहिते कर्तरि तृतीया । तत्र कर्तृलक्षणमाह । प्रधाने क्रियाश्रये इति क्रियाश्रयः कर्तेत्युक्ते कर्मादीनामपि तथात्वादतिप्रसङ्गः स्यादत उक्तं प्रधाने इति । प्रधानत्वं चेतरकारकाप्रयोज्यत्वे सति सकलका-

---

( क ) क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् (विवक्ष्यते यदा तत्र तदत्र करणं स्मृतं ) इति पाठान्तरम् ॥

( ख ) प्रकृत्यादिभ्यः ॥ प्रकृत्यादिभ्यः शब्देभ्यस्तृतीया स्यात् ॥ प्रकृत्या चारुः । प्रायेण अलक्षः । सुखेन याति गोत्रेण गार्ग्यः । गार्ग्योऽस्य गोत्रमित्यर्थः । इति विशेषो मूलपुस्तके ॥

तकप्रयोक्तृत्वम् । यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचति । एतच्च देवदत्त आस्ते शेते इत्यादौ तत्प्रयोज्यानां कर्म्मादीनामभावादव्यासाविति धातूक्तक्रियात्वं प्रधानत्वमवसेयम् । यदीयो व्यापारो धातुनोच्यते स कर्त्तेत्यर्थः । तथा चोक्तम् । "धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।" इति । करणमपि बाह्याभ्यन्तरभेदात् द्विविधम् । बाह्यं शरीरादि आभ्यन्तरं चित्तादि । तल्लक्षणम् । क्रियासिद्ध्युपकारक इति । क्रियायाः सिद्धिं उत्पत्तिं सन्निहितत्वेन करोतीति तथा यद्व्यापारान्तरमविलम्बेन क्रियोत्पत्तिरित्यर्थः । तथा चोक्तं भर्तृहरिणा । "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥" उदाहरति । भिन्न इति क्तेन कर्मोक्तमिति रावणात्कर्मणः प्रथमा वानरैः कर्तृभिः कराग्रेण नखैः विदीर्णोऽपि तैः रामेण वा सह पुनरपि युध्यते । कराग्रेणेति जातावेकवचनम् ॥ ६ ॥

**दानपात्रे सम्प्रदानकारके चतुर्थी ॥ सम्यक् श्रेयोबुद्ध्या प्रदीयते यस्मै तत्सम्प्रदानकारकम् ॥ वेदविदे गां ददाति ॥ अन्यत्र राज्ञो दण्डं ददाति ॥ रजकस्य वस्त्रं ददाति(क) ॥ ७ ॥**

( च० ) अथ चतुर्थ्यर्थमाह—दानपात्रे सम्प्रदानकारके चतुर्थी । दीयते इति दानं दानाय पात्रं दानपात्रम् । दत्तवस्तुनः स्वामी भवतीति यावत् । तस्मिन् दानपात्रे । कीदृशे दानपात्रे ? सम्प्रदाने नाम कारके । सम्यक् श्रेयोबुद्ध्या यस्मै प्रदीयते तत्सम्प्रदानम् । यस्मै दत्ते आमुष्मिकफलप्राप्तिर्भवति तत्सम्प्रदानमुच्यते । सम्प्रदानं च तत्कारकं च सम्प्रदानकारकं तस्मिन् । यदुक्तम्—

'ददाति दण्डं पुरुषो महीपतेर्न चात्र भक्तिर्न च दानकामना ।
यद्दीयते वासनया सुपात्रे तत्सम्प्रदानं कथितं मुनीन्द्रैः' ॥

तत्रोदाहरणम्—'वेदविदे गां ददाति । वेदं वेत्तीति वेदवित् तस्मै वेदविदे वेदज्ञाय ब्राह्मणाय कश्चित्पुरुषो गां ददाति । इत्यत्र वेदवित्त्वे सति दानपात्रत्वं सङ्गतमेव । एवं साधवे अन्नं प्रतिलाभयति ॥ अन्यथा दानपात्राभावे—राज्ञा दण्डं ददाति । अत्र चतुर्थ्यभावः ॥ ७ ॥

( प्र० ) दानपात्रे । इत्येतद्व्याख्यां कुरुते सम्प्रदानकारके इति । दानं नाम पूजानुग्रहकामनया स्वस्वत्वपरित्यागेन परस्वत्वापादनं तस्य पात्रम् । "न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥" इत्याद्युक्तं त-

(क) ददाति दण्डं पुरुषो महीपतेर्न चातिभक्त्या न च दानकाम्यया । यद्दीयते वासनया सुपात्रे तत्सम्प्रदानं कथितं कवीन्द्रैः ॥ अनभिहिते इत्येव । दानीयो विप्रः ॥ क्वचित्सम्यक्श्रेयोबुद्ध्यभावेऽपि चतुर्थी—'व्याजेन रघवे करमिति महाकविप्रयोगदर्शनात् ॥ तच्च सम्प्रदानं त्रिविधम् । प्रेरकमनिराकर्त्रनुमन्तृ चेति ॥ त्यागेन कर्मणा व्याप्तं प्रेरकं चानुमन्तृ च अनिराकर्तृ चेत्येतत्सम्प्रदानं त्रिधा स्मृतम् ॥ देहीति प्रेरयति तत्प्रेरकम् ॥ यथा । बटवे भिक्षां ददाति ॥ यत्तु इदमहं ददामीत्युक्तेऽनुमन्यते ओमित्याह तदनुमन्तृ ॥ यथा शिष्यो गुरवे गां ददाति ॥ यत्तु नानुमन्यते न निराकरोति तदनिराकर्तृ ॥ यथा । सूर्यायार्घ्यं ददाति ॥ क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् ॥ पत्ये शेते इति विशेषः ।

त्सम्प्रदानकारकमित्यर्थः । तथा चोक्तम् । "सम्प्रदानं तदेव स्यात्पूजानुग्रहकाम्यया । दीयमानेन योगात्स्वामित्वं लभते यदि ॥" इति । तच्च त्रिविधम् । अनिराकर्तृ । प्रेरकम् । अनुमन्तृ चेति । तत्रानिराकर्तृ यथा । आदित्यायार्घं ददाति । प्रेरकम् । विप्राय गां ददाति । मह्यं गां देहीति प्रेरितो ददातीत्यर्थः । अनुमन्तृ । गुरवे गां ददाति । गुरुर्हि न प्रार्थयते दीयमानां च तामङ्गं मन्यते भद्रं कृतमिति । तदुक्तं भर्तृहरिणा । "अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥" इति । अतश्च राज्ञ दण्डं ददाति । रजकस्य वस्त्रं ददातीत्यादौ सम्प्रदानत्वप्रसङ्गः ॥७॥

**विश्लेषावधौ पञ्चमी** ॥ विश्लेषो विभागस्तत्र योऽवधिः स चलतया अचलतया वा विवक्षितस्तत्रापादाने पञ्चमी(क) ॥ धावतोऽश्वादपतत् ॥ भूभृतोऽवतरति गङ्गा ॥ ८ ॥

( च० ) अथ पञ्चम्यर्थमाचिख्यासुर्विश्लेषावधाविति पदं व्याकरोति—विश्लेष इत्यादि । विश्लेष इति कोऽर्थः । विश्लेषो विभागो विरहः पृथग्भावः बुद्ध्या स्वरूपेण वा एकाश्रयात्पृथक् भवनमित्यर्थः । तत्र विश्लेषे योऽवधिराश्रयो यस्माद्विभागो जायते स चलतया अश्वकरभादिभावेन, अचलतया पर्वतशिखरादिभावेन विवक्षितो वक्तुमिष्टः वाञ्छितः । तत्र विश्लेषावधौ अपादाननामकारके अपादीयते पृथक्क्रियते यस्मात्तदपादानम् । अपादानं च तत्कारकं च । तस्मिन् पञ्चमी विभक्तिर्भवति । उदाहरणम्—धावतोऽश्वादपतदित्यत्र अपतदिति विश्लेषः अश्वादि तस्यावधिः आश्रयः । धावत इत्यश्वस्य चलनक्रियाकारित्वाच्चलतया विवक्षितावधित्वम् । एवं भूभृतः पर्वतात् गङ्गा अवतरतीत्यत्र अवतरणात्मको विश्लेषः । भूभृत इति स्थिरावधिः । एवमन्येऽप्यवसेयाः ॥ ८ ॥

( प्र० ) विश्लेषावधावित्येतद्व्याचष्टे । विश्लेषो विभाग इति । अपादानं च द्विविधम् । " अपाये यदुदासीनं चलं वा यदि वाचलम् । ध्रुवमेव यदावेशात्तदपादानमुच्यते ॥" इति । तच्च त्रिविधोक्तम् । "निर्दिष्टविषयं किंचिदुपात्तविषयं तथा । अपेक्षितक्रियाकं च त्रिधाऽपादानमुच्यते ॥" इति । यत्र साक्षादपायभूतक्रिया निर्दिश्यते तदाद्यम् । यथा । ग्रामादायातीत्यादि । यत्र धात्वन्तरार्थाङ्गं स्वार्थमाह तद्द्वितीयम् । यथा । बलाहकात् विद्योतते विद्युत् । बलाहकात् निसृत्य विद्योतत इत्यर्थः । 'प्रमाणान्तरप्रतीतक्रियाकं तृतीयम् । यथा गच्छन्तं पश्यन्नाह कस्मात्त्वमिति परस्परस्मान्मेषावपसरत इत्यत्रान्योऽन्यमवधित्वमुक्तम् । मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथङ् मेषयोः स्वक्रियापेक्षकर्तृत्वं च पृथगिति ॥ ८ ॥

**सम्बन्धे षष्ठी** ॥

राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत्प्रपूजनम् ।

---

(क) विश्लेषो नाम संयोगपूर्वको विभागः ॥ आधाराधेययोर्मध्ये आधारत्वेन यो ज्ञायमानः सोऽवधिः ॥ आधीयतेऽनेनासौ आधारः ॥ आधातुं योग्यः आधेयः ॥

गुरूणां वचनं पथ्यं कवीनां रसवद्वचः(क) ॥ ९ ॥

( च० ) अथ षष्ठ्यर्थमाह—सम्बन्ध इति । सम्बध्यते जनादिरनेनेति सम्बन्धो जन्यजनकादिः स्वस्वामित्वादिः । यथा लिङ्गार्थकारकव्यतिरिक्तः स्वस्वामित्वादिलक्षणः । स चोभयनिष्ठश्च भवति । तस्मिन्नर्थे षष्ठी विभक्तिर्भवतीति । यतः—

'भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्' ॥

उदाहरणं श्लोकेनाह—राज्ञ इति । स पुरुषः पुमान् राज्ञो राजसम्बन्धी ज्ञेयः । इत्येवं स्वामिसेवकसम्बन्धः । एतत्समीपतरवर्ति पूजनं पूजनोपकरणम् । पित्रोरिति माता च पिता च पितरौ तयोः पित्रोः पितृमातृसम्बन्धि, गुरूणां गुरुसम्बन्धि वचनं जाड्यज्वरविमुक्तानां पथ्यवत् पथ्यतुल्यम् । कवीनां वचो वचनं रसवदिति रसयुक्तम् । एवमन्येऽप्यूह्याः ॥ ९ ॥

(प्र०) सम्बन्धे इत्येतत्पदमाह । सम्बन्धे षष्ठीति । सम्बन्धश्च स्वस्वामिभावावयवावयविभावादिभेदादनन्तः । कारकेभ्यश्चान्यः । क्रियासम्बन्धाभावात् । तदुक्तम् । "सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते ॥" इति । तत्र श्रुतायां यथा । न माषाणामश्नीयात् । अश्रुतायां यथा । राज्ञः पुरुष इति । तत्र यद्यपि सम्बन्धस्योभयाश्रितत्वादुभयोरप्यपर्यायेण वा षष्ठी प्राप्ता तथाप्यप्रधानादेव द्विविशेषणादेव । तदुक्तम् । "परार्थे स्वार्थनिःक्षेपादप्रधानं विशेषणम् । विशेष्यं तत्प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात् ॥ भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योन्यमुच्यते । द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥" इति । एकवचनादिक्रमेणोदाहरति । राज्ञः स पुरुषो ज्ञेयः । अत्र क्रियायोगिनः पुरुषादयः प्रधानभूता राजादिभिरप्रधानभूतैर्विशिष्यन्त इति राज्ञ इत्यादौ षष्ठी । पुरुषादौ तु लिङ्गार्थो प्रथमैव । यदा पुनः पुरुषो विशेषणं तदा पुरुषस्य राजेत्येव । यदा चोभावप्यप्रधानत्वेन विवक्ष्येते तदोभाभ्यामपि षष्ठ्येव । यथा राज्ञः पुरुषस्य वस्त्रमित्यादि ॥ ९ ॥

**आधारे सप्तमी** ॥ आधारो नामाधिकरणम् ॥ षड्विधमधिकरणम् । औपश्लेषिकं सामीप्यकमभिव्यापकं वैषयिकं नैमित्तिकमौपचारिकं चेति (ख)॥ १० ॥

( च० ) आधारभावयोरिति पदं व्याचिख्यासुः प्रथममाधारं प्रकटयन्नाह—आधारे सप्तमीति ॥ सुगमार्थः । आध्रियते स्थाप्यते षट्प्रकारा क्रिया अस्मिन्नित्याधारः क्रियाश्रयस्य कर्तुः क्रियाया आश्रयस्तत्र सप्तमी विभक्तिर्भवति । आधाराधिकरणौ एकपर्यायौ ।

---

(क) भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योन्यमुच्यते । द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम् । विशेष्यं तु प्रधानं स्यादप्रधानं विशेषणम् ॥ प्रधानाप्रधानयोर्मध्येऽप्रधाने षष्ठी ॥ क्रियान्वयि प्रधानम् ॥ क्रियानन्वय्यप्रधानम् ॥ सेव्यसेवकभावसम्बन्धः । पूज्यपूजकभावसम्बन्धो बोध्यबोधभावसम्बन्धो वाच्यवाचकभावसम्बन्ध इति सम्बन्धश्चतुर्विधः इति विशेषो मूलपुस्तके ॥ अत्रेदम-

(ख) औपश्लेषिकं त्रिविधम् । एकदेशवृत्त्याभिव्याप्यवृत्ति व्यङ्ग्यवृत्तीति केषांचिन्मतम् ॥ अत्रेदमधिकम् ॥ "कर्तृकर्मव्यवहितां साक्षाद् धारयद् क्रियाम् । उपकुर्वद् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ आधारस्त्रिविधो ज्ञेयः कटाकाशतिलेषु यः । निमित्तादिप्रभेदाच्च षड्विधः कैश्चिदिष्यते' आचां वचनम् ॥

आधारशब्देनाधिकरणमेवोच्यते अतोऽधिकरणस्याधारस्य भेदानाह—षड्विधमिति। अधिक्रियते आधारतया तदधिकरणम्। गुणानां गुणिवत्। तत्षड्विधमिति। षट्संख्याका विधाः प्रकारा यस्य तत्षड्विधम्। षोढेत्यर्थं। तानेव षड्भेदानाह—औपश्लेषिकमित्यादि उप सामीप्येन श्लेषणं संघट्टनमुपश्लेषः एकदेशमात्रसंयोगे वा उपश्लेषः। यथा कटे शेते कटस्यैकदेशे इत्यर्थस्तेन निर्वृत्तमौपश्लेषिकम्। सामीपिकं समीपेन निर्वृत्तं सामीपिकम्। यदाधेयसमीपमात्रेण क्रियाहेतुः। यथा वटे वटसमीपे गावः सुशेरते। गङ्गायां घोषः गङ्गासमीपे इति। अभि समन्ताद्व्याप्नोतीत्यभिव्यापकम् आधेयेन समस्तावयवसंयोगोऽभिव्यापकः। यद्वा अपृथक्भूतयोराधाराधेययोर्यः सकलावयवसम्बन्धः सोऽभिव्यापकः। यथा तिलेषु तैलम्॥ विषये भवं वैषयिकम्। अनन्यत्र भवो विषयिकः। यथा नमसि तारकाः। आकाशे वायुः। हृदि ब्रह्मेत्यादि। हृदि विषये ब्रह्मैवं परं प्रकृष्टममृतमस्ति॥ निमित्तेन भवं नैमित्तिकं यथा युद्धे युद्धनिमित्तमित्यादि॥ अविद्यमानस्यारोपणमुपचारः उपचारेण भवमौपचारिकम्। एवं षड्विधेऽप्यधिकरणे सप्तमी विभक्तिर्भवतीति शेषः॥१०॥

(प्र०) आधारभावयोरित्यस्यैकदेशमाह। आधारे सप्तमीति। अधिक्रियते। यस्मिन्नित्याधारः। स च क्रियाश्रयकर्तृकर्मणोरेव। तथोक्तं भर्तृहरिणा। "कर्तृकर्मव्यवहितामसाक्षाद्धारयन्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥" इति आधारस्यैवाधिकरणसंज्ञात्वमभिप्रेत्याधिकरणभेदानाह। षड्विधमित्यादि। तत्रान्यत्र सिद्धयोराधाराधेययोः प्रादेशिकः सम्बन्धः उपश्लेषः। सामीप्यं सान्निध्यम्। तत्र भवं समीपे भवं सामीपिकमिति वा। अपृथग्देशयोराधाराधेययोः सकलावयवसम्बन्धेन व्यापकमभिव्यापकम्। विषयोऽन्यत्र भावस्तत्र भवं वैषयिकम्। निमित्तं कारणम्। उपचारो लक्षणा तत्र भवम्॥ १०॥

कटे शेते कुमारोऽसौ वटे गावः सुशेरते।
तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम्॥
युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम्।

भावे सप्तमी॥ क्रियालक्षणं भावस्तत्रापि सप्तमी॥ प्रसिद्धक्रियया अप्रसिद्धक्रियाया लक्षणबोधनं भावः॥ देवे वर्षति चौर आयातः॥ पतत्यंशुमालिनि पतितोऽरातिः। काले शरदि पुष्यन्ति सप्तच्छदाः॥११॥

( च० ) अथ सार्धश्लोकेन षड्व्याधारभेदोदाहरणान्याह—कटे शेते इत्यादि। असौ कुमारः कटे कटमुपश्लिष्य शेते। इत्यत्र उपश्लेषिकमधिकरणम् अत्र शयनक्रियाश्रयः कर्ता कुमारस्तदाधारः कटस्तत्रोपश्लेषः॥ १॥ गावो धेनवः वटे इति वटसमीपे शेरते शयनं कुर्वते इति सामीपिकोऽधिकरणम्। नहि वटस्योपरि गावः शेरते किंतु समीपे॥ एवं गङ्गायां घोषः गङ्गासमीपे घोषो गोकुलम्॥ २॥ तिलेषु विद्यते तैलं तिलेषु सर्वत्राभिव्याप्य स्थितमित्यर्थः। इति अभिव्यापकम्॥ ३॥ हृदीति हृदि विषये ब्रह्म परममृतमस्त्येतद्वैषयिकाधिकरणम्॥ ४॥ युद्धेषु युद्धनिमित्तं धीरः संनह्यते संनाहं परिदधाति इति

नैमित्तिकम् ॥ ९ ॥ अङ्गुल्यग्रे अङ्गुल्यग्रेण प्रदृश्यमानमित्यर्थः । करिणां हस्तिनां शतमित्युपचारमात्रत्वादौपचारिकं नतु साक्षाद्वर्तमानमिति ॥ ६ ॥ इत्थमाधारमाख्यायेदानीं भावपदस्यार्थमाह—भावः क्रिया लक्षणमिति । क्रिया गमनस्थानोत्थानादिका तस्या लक्षणं चिन्हं स भाव इति कथ्यते । प्रसिद्धक्रियया कृत्वा अप्रसिद्धक्रियाया लक्षणं बोधनं भाव इति । तत्रापीति तस्मिन्नर्थेऽपि सप्तमीविभक्तिर्भवतीति । उदाहरणम्—देवेति । देवे मेघे वर्षति सति चौरस्तस्करः आयात आगतः । अत्र मेघवर्षणरूपा प्रसिद्धा क्रिया । तया चौरागमनरूपा अप्रसिद्धा क्रिया लक्षिता । देवे मेघे वर्षतीति प्रसिद्धेन वर्षणेनाप्रसिद्धं चौरागमनं लक्ष्यत इति तत्र सप्तमी । एवमंशुमालिनि सूर्ये पतत्यस्तं गच्छति सति अरातिः शत्रुः पतित इति । युद्धार्थमागत्य पतित इत्यर्थः । यद्वा पतितो मृत इत्यर्थः । अत्र प्रसिद्धेन सूर्यस्यास्तमनेन अप्रसिद्धं शत्रोः पतनं लक्ष्यते । एवं गुरौ धर्ममुपदिशति सति शिष्य शृणोतीत्येवमादयोऽवसेयाः । एवं द्वितीयादिविभक्तीनामर्थाः ॥ ११ ॥

(प्र०) क्रमेणोदाहरति । कटे शेते इत्यादि । भावपदस्याविस्पष्टस्तत्स्वरूपमाह । भावः क्रियालक्षणमिति । क्रिया धात्वर्थः । सा च प्रसिद्धा अप्रसिद्धा चेति द्विविधा । तत्राप्रसिद्धायास्तस्या लक्षणत्वासम्भवात्प्रसिद्धया क्रियया अप्रसिद्धायाश्चौरगमनक्रियाया लक्षणं भाव इति भावः । सर्वविदितत्वात्प्रसिद्धया वर्षणक्रियया अप्रसिद्धचौरागमनक्रिया लक्ष्यते अंशुमाली सूर्यस्तत्पतनं प्रसिद्धम् । आरातिः शत्रुस्तत्पतनं चाप्रसिद्धम् ॥११॥

**अथोपपदविभक्त्यर्थौ निपात्यते ॥ विनासहनमक्षते निर्धारणस्वाम्यादिभिश्च ॥ एतैरपि योगे द्वितीयाद्या विभक्तयो भवन्ति ॥ विना पापं सर्वं फलति ॥ अन्तरेणाक्षिणी जीवितेन किम् ॥ अन्तरा त्वां मां मध्वित्यादिपदाद्ग्राह्यम् (क) ॥ १२ ॥**

( च० ) अथ पुनस्तासामुपपदानामर्थान् प्रकारान्तरेणाह—सूत्रम्—विनासहनमक्षते निर्धारण स्वाम्यादिभिश्च ॥ ततो विना च सहचेत्यादिषट्कद्वन्द्वः । ते आदौ येषां तथा तैः तृतीयाबहुवचनान्तम् । 'स्रोर्विं०' । च प्रथमैकवचनम् 'अव्य०' ॥ सिद्धं सूत्रम् ॥ एतैर्विनादिभिरपि योगे द्वितीयाद्याः षट् विभक्तयः षट्स्वप्यर्थेषु यथाक्रमं भवन्ति । 'द्वन्द्वात्परतः श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति । आदिशब्दो विनादिषु प्रत्येकं योज्यः । विनादिवाचके शब्दे प्रयुज्यमाने द्वितीयाविभक्तिर्भवतीति । सहादियोगे तृतीया । नमआदियोगे चतुर्थी । ऋतेआदियोगे पञ्चमी । निर्धारणाद्यर्थे षष्ठी । स्वाम्याद्यर्थे सप्तमी ॥

---

( क ) अधिशीङ्स्थासां कर्म ॥ अधिपूर्वाणामेषामाधारः कर्मसंज्ञः स्यात् ॥ अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥ अभिनिविशश्च ॥ अभिनीत्येतत्सङ्घातपूर्वस्य विशतेर्धातोराधारः कर्मसंज्ञः स्यात् ॥ ग्रामम् अभिनिविशते ॥ उपान्वध्याङ्वसः ॥ उपादिपूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात् ॥ आवसथं आवसति उपवसति अनुवसति अधिवसति ॥ नाभुक्तार्थस्य ॥ वने उपवसति ॥ क्रियाविशेषणं कर्म ॥ क्रिया विशेषणं कर्मसंज्ञकं नपुंसकैकवचनञ्च ॥ स्तोकं पचति ॥ इति विशेषः ॥ क्वचित् पुस्तके च;—दिवः करणं कर्म वा । दिवधातुप्रयोगे करणं कर्मसंज्ञकं वा भवति : अक्षैरक्षान् वा दिव्यति । क्रुधद्रुहोः सोपसर्गयोः सम्प्रदानम् : कंसमभिक्रुध्यति अभिद्रुह्यति वा कृष्णः ॥ इति विशेषः ॥

तत्रोदाहरणेन द्वितीयां व्यञ्जयति—विना पापमिति । पापं विना पापाभावेन सर्वमपि धर्मं कृत्यादि फलति फलमावहति । एवमत्र विनार्थे वाच्यमाने विनाशब्दयोगे द्वितीया । चकारात् पापेन विना पापाद्विनेति तृतीयापञ्चम्यावपि । 'वृद्धत्वं जरसा विना' ॥ अक्षिणी इति । नेत्रे अन्तरेण विना जीवितेन किं । जीवनेन न किमपीति भावः । अक्षिणी इत्यत्र द्वितीयाद्विवचनं नपुंसकान्तम् ॥ अन्तरेत्यादि । त्वां मामन्तरा मध्ये विचाले मधु क्षौद्रं मद्यं वा वर्तते । त्वां मामिति युष्मदस्मदोर्द्वितीयैकवचनान्तत्वम् । आदिशब्दादन्तरेण अन्तरा इत्यर्थद्वयेऽपि द्वितीयाविभक्तिर्भवति । एतदेवाह—इत्यादिपदाद्ग्राह्यमिति । इत्युदाहरणद्वयम् आदिपदाद् विनादियोगे द्वितीया इत्यादिशब्दाद्ग्राह्यम् अवसेयमिति भावः । इति द्वितीयार्थाः ॥ १२ ॥

(प्र०) एवं कारकविभक्तीः प्रदर्श्योपपदविभक्तीर्दर्शयितुमाह । विना सहेति । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायादादिशब्दस्य प्रत्येकं सम्बन्धः । तथा च विनादिभिर्योगे द्वितीया । सहादियोगे तृतीया । नमआदिभिर्योगे चतुर्थी । ऋतेआदिभिर्योगे पञ्चमी । निर्द्धारणादेरर्थत्वान्निर्द्धारणार्थादौ षष्ठी । स्वाम्यादिभिः सप्तमीति । चकारात्पापेन विना पापाद्विनेत्याद्यपि । अन्तरेणेत्येनन्तयोगे अक्षिणी इति द्वितीयाद्विवचनान्तम् अन्तरा मध्ये इत्यर्थः । इत्याद्यपदाद् ग्राह्यमिति । द्वन्द्वान्ते श्रूयमाणस्यादिशब्दस्य प्रत्येकं सम्बन्धात्प्रयोगानुसारेण तृतीयार्थहीनार्थानुयोगे नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । अनुहरिं सुराः हरेर्हीना इत्यर्थः । तथा हीनार्थोपयोगेऽपि उपहरिं सुराः । हरेर्हीना इत्यर्थः । तथा लक्षणेत्थम्भूताख्यानभागवीप्सार्थकैः प्रतिपर्यनुभिर्योगेऽपि । तत्र लक्षणे हरिं प्रति–परि–अनु वा प्रकाशते भक्तिः । इत्थम्भूताख्याने भक्तो विष्णुं प्रति–परि–अनु वा । विष्णोर्भक्त इति तात्पर्यार्थः । भागे लक्ष्मीर्हरिं प्रति–परि–अनु वा । हरेर्भागो लक्ष्मीरित्यर्थः । वीप्सायां भूतं भूतं प्रति–परि–अनु वा प्रभुः । एकैकस्मिन्भूते प्रभुरस्तीत्यर्थः । तथा भागवर्जितलक्षणाद्यर्थकाभियोगेऽपि । हरिमभिवर्तते भक्तो हरिमभि । देवं देवमभिसिञ्चति । तथातिक्रमपूजार्थातियोगेऽपि । अतिदेवान्कृष्णः । इत्यादयो यथायथमूह्याः ॥ १२ ॥

**सहादियोगे तृतीयाऽप्रधाने (क) ॥ सह शिष्येणागतो गुरुः ॥ सदृशश्चैत्रो मैत्रेण ॥ साकं नयनाभ्यां श्लक्ष्णा दन्ताः ॥ सार्धं धनिना घृतः साधुः (ख) ॥ १३ ॥**

(च०) अथ तृतीया । सहादियोगे तृतीया । तत्र द्रव्यगुणक्रियाभिस्तुल्ययोग्यतायां

---

( क ) सह सदृशं साकं सार्धं सममिति सहादयः ॥

( ख ) समं शिष्याभ्यामधीते ॥ समं शिष्येण गुरुणा भुज्यते ॥ अशिष्टव्यवहारे दानस्य प्रयोगे चतुर्थ्यर्थे तृतीया ॥ दास्याः संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ॥ वारणार्थयोगे तृतीया ॥ अलं विवादेन वा संपूर्वजानातेकर्म । सम्पूर्वस्य जानाते कर्म करणं वा स्यादात्मने पदं च । पितरं पित्रा वा संजानीते ॥ यजेतः कर्मसम्प्रदाने । यजधातुप्रयोगे कर्मसम्प्रदाने करणकर्मणी भवतः । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । इति विशेषः ॥

विद्यमानायां सहार्थे तृतीयाविभक्तिर्भवतीति वृद्धाम्नायः । सह शिष्येणेति । गुरुः शिष्येण सह आगतः । अत्रागमनक्रियया शिष्यशब्दस्य गुरुणा तुल्ययोग्यतायां सत्यां तृतीयान्तत्वम् । सह पुत्रेण पिता धनी इत्यत्र धनद्रव्येण तुल्ययोग्यत्वे पुत्रस्य तृतीयान्तत्वम् ॥ सदृशश्चैत्रो मैत्रेण । चैत्रनामा कश्चित्पुरुषः मैत्रेण मैत्रनाम्ना पुरुषेण सदृशस्तुल्यः । साकं नयनाभ्यामिति । नयनाभ्यां साकं सहिताः श्लक्ष्णा मनोहराः । अत्र गुणेन तुल्यत्वे तृतीया ॥ एवमादिशब्दात्साधुः पुरुषः धनिभिर्धनवद्भिः पुरुषैः सार्धं धृतो गृहीतः बद्ध इत्यर्थः । वारणार्थालंयोगे तृतीया समर्थार्थालंयोगे चतुर्थीत्यर्थः । एतावता अलं विवादेन । धर्मेण अर्थः । गुडेन मिश्रः । शस्त्रेण कलहः । कर्मणा विना । पुण्येन हीन इत्यादयोऽपि शब्दात् अवसेयाः ॥ प्रक्रियामते तु तुल्यार्थे तृतीयाषष्ठ्यौ स्तः । कृष्णेन कृष्णस्य वा पुत्रः । यदुक्तं रघुकाव्ये—'धृतेश्च धीरः सदृशीर्व्यधत्त सः' ॥ इति तृतीया ॥१३॥

( प्र० ) सहादियोगे तृतीयां दर्शयन्नाह । सहसदृशेत्यादि । त्वमहं सिनेत्यादिनिर्देशाज्ज्ञापकात्तद्योगं विनापि तदर्थविवक्षायां तृतीया । यद्यपि योगस्य सम्बन्धत्वादुभयसम्बध्याश्रितत्वादुभयत्र प्राप्तिस्तथापि षष्ठ्यपवादत्वादप्रधानादेव आदिशब्दात्प्रकृत्यादिभ्योऽपि । प्रकृत्या चारुः । प्रायेणालसः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन वा यातीत्यादि । तथा फलप्राप्तौ गम्यमानायां कालाध्वनोरत्यन्तयोगेऽपि । अह्ना क्रोशेन वाऽनुवाकोऽधीतः । अन्यत्र तु मासमधीतो नायातः । तथा संपूर्वस्य जानातेः कर्मणि चकाराद्वा । पित्रा पितरं वा संजानीते । तथा गम्यमानाद्वीप्सायां कर्मणि वा । शतं शतं वत्सान्पाययति पयः । शतेन शतेन वा । तथा वारणार्थार्थकलहहीनार्थपूर्वयोगेऽपि । कृतमेतावता । धर्मेणार्थो विपश्चिताम् । गुडेन मिश्रः । शस्त्रेण कलहः । पुण्येन हीनः । मासेनावरः । मासेन पूर्वः । तथा अशिष्टव्यवहारे चतुर्थ्यर्थेऽपि । दास्या संयच्छते कामुकः इत्यादि प्रयोगतो ज्ञेयम्॥१३॥

**नमआदियोगे चतुर्थी** ॥ नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषट् इन्द्राय (क) ॥ १४ ॥

(च०) अथ चतुर्थीं व्याचष्टे—नमआदियोगे चतुर्थी० ॥ नमः स्वस्तिस्वाहास्वधालंवषट् एतेषामव्ययानां योगे चतुर्थी वक्तव्या । सुगमम् । तत्र नम इति नमस्कारार्थः । स्वस्ति इति कल्याणवाचकमव्ययम् । स्वाहा इति होमावसरे मन्त्रावसानेऽक्षरद्वयोच्चारणम् ; हव्यवस्तुवाचकम् ॥ स्वधेति पितृकल्प्यं वस्तु । अलमिति सामर्थ्यार्थः । वषट् होतव्यं वस्तु ॥ नमो नारायणायेति । नमो नमस्कारार्थः । स्वस्ति राज्ञे । राज्ञे नृपाय कल्याणं भवतु । अत्र स्वस्ति कल्याणार्थे । सोमाय स्वाहा । सोमाय चन्द्राय स्वाहा हव्यवस्तु ॥ पितृभ्यः स्वधा संतानकल्पितं वस्तु ॥ अलमिति । मल्लो मल्लाय अलं सम-

---

( क ) रुच्यर्थानां प्रीयमाणः ॥ रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानसंज्ञः स्यात् ॥ हरये रोचते भक्तिः ॥

र्थः । इन्द्राय वषट् । होतव्यं वस्तु । इत्यादिष्वर्थेषु चतुर्थी ॥ १४ ॥

( प्र० ) नमआदियोगे चतुर्थीं दर्शयन्नाह । नमः स्वस्तीत्यादिः । अलं मल्लो मल्लायेत्यत्रालंशब्दः पर्याप्त्यर्थः शक्त इत्यर्थः । वारणार्थस्य तु योगे तृतीयैव । आदिनो क्रियया यमभिप्रैति ततोऽपि । पत्ये शेते । एवं रुच्यर्थधातुप्रयोगे प्रीयमाणादपि । हरये रोचते भक्तिः । तथा श्लाघह्नुङ्स्थाशपां ज्ञापयितुमिष्टादपि । कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा गोपी स्मरात् । तथा धारेरुत्तमर्णादपि । भक्ताय धारयति मोक्षं हरिः । तथा स्पृहेरिष्टादपि । हरये स्पृहयति । तथा राधीक्ष्योर्विविधप्रश्नविषये कर्मणि चतुर्थी । कृष्णाय राध्यति ईक्षते च । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । तथा प्रत्याङ्भ्यां परस्य श्रृणोतेर्योगे पूर्वस्याः प्रवर्तनक्रियायाः कर्तुरपि । विप्राय गां प्रतिश्रृणोति आश्रृणोति प्रतिजानीते । तथा अनुप्रतिपरस्य गृणातेः पूर्वप्रवर्तनक्रियाकर्तुः । होत्रे अनुगृणाति प्रतिगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः । तथा नियतकालं वेतनेन स्वीकरणं तत्करणाद्वा । शताय शतेन वा परिक्रीतः । तथा क्लृप्त्यर्थयोगे सम्पद्यमानात् । भक्तिः ज्ञानाय कल्पते सम्पद्यते जायते इत्यादि । तथोत्पातज्ञापितादपि । वाताय कपिला विद्युत् । हितयोगे च । ब्राह्मणाय हितम् । तथा तुमर्थक्रियायोगे तुमुनोऽप्रयोगे कर्मणि । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । तथा तुमर्थभावप्रत्ययान्ताच्च । यागाय याति । यष्टुं यातीत्यर्थः । नौकाकान्न श्रृगालशुकवर्जमन्यते । कर्मणि वाऽनादरे । न त्वा तृणं तृणाय वा मन्ये । नावादौ तु न । त्वां नावं मन्य इत्यादि । अध्ववर्जिते गत्यर्थानां कर्मणि चेष्टायां वा । ग्रामाय ग्रामं वा गतः । अध्वनि तु मार्गं याति । उत्पथ गतौ तु भवत्येव । उत्पथेन पथे गच्छति । अचेष्टायां तु मनसा वनं याति इत्यादयः प्रयोगतो ज्ञेयाः । अत्र चार्थविशेषविधिविकल्पादिकं लोकात् शब्दसूचनाद्वाऽवसेयम् ॥ १४ ॥

## ऋतेआदियोगे पञ्चमी ॥ (क) ऋते ज्ञानान्न मुक्तिः ॥ अन्यो गृहाद्विहारः ॥ आराद्वनात् ॥ इतरो ग्रामात् (ख) ॥ १५ ॥

(च०) अथ पञ्चमी—ऋते इति । ज्ञानादृते मुक्तिर्न भवतीति शेषः । अत्र ऋतेशब्दयोगे ज्ञानादिति पञ्चमी । आदिशब्दात् गृहादन्यो विहारः विहरणं । विनापृथक्योगेऽपि । विनाकामात् । पृथक्ग्रामात् । एवं भिन्नो ग्रामादिति । इतरो ग्रामात् । प्राक्ग्रामात् । दक्षिणाहि ग्रामात् । गृहाद्बहिः । आरात् द्रुमादित्यादि ॥ १५ ॥

( प्र० ) ऋते आदियोग पञ्चमीमुदाहरन्नाह । ऋते ज्ञानादित्यादि । अन्य इति अन्यार्थग्रहणात्तत्पर्याययोगेऽपि । इतरो भिन्नो वा ग्रामात् । अन्यो देवदत्ताद्यज्ञदत्त इत्यादावन्यादियोगस्य यज्ञदत्तादिनिष्ठत्वेऽपि एकत्व एवोपपन्नया पञ्चम्या तद्विशिष्टमन्यत्वं प्रतिपादयितुं शक्यमिति द्वितीयासम्बन्धिनः पञ्चमी न । आदिशब्दाद्दिक्शब्दयोगेऽपि ।

---

( क ) ऋते अन्यः आरात् इतरः अञ्चूत्तरपदं दिग्वाचकः शब्दः आहि आच् एते ऋत आदयः ॥ अन्यशब्देनान्यार्थो गृह्यते ॥

( ख ) ऋतेयोगे च द्वितीयापि ॥ ज्ञानं ऋते ॥ चकाराद्विनादियोगे तृतीयापञ्चम्यौ स्तः ॥ विना ज्ञानात् ज्ञानं विना इति मू० पु० विशेषः ।

पूर्वो ग्रामात् । अयमस्मात्पूर्वः । दक्षिणेत्याजन्तनिपातः । दक्षिणाहीत्याह्यन्तनिपातः । नियोगेऽपि । दक्षिणा ग्रामात् । दक्षिणाहि ग्रामात् । आरम्भार्थयोगे बहिर्योगे च । भवादारभ्य भवात्प्रभृति वा सेव्यो हरिः ग्रामाद्बहिः । प्रश्नाख्यानयोश्च । कस्मात्त्वं नद्या आगतः । तथा प्रतियोगे उपमानात्पञ्चमी । प्रद्युम्नः कृष्णात्प्रति । कृष्णसदृश इत्यर्थः । प्रतिदाने च । तिलेभ्यः प्रतियच्छति माषान् । तिलान् गृहीत्वा माषान् ददातीत्यर्थः । पृथग्विनानानायोगे पञ्चमी तृतीया द्वितीया च । पृथग्विना नाना ग्रामात् ग्रामेण ग्रामं वा । तथा अद्रव्यवचनानां स्तोकाल्पकृच्छ्रकतिपयानां करणे वा । स्तोकात् स्तोकेन अल्पादल्पेन कृच्छ्रात्कृच्छ्रेण कतिपयात्कतिपयेन वा मुक्तः । द्रव्यवाचित्वे तु स्तोकेन विषेण हत इत्यादि । दूरान्तिकार्थेभ्यः प्रातिपदिकार्थे द्वितीयापञ्चमीतृतीयाः स्युः । ग्रामस्य दूरं ग्रामस्यान्तिकं दूरात् दूरेण वा । अन्तिकादन्तिकेन वा तथा वारणार्थानां धातूनां प्रयोगे वारयितुमिष्टात् । यवेभ्यो गां वारयति । यन्निमित्तमात्मनोऽदर्शनमिच्छति ततोऽपि । मातुर्निलीयते कृष्णः । तथा विद्यास्वीकारेऽध्यापकात् । उपाध्यायादधीते । यतश्चाध्वकालनिर्माणं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ स्तः कालात्सप्तमी । वनाद्ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे इत्यादि प्रयोगादवसेयम् । विकल्पादिकं च पूर्ववच्चकारादेव ॥ १९ ॥

**निर्धारणम्** ॥ क्रियागुणजातिभिः समुदायात्पृथक्करणं यतस्तत्र षष्ठी । क्रियापराणां भगवदाराधकः श्रेष्ठः । गवां कृष्णा गौः संपन्नक्षीरा ॥ एतेषां क्षत्रियः शूरतमः ॥ १६ ॥

(च०) अथ षष्ठ्यर्थसूचकं निर्धारणं व्याचष्टे निर्धारणमिति । निर्धार्यते पृथक्क्रियतेऽनेनेति निर्धारणं । काभिः ? क्रियागुणजातिभिः । क्रिया करणात्मिका गमनस्थानादिका । गुणो रूपादिः । जातिर्ब्राह्मणादिः । ततः क्रिया च गुणश्च जातिश्चेत्यादिना द्वन्द्वः । ततस्ताभिः कृत्वा यत्समुदायात् बहूनां समुहात् पृथक्करणमेकस्य तन्निर्धारणमुच्यते । तत्रार्थे षष्ठीविभक्तिर्भवतीति । तत्रोदाहरणम्—क्रियासु पराः क्रियासु निष्ठास्तत्परा इत्यर्थः । तेषां मध्ये यो भगवतश्चिदानन्दस्य आराधकः स एव श्रेष्ठः प्रशस्यः । अत्र सामान्यक्रियापरेषु भगवदाराधकत्वरूपक्रियया पृथक्करणे क्रियापरशब्दस्य षष्ठी ॥ गवां धेनूनां मध्ये या कृष्णा गौः सा संपन्नक्षीरा बहुदुग्धा । अत्र गोशब्दस्य कृष्णगुणेन निर्धारणे षष्ठी । एतेषां क्षत्रियः शूरतम इति ॥ एतेषां सर्वजातीयानां पुरुषाणां मध्ये क्षत्रियोऽतिशयेन शूरः इति शूरतमः । अत्र जात्या निर्धारणे षष्ठी ॥ व्याकरणान्तरमते तु निर्धारणे षष्ठीसप्तम्यौ द्वे अपि भवतः ॥ १६ ॥

( प्र० ) निर्द्धारणादौ षष्ठीं दर्शयितुं निर्द्धारणं तावद्व्याचष्टे । निर्द्धारणमित्यादि । क्रियया गुणेन जात्या वा धर्मविशेषेण निर्द्धार्यमाणस्य समुदायान्निर्कोकरणं निर्द्धारणमित्यर्थः । तत्र षष्ठी चकारात्सप्तम्यपि । सा चाप्रधानात्समुदायादेव न निर्द्धार्यात् । ननु निर्द्धार्यमाणोऽवयवः समुदायाद्भिन्न इति यदा आधारत्वेन विवक्ष्यते तदा आधार-

स्वादेव वृक्षे शाखेतिवत्सप्तमी स्यात् । यदा त्ववयवसम्बन्धमात्रं विवक्ष्यते तदा वृक्षस्य शाखेतिवत्सम्बन्ध इत्येव षष्ठी स्यादिति चेत्सत्यम् । तस्यच प्रपञ्चार्थत्वात् निर्द्धारणार्थकषष्ठ्या समासनिषेधार्थत्वाच्च । क्रियागुणजातिभिरित्यस्य सम्भवदुक्तिकत्वात् अमीषां छात्राणां देवदत्तः पटुरित्यादौ संज्ञादिभिरपि व्यवच्छेदे भवत्येव । क्रमेणोदाहरति क्रियापराणामित्यादि । आराधनक्रियया कृष्णगुणेन क्षत्रियत्वजात्या च भगवदाराधका- द्यो विशेष्यन्ते आदिशब्दात्क्वचित्कर्मण्यपि । भजे शम्भोश्चरणयोः । तथा भावकर्तृकाणां ज्वरिवर्जानां रुजार्थानां कर्मणि । चौरस्य रुजति रोगः । भावकर्तृकादन्यत्र नदीकूले रुजति कर्मविवक्षायां तु चौरं रुजतीत्येव । तथा नाथतेः कर्मण्याशिषि । सर्पिषो नाथते । सर्पिर्मे भूयादिति प्रार्थयते इत्यर्थः । अन्यत्र बटुं नाथयति । याचत इत्यर्थः । तथो- ज्जासतेः संहतव्यस्तविपर्यस्तनिप्रपूर्वाद्धन्तेः नाटयतेः क्राथयतेः पिनष्टेश्च कर्मणि हिंसा- याम् । चौरस्योज्जासयति । निप्रहन्ति । निहन्ति । प्रहन्ति । प्रणिहन्ति । नाटयति । क्राथयते । पिनष्टि वा । हिंसायां किम् । धानाः पिनष्टि । अवहन्तीत्यर्थः । तथा द्यूत- व्यवहारार्थयोर्व्यवहरतिपणत्योर्द्यूतार्थदिवेश्च कर्मणि । शतस्य व्यवहरते पणते वा अन्यत्र शलाकां व्यवहरति । क्षिपतीत्यर्थः । ब्राह्मणं पणायति स्तौतीत्यर्थः । शतस्य दीव्यति । सोपसर्गस्य चास्य वा । शतं शतस्य वा प्रतिदीव्यति । तथा कृत्वोऽर्थप्रयोगे कालवा- चिन्यधिकरणे । पंचकृत्वोऽह्नोऽन्नं भुङ्क्ते । अधिकरणविवक्षायां तु द्विरह्न्यधीते इत्यादि प्रयोगवशाज्ज्ञेयम् ॥ १६ ॥

**स्वामित्वे षष्ठीसप्तम्यौ** ॥ गोषु स्वामी गवां स्वामी ॥ गवाम- धिपतिः गोष्वधिपतिः ॥ १७ ॥

(च०) स्वामित्वे षष्ठीसप्तम्यौ ॥ स्वामिनो भावः स्वामित्वं तस्मिन् स्वामित्वे सप्तमी । चकारात् षष्ठ्यपि भवति । गोषु स्वामी गवां स्वामी । एवं गोष्वधिपतिः गवा- मधिपतिः इत्येतदपि ज्ञेयम् । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतशब्दयोगे षष्ठीस- प्तम्यौ भवतः ॥ १७ ॥

( प्र० ) स्वाम्यादियोगे सप्तमीं चकारात्षष्ठीं च दर्शयन्नाह । स्वाम्यादीति ॥ आदिशब्दादीश्वरदायादसाक्षिप्रतिभूप्रसूतयोगे षष्ठीसप्तम्यौ । गवामीश्वरः । गोष्वीश्वर इत्यादि । तथा आयुक्तकुशलाभ्यां योगे तात्पर्येऽर्थे षष्ठीसप्तम्यौ । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । अन्यत्रायुक्तः शकटे गौः । तथा साधुनिपुणयोर्योगेऽर्चायां सप्तमी । मातरि साधुर्निपुणो वा । अर्चायां किम् । साधुर्भृत्यो राज्ञस्तत्त्वकथने । तथा प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ । प्रसित उत्सुको वा हरिणा हरौ वा । नक्षत्रे च लुपि । नक्षत्रे प्रकृत्यर्थे सति यो लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । "मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ।" मूले श्रवणे वा इत्यादि यथा- प्रयोगमूह्यम् । अत्राप्यर्थविशेषविकल्पादिश्चार्थः ॥ १७ ॥

**कर्तृकार्ययोरक्तादौ कृति षष्ठी** ॥ कर्तरि कार्ये च षष्ठीविभक्ति-

र्भवति क्तादिवर्जितकृदन्ते शब्दे प्रयुज्यमाने ॥ व्यासस्य कृतिः । भारतस्य श्रवणम् (क) ॥ १८ ॥

(च०) पुनः षष्ठ्या अर्थान्तरमाह—सूत्रम्—'कर्तृकार्ययो०' ॥ कर्ता च कार्यं च कर्तृकार्ये तयोः । सप्तमीद्विवचनान्तम् । 'आखि' 'ए अय्' 'स्वरहीनं०' 'स्रोवि०' । अग्रे अक्तादि क्तप्रत्यय आदिर्यस्य सः क्तादिः न क्तादिरक्तादिस्तस्मिन् सप्तम्येकवचनान्तम् । 'ङेरौ डित्' टिलोपः । 'स्वरहीनं' पश्चात् 'नामिनोरः' 'स्वरहीनं०' ॥ कृति सप्तम्येकवचनान्तम् । 'स्वरहीनं०' ॥ अग्रे षष्ठी । षण्णां संख्यापूरणी षष्ठी । प्रथमैकवचनान्तम् । 'हसेपः०' सिद्धम् ॥ कर्तरीति । प्रागुक्तलक्षणे प्रधाने क्रियाश्रये अर्थे तथा कार्ये कर्मणि षष्ठीविभक्तिर्भवति । क्व सति ? कृदन्ते सति । कृत् तृतीयावृत्तिप्रोक्तः प्रत्ययसमूहः सोऽन्ते यस्य स कृदन्तस्तस्मिन् कृदन्ते शब्दे प्रयुज्यमाने वाच्यमाने सतीति भावः ॥ कथंभूते कृदन्ते शब्दे ? क्तादिवर्जिते क्तप्रत्ययादिरहिते । क्तादीत्यादिशब्दात् क्तक्तवतु ईषद्दुःसु खल् शतृशानौ क्वसुकानौ पूर्वकाले क्त्वा समासे क्यप् तुम् इष्णु स्नु क्नु इत्यादि कृत्प्रत्ययान् विहाय अन्येषु कृत्प्रत्ययान्तेषु परेषु सत्सु इत्यर्थः ॥ तत्रोदाहरणम्—व्यासस्य कृतिः, व्यासेन क्रियते स्म इति । अत्र व्यासः कृतेः कर्ता । ततः कृतिरिति कृत्प्रत्ययान्ते शब्दे प्रयुज्यमाने व्यासस्येति कर्तरि षष्ठी । एवं भारतस्य श्रवणं, भारतं श्रृणोतीति । श्रवणमिति युडन्ते कृदन्ते प्रयुक्ते भारतस्येति कर्मणि षष्ठी । अत्रोभयत्रापि कृद्योगलक्षणा षष्ठी ॥ अक्तादाविति किम् । त्वया कृतम् । ग्रामं प्राप्तः । अत्र यथाक्रमं कर्तरि कर्मणि च तृतीयाद्वितीये क्तप्रत्ययान्तत्वात् । आदिशब्दात् शतृशान्च्क्वसुकानइष्णुस्नुक्नुक्त्वातुम्क्यप्आद्यन्तेष्वपि शब्देषु परेषु षष्ठी न भवति किंतु द्वितीयैव । ग्रामं गच्छन् । अन्नं पचमानः । अन्नं पेचिवान् । शुभं चक्राणः । देवं दिदृक्षुः । आत्मानमलंकरिष्णुः । दैत्यान् घातुकः । दानवान् जिष्णुः । देवं नत्वा । गुरुं प्रणम्य । ग्रामं गन्तुमुत्कण्ठित इत्यादीन्युदाहरणान्यवगेयानि ॥ 'द्विषेः शतुर्वा षष्ठी' मुरस्य मुरं वा द्विषन् ॥१८॥

( प्र० ) कर्तृकार्ययोरिति । अक्तादाविति आदिशब्दात क्त क्तवतु कि उः इष्णु उकः क्त्वाद्यंताव्ययं शतृ शान क्वसु कान खलर्थशीलार्थतृच् भविष्यदर्थक। कभविष्यदाधमर्ण्येन इत्यादयो गृह्यन्ते । क्रमेण प्रत्युदाहरणम् । त्वया कृतम् । ग्रामं प्राप्ताः सर्वे । कृतवान् विश्वं चक्री । हरिं दिदृक्षुः । अलंकरिष्णुर्हरिम् । दैत्यान् घातुकः । जगत्सृष्ट्वा सुखं कर्तुम् । हरिं प्रणम्य । लक्ष्मीमिच्छन् । मालां बिभ्राणः । अन्नं पेचिवान् । शुभं चक्राणः । ईषत्करः प्रपञ्चो हरिणा । विश्वं कर्त्ता । सतः पालकोऽवतरति । ग्रामं गामी । सुखस्मृणं दायी अत्र वा टाङ्योरित्यतो वानुवृत्तेज्ञाकाद्वा वर्तमानार्थक्तयोगे षष्ठी । सतां ज्ञातः शीलितो देवदत्तेनेत्यादौ च न । कान्तो हरिश्चन्द्र इव व्रजानाम् । तथा नपुंसके भावे क्तयोगे कर्माद्यविवक्षायां षष्ठी । सतां गतम् । कर्तृत्वे तु सद्भिर्गतम् । अधिकरणवाचि क्तयोगेऽपि । इदमेषामासितम् । इदमेषां भुक्तमोदनस्य । उकप्रत्ययान्तकमेश्च

---

( क ) उभयप्राप्तौ कर्मणि ॥ उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् ॥ चित्रं गवां दोहोऽगोपेन । इति विशेषो मूलपुस्तके ॥

योगे षष्ठी । तस्याः कामुकः । तथा द्विषः शत्रुर्वा । हरस्य हरं वा द्विषन् । कृत्यानां प्रयोगे कर्तरि वा । मया मम वा सेव्यो हरिः । उभयप्राप्तौ कृत्ये षष्ठी न । नेतव्या व्रजं गावः कृष्णेन । कर्तृकर्मणोरुभयोः प्राप्तिर्यस्मिन् कृति तद्योगे कर्मणि षष्ठी। आश्चर्यो गवां दोहोऽगोपेनेत्यादि ज्ञेयम् ॥ १८ ॥

**स्मृतौ च कार्ये** ॥ स्मृत्यर्थे धातौ प्रयुज्यमाने च कार्ये षष्ठी भवति ॥ मातुः स्मरति ॥ १९ ॥

(च०) 'स्मृतौ च कार्ये' स्मृतावर्थ'स्मन् स्मरणे' इति धातुयोगे कार्ये कर्मणि विषये षष्ठी विभक्तिर्भवति । उदाहरणम्—मातुः स्मरति मातुः स्मर्तव्ये षष्ठी । चकाराद् द्वितीयापि कर्मापि भवति—मातरं स्मरति ॥ 'तृप्त्यर्थानां करणे वा षष्ठी' फलैः फलानां वा तृप्तः । अद्भिः अपां वा तृप्तः ॥ १९ ॥

( प्र० ) स्मृताविति । स्मृतावित्यर्थग्रहणम् । ततश्च स्मरणार्थधातुयोगे कर्मणि षष्ठीत्यर्थः । चकाराद्दयेशोरपि । सर्पिषो दयते । जगतामीष्टे । कर्मत्वविवक्षायां तु मातरं स्मरति । ननु कर्माद्यविवक्षायां सम्बन्धमात्रविवक्षायां षष्ठोसिद्धावानर्थक्यमेतस्येति चेत्सत्यम् । एतदारम्भसामर्थ्यादुपपदविधानषष्ठ्या न समास इति सूचनात् । ततश्च मातुः स्मरणमित्यादौ समासाभावः ॥ १९ ॥

**हेतौ तृतीया पञ्चमी च वक्तव्या** ॥ अनित्यः शब्दः कृतकत्वेन कृतकत्वात् ॥

(च०) 'हेतौ साधने तृतीयापञ्चम्यौ भवतः । इह किल प्रतिज्ञा–हेतु-दृष्टान्त-उपनय-निगमन-भेदादनुमानस्य पञ्चावयवाः । तत्र पक्षवचनं प्रतिज्ञा । प्रतिज्ञास्थापको हेतुः (क) । यथा पर्वतोऽयं वह्निमान् । कस्मात् ? धूमवत्त्वात् । अयं पर्वतो वह्निमानिति प्रतिज्ञा । सा च धूमवत्त्वेन हेतुना स्थाप्यत इति । तत्र हेताविति द्वितीयानुमानावयवे तृतीया पञ्चमी च भवति । तत्रोदाहरणम्—अनित्यः शब्दः इति प्रतिज्ञा । कृतकत्वेन कृतकत्वादिति हेतुः । तत्र तृतीया विकल्पेन पञ्चमी । हेतुत्वादिति प्रस्तावाच्छेषा अपि त्रयोऽवयवा व्यज्यन्ते । ते चामी—यो यः कृतकः स सोऽनित्यः यथा घट इति दृष्टान्तः । कृतकोऽयमित्युपनयः । तस्मादनित्यश्चायमिति निगमनम् (ख) ॥

( प्र० ) हेताविति साध्यसाधक इत्यर्थः । शब्दे अनित्यत्वं साध्यम् । कृतकत्वं हेतुः । अनित्यत्व इति प्रथमप्रयोज्यश्च साध्यत्वद्योतनायेत्यदोषः ॥

**भयहेतौ पञ्चमी च वक्तव्या** ॥ चौराद्बिभेति ॥ व्याघ्राद्बिभेति ॥ विद्युत्पाताच्चकितः ॥ ॥

( क ) तथाच न्यायसूत्रम्—"साध्यनिर्देशः प्रतिज्ञा" इति, "उदाहरणसामर्थ्यात् साध्यसाधनं हेतुः" "तथा वैधर्म्यात्" इति च ।

( ख ) "साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्" "तद्विपर्ययाद्वा विपरीतम्", "उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः", "हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" ।—इति गौतमसूत्राणि ॥

(च०) भयहेतौ भयस्य करणे पञ्चमी। भयस्य हेतुर्यः पशुपुरुषादिजनितः कारणवर्गस्तस्मिन्नर्थे पञ्चमी विभक्तिर्भवति। चौराद्बिभेति। व्याघ्रात्त्रस्यति। विद्युत्पाताच्चकितः। अत्र भयहेतौ भयार्थे पञ्चमी॥

( प्र० ) भयहेतावितति। भयस्य हेतुः करणं तत्र पञ्चमीत्यर्थः। भयेत्युपलक्षणं जुगुप्साविरामप्रमादार्थानां ततश्च। पापाज्जुगुप्सते। पापाद्विरमति। धर्मात्प्रमाद्यति॥

**षष्ठी च हेतुप्रयोगे॥** हेतुप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्॥ कस्य हेतोरियं कन्या॥ २०॥

(च०) 'षष्ठी हेतुप्रयोगे च'॥ हेतुशब्दस्य प्रयोगे हेतुशब्दे प्रयुज्यमाने षष्ठी भवति। कस्य हेतोरियं कन्या। कस्य निमित्तमित्यर्थः। चकारात्सर्वादेर्हेतुप्रयोगे तृतीयाषष्ठ्यौ स्तः। केन हेतुना। कस्य हेतोः। निमित्तकारणहेत्वर्थप्रयोगे सर्वादेः सर्वा विभक्तयो भवन्ति। को हेतुः। कं हेतुं वसति। केन हेतुना। कस्मै हेतवे। कस्माद्धेतोः। कस्य हेतोः कस्मिन् हेतौ इत्यादि॥ २०॥

( प्र० ) षष्ठी च हेतुप्रयोगे इति। प्रयोगस्य शब्दधर्मत्वाद्धेतुशब्द एव गृह्यते न हेत्वर्थः। चकारात्सर्वादियोगे तृतीयापि। कस्य हेतोः केन हेतुनेत्यादि। सर्वनाम्नो हेतुप्रयोगे द्वितीयाव्यतिरिक्ताः सर्वा विभक्तयो निमित्तकारणहेतुत्वार्थे भवन्तीति भाष्यकारादयः। को हेतुः। केन निमित्तेन। कस्मै कारणायेत्यादि। सर्वानामाप्रयोगेऽपि प्रातिपदिकमात्रात्तृतीयादय इति केचित्। ज्ञानेन निमित्तेन हरिः सेव्यः॥ २०॥

**इत्थंभावे तृतीया॥** शिष्यं पुत्रेण पश्यति॥ संसारमसारेण पश्यति॥ २१॥

(च०) 'इत्थंभावे तृतीया' इति। असावयमिवेति इत्थंभावस्तस्मिन्नर्थे तृतीयाविभक्तिर्भवति। उदाहरणम्—शिष्यं पुत्रेण पश्यति पुत्रसदृशं पश्यति। पुत्रमिवेति भावः। यद्वा अयं प्रकारः इत्थम् तस्य भावः इत्थंभावः। सामान्यस्य भेदको विशेषः प्रकारः किंचित्प्रकारं प्राप्तः इत्थंभावः। यथा मनुष्यत्वसामान्यभेदको विशेषः शिष्यत्वं, लक्षणं पुत्र इति न भवति किंतु तद्गतस्नेहः त्रशब्देनोच्यते इति। आचार्यः शिष्यं पुत्रेण पश्यति त्रमिव पश्यतीत्यर्थः। एवं संसारमसारेणेत्यपि ज्ञेयम्। साधुः संसारमसारमिव पश्यति असारतया पश्यतीत्यर्थः॥ २१॥

( प्र० ) इत्थम् अनेन प्रकारेण भवनम् इत्थंभावः तस्मिन्नर्थे तृतीया भवतीत्यर्थः। शिष्यं पुत्रत्वेन संसारमसारत्वेन पश्यतीत्यर्थः॥ २१॥

**येनाङ्गविकारः॥** येन विकृतेनाङ्गेनाङ्गिनोऽङ्गविकारो लक्ष्यते तस्मादङ्गात्तृतीया विभक्तिर्भवति॥ अक्ष्णा काणः॥ पादेन खञ्जः। शिरसा खल्वाटः॥ २२॥

(च०) सूत्रम्—'येनाङ्गविकारः' येनेति यच्छब्दस्य तृतीयैकवचनान्तम्। 'त्यदादेष्टे०' 'टेन' 'अ इ उ ए'। अङ्गविकारः अङ्गं विक्रियतेऽनेनेत्यङ्गविकारः। प्रथमैकवचनान्तम्।

'स्त्रोवि०' 'सवर्णे०' सिद्धं सूत्रम् । येन विकृतेनाङ्गेन अक्ष्यादिना अङ्गिनः शरीरिणोऽङ्गविकारः शरीरविकृतिर्लक्ष्यते ज्ञायते तस्माद्विकृताङ्गात्तृतीया विभक्तिर्भवति । तत्र विकृतत्वं द्विविधं न्यूनत्वेन आधिक्येन चेति ॥ न्यूनत्वं व्याचष्टे । अक्ष्णा नेत्रेण काणः । पादेन खञ्जः । शिरसा मस्तकेन खल्वाटः केशरहितः । करेण कुणिः । न्यूनत्वविकृतादिदमुदाहरणचतुष्टयम् । एवं मुखेन त्रिलोचनः । वपुषा चतुर्भुजः । इत्येतदुदाहरणद्वयमाधिक्यविकृतौ ज्ञेयम् ॥ २२ ॥

( प्र० ) येनेति । अङ्गानि सन्त्यस्येत्यङ्गं शरीरं येनेति तदवयवो हेतुत्वेन निर्दिश्यते स च विकृत एव विकारहेतुरिति येन विकृतेनाङ्गिनो विकारो लक्ष्यते तस्मादङ्गात्तृतीयेत्यर्थः ॥ २२ ॥

**जनिकर्तुः प्रकृतिः ॥** जायमानस्य कार्यस्योपादानमपादानसंज्ञं भवति ॥ तत्रापादाने पञ्चमी । यस्मात्प्रजाः प्रजायन्ते तद्ब्रह्मेति (क) ॥२३॥

(च०) अथ पञ्चम्या अर्थान्तरमाह—सूत्रम्—'जनिकर्तुः प्रकृतिः ॥' जनिकर्तुः जनेर्जन्मनः यद्वा जनेर्धातोः क्रियापदस्य कर्ता उत्पद्यमानं वस्तु जनिकर्ता तस्य षष्ठ्येकवचनान्तम् । 'ऋतो ङ उः' अस्य ङः ङित्वाट्टिलोपः । 'स्वरहीनं०' 'स्रोवि०' । प्रकृतिः प्रथमैकवचनान्तम् । 'स्रोवि०' ॥ सिद्धं सूत्रम् । 'जनिकर्तुः प्रकृतिरपादानम्' इत्थं वा सूत्रम् अथ वृत्तिः—जनिकर्तुरिति । कोऽर्थः ? जायमानस्य जायमानमुत्पद्यमानं यत्कार्यं तस्य प्रकृतिरुपादानं मूलकारणं तदपादानसंज्ञं भवति । तत्र अपादाने पञ्चमी विभक्तिर्भवतीति शेषः । अर्थाज्जनेर्धातोर्यः कर्ता स जायमानः सन् कार्यं भवति तस्य प्रकृतिः कारणं पञ्चमी । उदाहरणम्—'यस्मात्प्रजाः प्रजायन्ते तद्ब्रह्मेत्यभिधीयते ।' प्रजायन्ते इति जनिधातुपदं प्रजा इति जनिकर्तृपदम् जायमाने कार्यत्वात्, तस्य प्रकृतिर्यच्छब्दनिर्दिष्टं ब्रह्म। ततो यस्मादिति मूलकारणत्वात् प्रकृतिपदस्य पञ्चमी ॥ २३ ॥

( प्र० ) जनिकर्तुरिति । जननं जनिः जन्यर्थस्य कर्ता जनिकर्ता स च जायमान एवेत्यभिप्रेत्याह । जायमानस्य कार्यस्येत्यादि । उपादानमत्र करणमात्रं गृह्यते न समवायिकारणम् । पुत्रात्प्रमोदो जायते इत्यादौ तदभावादप्रसङ्गात् । अपादानम् अपादाने पञ्चमीति सूत्रद्वयानुसारेणोक्तम् । अपादानसंज्ञं स्यात्तत्रापादाने पञ्चमीति ॥ २३ ॥

**आङादियोगे च ॥** आङादियोगे पञ्चमीविभक्तिर्भवति ॥ आपाटलिपुत्राद्वृष्टो देवः ॥ २४ ॥

( च० ) 'आङादियोगे च' ॥ आङुपसर्गादियोगे पञ्चमी । आदिशब्दात् आङ् अपपरियोगे । आङ् उपसर्गो मर्यादायाम् अभिविधौ च वर्तते । तत्र तेन विनेति मर्यादा । तेन सहेत्यभिविधिरिति भेदः । तत्रोदाहरणम्—आपाटलिपुत्रादिति आपाटलिपुत्रं नगरं मर्यादीकृत्य तस्मादर्वागर्वाग्, अभिव्याप्य वा देवो मेघो वृष्ट इत्यर्थः ॥ पर्यपायोर्वर्जने पञ्चमी।

---

( क ) "यतो वा इमानि भूतानि जायन्ते" इत्यत्राऽपि उपादानस्यापादानसंज्ञकतया पञ्चमी । अत्र उपादानत्वं स्वोपाधिप्रधानतया बोध्यम्; स्वप्रधानतया निमित्तत्वात् । यथा ऊर्णनाभिः तन्तुकार्यं प्रति स्वप्रधानतया निमित्तमपि स्वशरीरप्रधानतयोपादानं च भवति ॥—इति अद्वैतवेदान्तसिद्धान्तः ॥

पर्यपौ वर्जनार्थे। परि त्रिगर्तेभ्यो देवो वृष्टः। अप त्रिगर्तेभ्यो वृष्टो देवः। त्रिगर्तदेशान् वर्जयित्वा वृष्ट इत्यर्थः। 'राज्ञि मेघे सुरे देवः' इत्यनेकार्थः॥ विद्यास्वीकारे आख्यातुः पञ्चमी स्यात्। उपाध्यायादधीते॥ २४॥

(प्र०) आङादियोगे चेति। मर्यादाभिविध्यर्थकाङ्योगे पञ्चमी। आदिना वर्जनार्थकापपर्योर्योगेऽपि। अप हरेः परि हरेः संसारः। हरिं वर्जयित्वा संसार इत्यर्थः। तथा भूकर्तुः प्रभवादपि। हिमवतो गङ्गा प्रभवति। तत्र प्रथमं दृश्यत इत्यर्थः। तथा पराजेः प्रयोगेऽसह्यार्थादपि। पापात्पराजयते इत्यादि ज्ञेयम्॥ २४॥

## तादर्थ्ये चतुर्थी वक्तव्या(क)॥

संयमाय श्रुतं धत्ते नरो धर्माय संयमम्।
धर्मं मोक्षाय मेधावी धनं दानाय भुक्तये॥ १॥

(च०) अथ पुनश्चतुर्थीमाह—'तादर्थ्ये' इति॥ सोऽर्थो यस्य तत्तदर्थं तस्य भावस्तादर्थ्यम्। यद्वा स एवार्थस्तदर्थस्तस्य भावस्तादर्थ्यम्। यद्वा तस्मै कार्याय इदं कारणं तदर्थं तस्य भावस्तादर्थ्यं तस्मिंस्तादर्थ्ये अर्थे वाच्यमाने चतुर्थी विभक्तिर्भवति। तत्रोदाहरणं श्लोकेन—संयमायेति। नरो मनुष्यः श्रुतं शास्त्रं धत्ते। कस्मै?। संयमाय संयमार्थमित्यर्थः। धर्माय धर्मार्थं संयमं धत्ते। मेधावी बुद्धिमान् मोक्षाय मोक्षार्थं धर्मं धत्ते। धनं दानाय तथा भुक्तये भोगाय धत्ते। अत्र संयमादीनां तादर्थ्ये चतुर्थी॥

(प्र०) तादर्थ्ये इति। तच्छब्देन कार्यं निर्दिश्यते। तस्मै इदं तदर्थं तदर्थशब्दः कारणसम्बन्धमाह। ततश्च षष्ठीप्राप्तौ वचनम्॥

## क्रुध्यादियोगे च॥ क्रूराय क्रुध्यति॥ विप्राय द्रुह्यति। पुत्राय कुप्यति। गुणवते असूयति॥

(च०) क्रुध्यादिधातुयोगेऽपि चतुर्थी। क्रुधिद्रुहिईर्ष्यासूयाश्लाघह्नुङ्स्थाशपधारिस्पृहि एते क्रुध्यादयः। क्रूराय क्रुध्यति क्रूरं प्रति क्रोध इत्यस्मिन्नर्थे क्रुध्धातुयोगे क्रूरायेत्यत्र चतुर्थी। आदिशब्दान्मित्राय द्रुह्यति। गुणवते पुरुषाय असूयतीत्यादि। रोषवाचकधातुयोगे चतुर्थी। पुत्राय कुप्यति। दुष्टायेर्ष्यतीत्यादयः। गुणेषु दोषारोपोऽसूया। परसम्पत्त्यसहनमीर्ष्या। इति भेदः। 'सोपसर्गयोश्च क्रुधद्रुहोर्योगे चतुर्थीप्रतिषेधो वक्तव्यः'। क्रूरमभिक्रुध्यति। मित्रमभिद्रुह्यति। चकारात् श्लाघह्नुङ्स्थाशपधारिस्पृहादीनां रुच्यर्थानां तृप्यमाणात् चतुर्थीति सूचितम्। भगवते श्लाघते। मदनाय शपते। मित्राय तिष्ठति। पत्न्यै धारयति भूषणानि पतिः। कृष्णाय स्पृहयति गोपी। क्षुधिताय रोचतेऽन्नमित्यादि ज्ञेयम्॥

लोकानां शुभाशुभसूचको भूतादिविकार उत्पातस्तत्रापि चतुर्थी। वाताय कपिला विद्युत्, वातात्पातज्ञापिकेत्यर्थः॥

---

(क) तादर्थ्ये इति। अत्रोपकारकत्वरूपसम्बन्धोऽभिधीयते। उपकारकत्वं चानेकधा। तेन विभायमाधिक्यादावपि भवति। इदमाधिकं यथा;—"क्लृपि सम्पद्यमाने"। क्लृपिधातुप्रयुज्यमाने सति सम्पद्यमानेऽर्थे वर्तमानाच्चतुर्थी स्यात्। भक्तिर्ज्ञानाय कल्पते-सम्पद्यते-जायते। इति॥

( प्र० ) क्रुधादियोगे चेति । क्रुधद्रुहेर्ष्यासूयार्थाः क्रुधादयस्तद्योगे यं प्रति कोपस्ततश्चतुर्थी वाच्येत्यर्थः । ततश्च भार्यामीर्ष्यतीत्यादौ तां प्रति कोपाभावाच्चतुर्थ्यभावः । सोपसर्गयोस्तु क्रुधद्रुहोर्द्वितीयैव । क्रूरमभिक्रुध्यति । अभिद्रुह्यति । एवमायुष्यमद्रभद्रकुशलसुखार्थयोगेऽप्याशिषि चतुर्थी षष्ठी च । कृष्णाय कृष्णस्य वा चिरं जीवितं भूयादित्यादि ॥

**तुमन्लोपे चतुर्थी । फलेभ्यो याति; फलान्याहर्तुं यातीत्यर्थः ॥**

( च० ) तुमर्थाच्च भाववचनात् । यागाय याति । य॒ं यातीत्यर्थः ॥ मन्यतेः कर्मण्यनादरे वा चतुर्थी । न त्वां तृणाय मन्ये इत्यर्थः ॥ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ । व्रजाय व्रजति व्रजं वा ॥

**क्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्या ॥ हर्म्यात्प्रेक्षते । हर्म्यमारुह्य प्रेक्षत इत्यर्थः ॥ [ आसनात्प्रेक्षते । आसने उपविश्य प्रेक्षत इत्यर्थः ] ॥**

( च० ) 'क्यब्लोपे इति' ॥ क्यबर्थो वाच्यमानः क्यपश्चाप्रयोगः क्यब्लोपस्तस्मिन्नर्थे पञ्चमी वक्तव्या । यतः—'क्यबर्थो दृश्यते यत्र क्यबन्तं न प्रयुज्यते । स एव क्यब्लोपः स्यादिति प्रोक्तं मनीषिभिः ।' क्यब्लोपे कर्मण्यधिकरणे पञ्चमी वक्तव्या । उदाहरणम्—हर्म्यात्प्रेक्षत इति ॥ कोऽर्थः ? । हर्म्यं गृहमारुह्य प्रेक्षते पश्यतीत्यर्थः । एवमासनाद्वदति आसने उपविश्य वदतीत्यर्थः ॥

( प्र० ) क्यब्लोप इति । यत्र क्यबर्थः प्रतीयते स च न प्रयुज्यते स च क्यब्लोपः तस्मिन् सति कर्मण्यधिकरणे च पञ्चमी वक्तव्येत्यर्थः । हर्म्यमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः ॥

**निमित्तात्कर्मयोगे च सप्तमी वक्तव्या ॥**

**चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः(क) ॥**

**विषये च(ख) ॥ तर्के चतुरः ॥**

( च० ) सप्तमीमाह—निमित्तादिति । निमित्तं नाम पञ्चमोऽधिकरणभेदस्तस्मान्निमित्तात् प्रयोजनवाचिनः शब्दात् कर्मयोगे सप्तमी वक्तव्या । तत्रोदाहरणत्—चर्म० । चर्मणीति चर्मनिमित्तं द्वीपिनं चित्रकं हन्ति विनाशयति । दन्तयोर्दन्तनिमित्तं कुञ्जरं हस्तिनं हन्ति । केशेषु केशनिमित्तं चमरीं गां हन्ति । सीम्नि सामायां सीमानिमित्तं पु-

( क ) निमित्तादिति । निमित्तादुद्देश्यात्तद्वाचकपदादित्यर्थः । तथा च निमित्तकर्मणोरवयवावयवित्वसम्बन्धश्चेत्तदा निमित्तवाचकात् सप्तमी । तेन चर्मोद्देश्यकद्वीपिकर्मकहननानुकूलो व्यापारः । लोकेशकरास्तु;—निमित्तमिह फलं योगः संयोगसमवायात्मकः । योगविशेषे किं ? वेतनेन धान्यं लुनाति ।—इति प्राहुः । सीमेति । गुदमेढ्रान्तरालाङ्गं सीमेति प्रोच्यते बुधैः । पुष्कलो मृगभेदः स्याद् वन्यः सौगन्ध्यहेतुकः ॥

( ख ) विषयोऽनन्यभावः ॥

ष्कलको नाम ग्रामाधिपतिः हतो मारितः ॥ विषये चेति। विषये विषयार्थे वाच्यमाने सप्तमी विभक्तिर्भवति ॥ उदाहरणम्—तर्के तर्कविषये चतुरो निपुणः। अत्र तर्कः क्रियाश्रयत्वाभावान्नाधिकरणं ततो विषये सप्तमी ॥

( प्र० ) निमित्तादिति। निमित्तात्प्रयोजनवाचिशब्दात्कर्मणो योगे सप्तमी वक्तव्येत्यर्थः। चर्मणीत्यादौ हननिमित्ताच्चर्मादेः द्वीप्यादिकर्मयोगे सप्तमी समभूत्। सीमनिमित्तं पुष्कलकः पाषाणो हतो निहितः। केचित्तु। "गुदमेढ्रान्तरालं वा सीमेति प्रोच्यते बुधैः। पुष्कलो वृषभेदः स्याद्वन्यः सौगन्ध्यहेतुकः ॥" सीम्नि गुदमेढ्रान्तरालावयवनिमित्तं पुष्कलो मृषकविशेषः हतो घ्नत इत्याहुः। विषये चेति। क्रियापदाप्रयोगे कर्तृकर्माद्यसंभवे तदाधारत्वासंभवादारम्भः। तर्कचतुर इति। तर्कविषयं चातुर्यमस्येत्यर्थः। चकारात्साध्वसाधुप्रयोगे। साधुः कृष्णो मातरि। असाधुर्मातुले। तथा इन्नन्तयोगे कर्मणि। अधीती व्याकरणे इत्यादि ॥

**षष्ठीसप्तम्यौ चानादरे** ॥ बहूनां क्रोशतां गतश्चौरः ॥ बहुष्वसाधुषु वदत्स्वपि स्वयमार्यो याति साधुमार्गेण ॥ बहुषु साधुषु वदत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण ॥ मातापित्रोः रुदतोः प्रव्रजति पुत्रः ॥ २९ ॥

( च० ) षष्ठी०। अनादरे क्रियमाणे सति षष्ठी सप्तमी च भवति। तत्रोदाहरणम्—बहूनां जनानां क्रोशतां सतां च चौरो गतः। बहून् जनान् आक्रोशतोऽवज्ञाय अनादृत्येत्यर्थः। बहुषु साधुषु निवारयत्स्वपि निषेधयत्स्वपि आर्यः साधुः स्वयमात्मना साधुमार्गेण यातीत्यत्रानादरे सप्तमी। बहुषु साधुजनेषु वदत्स्वपि कथयत्स्वप्यनार्योऽसाधुः स्वयमात्मना असाधुमार्गेण असमीचीनमार्गेण याति। बहुषु साधुजनेषु अनादरं कृत्वा व्रजतीत्यर्थः। एवं मातापित्रो रुदतो व्रजति पुत्र इत्यपि ज्ञेयम् ॥ इन्नन्ते कर्मण्यपि सप्तमी अधीती व्याकरणे ॥ २९ ॥

( प्र० ) **षष्ठीसप्तम्यौ चानादर** इति। अनादरे षष्ठी सप्तमी च वक्तव्येत्यर्थः। अनादरस्तु बलहठविवेकाविवेकजत्वाच्चतुर्द्धा इति चेतसि कृत्वोदाहरणचतुष्टयमाह। बहूनामित्यादि। बहून् क्रोशतोऽनादृत्य गत इत्यर्थः। आर्यो विवेकी विवेकादसन्मार्गमनादृत्य सन्मार्गेण यातीत्यर्थः। अनार्य इत्यत्राविवेकादनादरः। सन्मार्गेस्य प्रव्रजति संन्यस्यति। हठाद्विवेकाद्वा। चकारात्कारकद्वयमध्यस्थात्कालादध्वनश्च सप्तमीपञ्चम्यौ। अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता। अत्र कारकं नाम क्रियानिमित्तभूता शक्तिः। ततश्चाद्य भुजिक्रियायाः कर्तरि द्वे शक्ती व्यवस्थिते। एका अद्य भुजेः साधनभूता। अपरा द्व्यहेऽतीते इति भिन्नयोर्द्वयोः कारकशक्त्योर्मध्ये कालः। अथवाधिकरणकर्तृकारकद्वयमध्यस्थः। एवमिहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। अत्रापीहस्थलक्ष्ययोः कर्तृकर्म्मणोर्मध्येऽध्वा। तथा अधिकयोगेऽपि। लोके लोकाद्वा अधिको हरिः इत्यादि प्रयोगवशादूह्यम् ॥ २९ ॥

**अन्योक्ते प्रथमा** ॥ यदेदं कार्यादन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्तव्या ॥ घटः क्रियते। घटः कार्यः ॥ ३० ॥

( च ) अथ नित्यसमासमाह—'दिक्संख्ये०' दिक्संख्ये प्रथमाद्विवचनान्तम् । संज्ञायां सप्तम्येकवचनान्तम् । दिग्वाचकं संख्यावाचकं च संज्ञायां वाच्यमानायां तुल्यार्थेन एकार्थेन उत्तरपदेन सह अविग्रहं विग्रहरहितं समस्यते । तत्र समासश्च नित्यो भवति ॥ अथ नित्यानित्यसमासस्वरूपमाह—अविग्रहो नित्यसमासः । यो नित्यसमासः स विग्रहरहितः असमस्यमानपदविग्रहो भवति । अन्योऽनित्यसमासोऽस्वपदविग्रहोऽपि स्वैः पदैर्विग्रहो यस्य स स्वपदविग्रहः । न स्वपदविग्रहः अस्वपदविग्रहः परपदविग्रहः । अपिशब्दात्स्वपदविग्रहोऽपि भवति ॥ अस्वपदविग्रहो यथा—स्त्रियमधिकृत्य । अत्र अधिकृत्येति परपदेन विग्रहः बाह्यपदत्वादस्वपदम् । अथवा बहु धनं यस्य सः । अत्र यस्येति रपदेन विग्रहः । इति अस्वपदविग्रहः । अस्वादन्यः इत्यप्यस्वपदविग्रहः ॥ तथा ग्रामं प्राप्त इत्यादौ स्वाभ्यां पदाभ्यां विग्रहमध्यवर्तिभ्यां पदाभ्यां विग्रहः । अथ नित्यसमासोदाहरणम् । यथा दक्षिणाग्निरित्याग्निभेदः । 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः' इति ॥ दिग्वाची दक्षिणाशब्दः । एकार्थेन अग्निना परपदेन समसितः । समासश्च तत्पुरुषः । नित्यत्वाद्विग्रहो न क्रियते । तथा सप्तग्रामा इत्यत्र सप्तन्शब्दः संख्यावाचक एकार्थेन ग्रामपदेन समसितः । अत्र विग्रहं विनापि तत्पुरुषः समासः नित्यः । नित्यं पदद्वयात्मकत्वात्समासरूपमेव पदमित्यर्थः । दक्षिणाग्निरिति अग्निभेदनामवाची शब्दः । सप्तग्रामा इति ग्रामभेदनामवाची शब्दः ॥ ३३ ॥

'पूर्वेऽव्ययेऽव्ययीभावोऽमादौ तत्पुरुषः स्मृतः ।
चकारबहुलो द्वन्द्वः संख्यापूर्वो द्विगुः स्मृतः ॥
यस्य येन बहुव्रीहिः स चासौ कर्मधारयः ।
इति किंचित्समासानां षण्णां लक्षणमीरितम् ॥

इति सुबोधिकायां समासदीपिका ॥ १८ ॥

( प्र० ) दिक्सङ्ख्ये इति । दिग्वाचकसङ्ख्यावाचकशब्दावित्यर्थः । संज्ञायामित्यनेन नित्यसमाससूचनात्तल्लक्षणमाह । अविग्रह इति । दक्षिणाग्निरित्यादौ विग्रहशून्य एको नित्यसमासः । अधिस्त्रीत्यादावस्वपदविग्रहः समस्यमानपदान्यपदविग्रहः । अन्यो नित्यसमास इति नित्यसमासो द्विधेत्यर्थः ॥ ३२ ॥

इति सारस्वतप्रसादे समाससङ्क्षेपः समासः ॥ १८ ॥



केनापि पदेन विग्रहो वाक्यं यत्र स नित्यः ॥ तेन लम्बौ कर्णौ यस्य स लम्बकर्णः ॥ दात्रेण. छिन्नमिति स्वपदविग्रहः ॥ अस्वपदविग्रहो नित्यः । यस्मिन्समासावबोधकं वाक्यं न तिष्ठति स नित्यः ।—इति मूलपुस्तकगतपाठः ॥ कुत्रचिच्च नित्यसमासस्योदाहरणरूपं 'दक्षिणाग्निः सप्त ग्रामाः' इति प्रयोगद्वयमधिकमस्ति ।

## * तद्धितप्रकरणम् ॥ १६ ॥ *

अथ तद्धितो निरूप्यते ॥ अपत्येऽण् ॥ नाम्नोऽपत्येऽर्थेऽण्प्रत्ययो भवति (क) ॥ उपगोरपत्यं पुमानिति विग्रहे उपगोः अण् इति स्थिते । समासप्रत्यययोः इति षष्ठीलोपः । णकारो वृद्ध्यर्थ ईबर्थश्च ॥ १ ॥

( च० ) अथ तद्धितो निरूप्यते—अथेति ॥ समासकथनानन्तरं तद्धितस्तद्धितसंज्ञकः प्रत्ययो निरूप्यते । तस्य समासस्य हितः, यद्वा तेषां पूर्वोक्तानां नामादीनामर्थान्तरप्रकाशनेन हितस्तद्धितः स निरूप्यते कथ्यत इत्यर्थः ॥ यद्यपि तद्धितसंज्ञकाः प्रत्यया बहवः सन्ति तथापि जात्यभिप्रायेणैकवचनम् ॥ सूत्रम्—'अपत्येऽण्' ॥ न पतति पिता यस्मात् तदपत्यं तस्मिन् । अपत्यशब्दस्य सप्तम्येकवचनान्तम् 'अ इ ए' । अण् प्रथमैकवचनान्तम् 'हसेपः०' इति नाम्नो० अपत्ये पुत्रपौत्रादिसंताने शिष्यप्रशिष्यादिसंताने वाच्ये सति नाम्नः अण् प्रत्ययो भवति । अत्रापि नामशब्देन पदमेव विवक्षितम् । अन्यथा 'अविभक्ति नाम' इत्युच्यमाने उपगोरिति षष्ठ्यन्तात् अण्प्रत्ययो न स्यात् । यद्वा उपगुशब्दात् प्रथममण् प्रत्ययः । ततः षष्ठीं दत्त्वा विग्रहः कार्यः ॥ उदाहरणम्—उपगुशब्दात् अपत्येऽर्थेऽण्प्रत्ययः । ततः उपगुशब्दात् षष्ठ्येकवचनम् । 'ङिति' 'ङस्य' इत्यकारलोपः । 'ओर्वि०' उपगोरपत्यमिति विग्रहे सति । तद्धितेऽपि विग्रहोऽन्वययोग्यत्वे सत्येव भवति । तेन 'वस्त्रमुपगोरपत्यं चैत्रस्य' इत्यादौ न । उपगुनाम्नस्तापसस्यापत्यं संतानादिः पुत्रादिरिति विग्रहे कृते 'समासप्रत्यययोः' इति विभक्तिलोपे 'उक्तार्थानाम्' इति अपत्यशब्दे लुप्ते उपगु अण् इति स्थिते । णकारो वृद्ध्यर्थः ईबर्थश्च ॥ १ ॥

( प्र० ) समासश्चान्वये नाम्नामित्यत्र चशब्दात्तद्धितस्याप्यन्वययोग्यत्वे एव संसूचनात्समासमासावसरसङ्गत्या तद्धितप्रत्ययान्निरूपयितुमुपक्रमते । अथेति । तद्धित इति जात्यभिप्रायेणैकवचनम् । तेभ्यः पूर्वोक्तेभ्यः नामपदेभ्योऽर्थान्तरप्रतिपादनशक्तिप्रदत्वेन हितोऽनुकूलस्तद्धित इत्यन्वर्थसंज्ञाविज्ञानात्तद्धितसंज्ञा णादोनामिति भावः । अपत्येऽण । नाम्न इति नामप्रकरणत्वात् । अत्रापि पूर्ववन्नामशब्देन पदं प्रोच्यते । वाक्ये औपगव इति तद्धितार्थबोधके इति शेषः । अपत्यार्थस्याण् उक्तार्थत्वादुक्तार्थानामित्यभिप्रेत्यपदाप्रयोगः ॥ १ ॥

**आदिस्वरस्य ञ्णिति च वृद्धिः** ॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति ञिति णिति च तद्धिते परतः । उकारस्यौकारो वृद्धिः ॥ २ ॥

( च० ) वृद्धिकरणसूत्रम्—'आदिस्वर०' ॥ आदिश्चासौ स्वरश्च आदिस्वरस्तस्य षष्ठ्येकवचनान्तम् । 'ङस्य' ञ्णिति ञ् च ण् च ञ्णौ तौ इतौ यस्य ञ्णित् तस्मिन् ञ्णिति सप्तम्येकवचनान्तम् 'स्वरहीनं०' । वृद्धिः प्रथमैकवचनान्तम् 'ओर्वि०' त्रिपदमिदं सूत्रम् । स्वराणां तद्धितप्रत्ययान्तपदसंबन्धिनां सर्वस्वराणां मध्ये य आदिस्वरस्तस्य ञिति

---

( क ) "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे" ॥—इत्यमरः ॥

णिति च तद्धिते प्रत्यये परे वृद्धिर्भवति । अनेन उकारस्य औकारो वृद्धिः । आरै औ वृद्धिः' इत्युक्तत्वात् । औपगु अ इति स्थिते ॥ २ ॥

( प्र० ) आदिस्वरस्य इति । आदौ स्वरः आदिस्वरः । आदित्वं च स्वरापेक्षयेत्यभिप्रेत्योक्तं स्वराणां मध्ये इत्यादि । ततश्च वासिष्ठ इत्यादौ वृद्धिः । तदपि संभवदभिप्रायम् । ततश्च एः कामस्यापत्यमाय इत्यादावाद्यन्तवदेकस्मिन्निति आदित्वाद्भवत्येव वृद्धिः एतदपि संभवदभिप्रायम् । ञ् च ण् च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् तद्धिते परत इति तद्धितप्रकरणत्वात् उकारौकारयोः स्थानादीनां तरतमत्वादौकारो वृद्धिरित्यर्थः ॥ २ ॥

**वोऽव्यस्वरे** ॥ उकारस्य ओकारस्य च अव् भवति स्वरे यकारे च परे ॥ औपगवः । वसिष्ठस्यापत्यं वासिष्ठः । गोतमस्यापत्यं गौतमः(क)॥ ३॥

( च० ) सूत्रम्—'वोऽव्यस्वरे' ॥ उश्च ओश्च वो तस्य वो षष्ठ्येकवचनान्तं सांकेतिकम् । अव् प्रथमैकवचनान्तम्—'हसेपः०' । यश्च स्वरश्च यस्वरं तस्मिन् सप्तम्येकवचनान्तम् । 'अ इ ए' । त्रिपदमिदं सूत्रम् । अन्त्यस्योकारस्य ओकारस्य च अव् भवति तद्धितसंबन्धियकारे स्वरे च परे । अत्र स्वरे परे उकारस्य अव् भवति गव् 'स्वरहीनं०' औपगवः । 'कृत्तद्धितसमासाश्च' इति नामसंज्ञायां प्रथमैकवचने 'सोर्विः०' उपगुर्नाम कश्चिन्मुनिस्तस्यापत्यमौपगवः ॥ एवं वसिष्ठस्यापत्यं वासिष्ठः । अण्प्रत्ययः । अत्र वकारस्थिताकारस्यादिस्वरस्य वृद्धिराकारः । 'यस्य लोपः' 'स्वरहीनं०' ॥ एवं गोतमस्यापत्यं गौतमः । इत्यत्राण्निमित्ता वृद्धिः—उकारस्य औकारः । 'सोर्विः०' ॥ सर्वत्र तद्धिते विकल्पानुवृत्तिर्ज्ञेया इति स्वयंभुवः इत्यादौ अवादेशो न ॥ ३ ॥

( प्र० ) वोऽव्यस्वरे इति । उश्च ओश्च वो इति साङ्केतिकं षष्ठीद्विवचनान्तम् । यश्च स्वरश्चेति समाहारः एतत्तद्धितप्रकरणत्वात्तद्धिते एवेति गोयानमित्यादावनतिप्रसङ्गः ओकारस्य स्वरे अविति सिद्धेऽपि यकारे विधानार्थं वचनम् । यद्यपि क्वचित्स्वरवद्यकार इति स्वरत्वातिदेशाद्यकारेऽपि अव् संभवति तथापि सूत्रस्य वक्तव्यानुपजीवित्वादौकारोक्तिर्युक्तैव । नामसंज्ञायां स्याद्युत्पत्तौ देववद्रूपं नेयम् । वसिष्ठस्यापत्यं गोतमस्यापत्यमिति विग्रहे । ऋषिवाचकत्वादिञभावे अण् । यस्य लोप इति लोपः ॥ ३ ॥

**ऋ उराणि** ॥ ऋकारस्य उर् भवति अणि परे ॥ षण्णां मातृणामपत्यं षाण्मातुरः । तिसृणां मातृणामपत्यं त्रैमातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः(ख)॥ ४॥

( च० ) सूत्रम्—'ऋ उरणि' ॥ ऋ षष्ठ्येकवचनान्तं सांकेतिकम् । उर् प्रथमैकवचनान्तम् 'हसेपः०' । अणि सप्तम्येकवचनान्तम् । 'स्वरहीनं०' अण्प्रत्यये परे मातृशब्दसंबन्धिनः ऋकारस्य उर् भवति । षष् मातृ । षष्शब्दात् षष्ठीबहुवचने 'ष्णः' इति नुट्

---

( क ) 'शिवादिभ्यश्च' इत्यण् वक्तव्यः । अन्यथा इञः प्राप्तिः । शिवस्यापत्यं शैवः । विदेहस्यापत्यं वैदेहः ॥

( ख ) 'षो डः 'त्वन्मदेकत्वे' इति सूत्रनिर्देशात्क्वचिदपदान्तेऽपि झसानां जमा एष्टव्याः ।

'षो डः' 'ष्टुभिः ष्टुः' 'स्वरहीनं' 'सोऽनु०' । मातृशब्दात् षष्ठीबहुवचने 'नुडामः' 'नामि' । षण्णां मातृणामपत्यमिति विग्रहे । 'समासप्रत्यययोः' इति विभक्तिलोपः षष् मातृ अ इति । 'आदिस्वरस्य०' इति वृद्धिः । 'षो डः' 'वावसाने' डस्य टः । 'ञमे ञमा वा' टस्य णः ॥ यद्वा 'षषो णो वाच्यो मातरि' इति केचित् । क्वचिज्जबानामपि ञमा एष्टव्याः इति केचित् । 'ऋ उरणि' इति उर् । 'स्वरहीनं०' 'स्रोर्वि०' षाण्मातुरः । कार्तिकेय इत्यर्थः॥ एवं द्वयोर्मात्रोरपत्यमिति विग्रहे उभयत्रापि षष्ठीद्विवचनम् 'त्यदादेष्टे०' 'आबतः स्त्रियाम्' 'टौसोरे' 'ए अय्' 'स्वरहीनं०' । मातृशब्दात् षष्ठीद्विवचने 'ऋरम्' ॥ अण् । णित्वा-द्वृद्धिः । द्वि इत्यस्य द्वै । 'ऋ उरणि' इति उर् । 'स्वरहीनं०' द्वैमातुरः गणेशः । एवं भाद्रमातुरः । द्वावपि सतीसुतवाचकौ । सत्यास्तु तनयः षाण्मातुरवद्भाद्रमातुरः । इत्यादि अणन्ताः । अन्यत्राप्यण्प्रत्ययो भवति । यतः ॥

'रागान्नक्षत्रयोगाच्च समूहात्सास्यदेवता ।
तद्वेत्त्यधीते तस्येदमेवमादिरणिष्यते ॥'

रागाद्यथा कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । नक्षत्रयोगात् । पुष्येण युक्तः कालः पौषः । समूहात् नराणां समूहो नारम् । स्त्रीणां समूहः स्त्रैणम् । सास्य देवतार्थे इन्द्रो देवताऽस्येति ऐन्द्रम् । तद्वेत्तीत्यस्यार्थे व्याकरणमधीते वेद वा वैयाकरणः । तस्येदमित्यस्यार्थे देवदत्त-स्यार्थमिदं दैवदत्तम् । इत्याद्यर्थेष्वण्प्रत्ययः स्यात् । तदग्रे यथास्थाने कथयिष्यति ॥ ४ ॥

( प्र० ) ऋ उरिति । षण्णां मातृणामपत्यमिति विग्रहे अणि सङ्ख्यापूर्वकत्वात्तद्धि-तार्थविषयत्वाच्च द्विगुसमासे विभक्तिलोपे पदान्तत्वमाश्रित्य षोड इति डत्वे मृन्मयं इषन्मय-मित्यादाविव ञमे ञमा वेत्यत्र चपा अबे जबा इत्यतो जबा इत्यनुवृत्तेः । क्वचिज्जबा ञमे परे ञमा भवन्तीति जबस्य डकारस्य सवर्णत्वात् ञमे ञमो णकारः । केचित्तु नामि ऽलुप्तेपि प्रत्ययलक्षणन्यायेनैतदाश्रितौ ड इति णकारः इत्याहुः । अन्ये तु हसेर्हस इति षस्य द्वित्वे खसपरत्वेन पूर्वषस्य षोड इति डत्वे खसे चपा इति चपे टकारे संयोगान्तलोपे च निमित्ताभावन्यायस्यानित्यत्वात् ञमे ञमा वेति टस्य ण इत्याहुः ॥ ४ ॥

**अत इञनृषेः ॥** अकारान्तान्नाम्नोऽनृषिशब्दादपत्येऽर्थे इञ्प्रत्ययो भवति ॥ यस्य लोपः । देवदत्तस्यापत्यं दैवदत्तिः [ श्रीधरस्यापत्यं ] श्रैधरिः । [ दशरथस्यापत्यं ] दाशरथिः पौरन्दरिः ॥ ५ ॥

( च० ) अथ अपत्येऽर्थे प्रत्ययान्तरमाह—'अत इञनृषेः' ॥ अत इति पञ्चम्येकवच-नान्तं 'स्वरहीनं०' स्रोर्वि०' इञ् प्रथमैकवचनान्तम् । 'हसेपः०' पश्चात् 'आदबे लोपश्च' ॥ अनृषिः न ऋषिः अनृषिस्तस्मात् पञ्चम्येकवचनान्तम् । 'ङिति' इकारस्य एकारः । 'ङस्य' इत्यकारलोपः । पूर्वं 'स्रोर्वि०' 'स्वरहीनं०' त्रिपदम् । ऋषिवाचकशब्दवर्जितादकारान्ता-न्नाम्नोऽपत्येऽर्थे इञ् प्रत्ययो भवति । अणोऽपवादः । अत्र ञकारो वृद्ध्यर्थः । उदाहर-णम् । देवदत्तस्यापत्यं इञ् प्रत्ययः । ञकारो वृद्ध्यर्थः 'आदिस्वरस्य' इति वृद्धिः । दै । 'यस्य लोपः' 'स्वरहीनं०' 'स्रोर्वि०' दैवदत्तिः ॥ एवं श्रीधरस्यापत्यं श्रैधरिः । अत्र इञ् प्रत्यये श्रीइत्यस्य श्रै इति वृद्धिः ॥ तथा दशरथस्यापत्यं दाशरथिः । अत्र वृद्धिकार्यं दस्य

दा ॥ पुरंदरस्यापत्यं पौरंदरिः । अत्र उकारस्य औकारो वृद्धि । एवं रावणिः ॥ ५ ॥

( प्र० ) अत इञिति । अत इञ् इति योगविभागात् बैदिर्गार्गिरौद्दालिकिरित्यादावृषिवाचकेभ्योऽपीञ् । वा टाङ्योरित्यतो मण्डूकप्लुत्या वानुवृत्तेर्व्यवस्थया शिवादिभ्योऽनृषिवाचिभ्योऽकारान्तेभ्योऽपीञ् । शिवस्यापत्यं शैवः । श्वाफल्कः । रान्धसः । वृष्णिभ्यश्च । वासुदेवः । आनिरुद्धः । कुरुभ्योऽपि । नाकुलः । साहदेवः । वाशब्दादेव लोकाद्वा ॥ ५ ॥

**बाह्वादेश्च** ॥ बाह्वादेः पर इञ्प्रत्ययो भवत्यपत्येऽर्थे ॥ बाहोरपत्यं बाहविः । उपबिन्दोरपत्यमौपबिन्दविः । कृष्णस्यापत्यं कार्ष्णिः । उडुलोम्नोऽपत्यमौडुलोमिः । नो वा । अग्निशर्मणोऽपत्यमाग्निशर्मिः ॥ ६ ॥

( च० ) 'बाह्वादेश्च' ॥ बाह्वादेस्तु अकारान्तत्वाभावेऽपि इञ् वक्तव्यः । बाहविः औपबाहविः वार्ष्णिः आग्निशर्मिः ॥ सर्वत्र तद्धिते विकल्पानुवृत्तिरस्त्येव । तेन वासुदेवः शैवः वैदेह इत्यादौ इञ् न स्यात् ॥ 'व्यासवरुडसुधातृनिषादबिम्बचण्डालादन्तस्य चाऽकः ।' एभ्योऽपत्य इञ् तद्योगे चैषामन्तस्य अक आदेशः । वैयासकिः । वारुडकिः । सौधातकिः । नैषादकिः । बैम्बकिः । चाण्डालकिः ॥ ६ ॥

( प्र० ) बह्वादिभ्योऽपीञ् । बाहविः । औपगविः । औडुलोमिः । आग्निशर्मिः । नान्तेभ्यो नो वेति टिलोपः । एवं सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिञि अकादेशः । सौधातकिः । वैयासकिः । वारुडकिरित्यादि प्रयोगादूह्यम् ॥ ६ ॥

**ण्यायनणेयण्णीया गर्गनडात्रिस्त्रीपितृष्वस्रादेः** ॥ गर्गादेर्नडादेरत्र्यादेः स्त्रीलिङ्गात्पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्ति अपत्येऽर्थे यथासंख्येन ॥ चकारात्पितृष्वस्रादेरेयण् प्रत्ययो भवति ॥ गार्ग्यः । वात्स्यः । जामदग्न्यः । सौम्यः । नाडायनः । चारायणः । चान्द्रायणः । आमुष्यायणः । आत्रेयः । मार्कण्डेयः । कापेयः । गाङ्गेयः । माहेयः(क) पैतृष्वस्रीयः । मातृष्वस्रीयः ॥ ७ ॥

( च० ) सूत्रम्—'ण्यायनणेय०' ॥ ण्यश्च आयनण् च एयण् णीयश्च ण्यायनणेयणीयाः प्रथमाबहुवचनान्तम् 'सवर्णे०' । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च गर्गनडात्रिस्त्रीपितृष्वसारः ते आदौ यस्य स गर्गनडात्रिस्त्रीपितृष्वस्रादिः तस्मात् पञ्चम्येकवचनान्तम् 'ङिति' 'ङस्य' इत्यकारलोपः । 'स्त्रोर्वि०' ॥ द्विपदमिदं सूत्रम् । 'द्वन्द्वान्ते श्रूयमाणम् पदं प्रत्येकं संबध्यते' इत्यादिशब्दस्य प्रत्येकं योगः । तेनापत्येऽर्थे गर्गादेर्ण्यः नडादेरायनण् । अत्र्यादेः स्त्रीलिङ्गाच्च एयण् । पितृष्वस्रादेः णीयः । सर्वत्र णकारो वृद्ध्य-

---

(क) मातृपितृभ्यां स्वसा । मातृपितृभ्यां शब्दाभ्यां परस्य स्वसृशब्दस्य सकारस्य षकारः स्यात् समासे सति । पितुः स्वसा पितृष्वसा । मातुः स्वसा मतृष्वसा ॥—इति विशेषः ॥ मातृपितृभ्यां पितरि डामहच् । आभ्यां परो डामहच् प्रत्ययो भवति ॥ मातुः पिता मातामहः । पितुः पिता पितामहः ॥—इति विशेषः ।

र्थः । ण्यणीययोर्वृद्ध्यर्थमादौ प्रयुक्तो णकारोऽणन्तत्वनिरासपूर्वकः । अणन्तत्वभावाद्धीप्-निषेधः । गर्ग वत्स । गर्गस्यापत्यमिति विग्रहे च ण्यण् णित्वाद्वृद्धिः गार्ग वात्स 'यस्य लोपः' उभयत्रापि 'स्वरहीनं०' गार्ग्यः वात्स्यः । स्त्रीप्रत्यये चेत् गार्ग्या वात्स्या पाणिनीया-नां तु गार्गी वात्सी इत्येवमेव भवति । नडस्यापत्यं नाडायनः । आयनण् प्रत्ययः । णित्वाद्वृद्धिः 'यस्य लोपः' 'स्वरहीनं०' 'स्त्रोर्वि०' एवं चरस्यापत्यं चारायणः । स्त्रियां नाडायना । चरस्यापत्यं चारायणी । अदस्शब्दात् षष्ठ्येकवचने । 'त्यदादेष्टे०' 'दस्य मः' 'ङस्स्य' 'मादू' अमु । 'क्विलात्पः सः०' अमुष्यापत्यमिति विग्रहे आयनण्प्रत्ययः । णित्वाद्वृद्धिः । अद । 'अलुक् क्वचित्' इति षष्ठ्या विभक्तेर्न लोपः । 'यस्य लोपः' 'स्वर-हीनं०' 'स्त्रोर्वि' आमुष्यायणः । अस्यार्थः—'स्यादामुष्यायणो मुख्यपुत्रो प्रख्यातपुत्रकः' इति ॥ अत्रेरपत्यमात्रेयः । एयण्प्रत्ययः । आदिवृद्धिः 'यस्य०' 'स्वर०' प्रथमैकवचने 'स्रो०' ॥ एवं कपेरपत्यं कापेयः । अणन्तत्वादीप् । आत्रेयी कापेयी । गङ्गाया अपत्यं गाङ्गेयः । मह्या अपत्यं माहेयः । एवं वैनतेयः । सैंहिकेयः । काद्रवेयः ॥ पितुः स्वसा पितृष्वसा । मातुः स्वसा मातृष्वसा । 'मातृपितृभ्यां स्वसुः सकारस्य षत्वं वक्तव्यम्' पितृष्वसृशब्दात् षष्ठ्येकचने । 'ऋतो ङ उः' डित्वाट्टिलोपः । अग्रे अपत्यशब्दात् प्रथमैकवचने । 'अतोऽम्' पितृष्वसुरपत्यं पैतृष्वस्रीयः । एवं मातृष्वसुरपत्यं मातृष्वस्रीयः उभयत्रापि णीयः । पितृशब्दे इकारस्य ऐकारो वृद्धिः । मातृशब्दे न वृद्धिः वृद्धेरेव सद्भा-वात् । । एवं स्वसुरपत्यं स्वस्रीयः । अत्र 'णितो वा' इति विकल्पान्न वृद्धिः ॥ ७ ॥

( प्र० ) एयायनणिति । ण्यश्च आयनण् च एयण् णीयश्च ते तथा गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च ता आदौ यस्य स तथा द्वन्द्वान्तत्वादादिशब्दस्य प्रत्येकं संबन्ध इत्यभिप्रेत्याह । गर्गादेरित्यादि । गर्गादेर्गणाण्ण्यः । नडादेर्गणादायनण् । अत्र्यादेर्गणात्स्त्रीलिङ्गाच्च एयण् । पितृष्वस्रादेर्गणाण्णीयः । एयण् च । वाशब्दानुवृत्तेरस्य डित्वाट्टिलोपो वा पैतृष्वसेयः मातृष्वसेय इति विवेकः । स्त्रीलिङ्गादिति स्त्रीप्रत्ययान्तो-पलक्षणम् । अत एव भूमेरपत्यं भौम इत्यादावप्रसङ्गः ॥ ७ ॥

**लुग्बहुत्वे क्वचित्** ॥ अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे सति क्वचिदनृषिविषये ऋषिविषये च लुग्भवति ॥ गर्गाः । अत्रयः । विदेहाः (क) ॥ ८ ॥

( च० ) अथ स्यादौ विषये तद्धितप्रत्ययान्तानां साधनविधिमाह—'लुग्बहुत्वे क्वचित्' ॥ लुक् प्रथमैकवचनम् 'हसेपः०' बहुत्वे सप्तम्येकवचनान्तम् । क्वचित् प्रथमैकवच 'नान्तम् अव्यया०' ॥ त्रिपदम् । अपत्येऽर्थे उत्पन्नस्य अणादेः प्रत्ययस्य बहुवचने सति क्वचिदिति ऋषिवाचकशब्दविषये अनृषिवाचके विषये वा लुग्भवति न स्त्रियाम् । तत्र ण्यप्रत्ययस्य यथा गार्ग्यः गार्ग्यौ । ब वचने गार्ग्य अस् इति स्थिते । 'लुग्बहुत्वे०' इति ण्यप्रत्ययस्य लुक् 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति वृद्धेरभावः । गर्ग अस् इ ति

(क) भृग्वत्रिकुत्साङ्गिरोवसिष्ठगोतमदेशतुल्याख्यक्षत्रियेभ्यः परस्य प्रत्ययस्य लुग्भवति । भृगवः । कुत्साः । वसिष्ठाः ।—इति विशेषः ॥

स्थिते। 'सवर्णे०' 'सोर्वि०' गर्गाः। अमेऽपि गार्ग्यं गार्ग्यौ गर्गान्। गार्ग्येण गार्ग्याभ्यां गर्गैः। एवं सर्वत्र बहुवचने ण्यप्रत्ययस्य लुक्। एवं वासिष्ठः। वासिष्ठौ। बहुवचने वसिष्ठशब्दात् प्रथमाबहुवचनम्। अत्र अणो लोपः निमित्ताभावे' इति वृद्धेरप्यभावः। वसिष्ठ अस्। 'सवर्णे०' सोर्वि०' वसिष्ठाः॥ आत्रेयशब्दात् प्रथमाबहुवचनम्। एयण् लोपः अत्रि अस् 'ए ओ जसि' 'ए अय्' स्वरहीनं०' सोर्वि०' आत्रेयः आत्रेयौ अत्रयः। आत्रेयं आत्रेयौ अत्रीन्। इत्यादिरूपाणि॥ वैदेहशब्दात् प्रथमाबहुवचने अणो लोपः वृद्धेरप्यभावः विदेह अस्। 'सवर्णे०' 'सोर्वि०' विदेहाः॥ एवं रघवः"॥ ८॥

(प्र०) लुग्बहुत्वे क्वचिदिति। गर्गयस्कविदादिभृग्वत्रिकुत्साङ्गिरोवसिष्ठगौतमदेशतुल्यक्षत्रियेभ्यः परस्य प्रत्ययस्य बहुत्वविषये लुग्भवतीत्यर्थः॥ ८॥

**देवतेदमर्थे ॥** देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति॥ इन्द्रो देवता यस्येत्यैन्द्रं हविः। सौम्यम्॥ देवदत्तार्थमिदं दैवदत्तं वस्त्रम्॥९॥

(च०) सूत्रम्—'देवतेदमर्थे'॥ देवता च इदं च देवतेदमौ तयोरर्थं देवतेदमर्थे सप्तम्येकवचनान्तम्। 'अ इ ए'॥ एकपदमिदं सूत्रम्। देवता स्वामित्वेनाधिष्ठायकः तस्यार्थे इदमर्थेति अस्येदं वस्तु अस्मिन्नर्थेऽप्युक्ता अणादयः प्रत्यया भवन्ति। इन्द्र। इन्द्रो देवता अस्येति वाक्ये अत्र देवतार्थे अण् णित्वाद्वृद्धिः। ऐन्द्र 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने 'अतोऽम्' 'अम्शसो०' ऐन्द्रं हविः। इन्द्रार्थे कल्पितं घृतमित्यर्थः॥ सोम। सोमो देवता अस्येति वाक्ये अत्र देवतार्थे ण्यप्रत्ययः। आदिस्वरस्य०' इति वृद्धिः। सौ 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत् सौम्यम्॥ देवदत्तार्थमिदम् अत्रेदमर्थे अण् वृद्धिः दै 'यस्य लोपः स्वरहीनं०' प्रथमैकवचने कुलशब्दवत्। दैवदत्तम्॥ एवमाग्नेयं वायव्यं पित्र्यम् उषस्यमिति देवतार्थे। अथेदमर्थे नद्या अयं नादेयः। इत्यादि॥ 'देवतेदमः' इत्युक्तेऽपि सिद्धावर्थग्रहणात् अन्यत्राप्यर्थे। उदुम्बराणि सन्त्यस्मिन्देशे औदुम्बरो देशः। एवं बादर इत्यादि ज्ञेयम्॥ ९॥

(प्र०) देवते इति। देवता च इदं च देवतेदमौ देवतेदमोरर्थः देवतेदमर्थस्तस्मिन् उक्ता अणादयो यथायोग्या भवन्तीत्यर्थः॥ ९॥

**क्वचिद्द्वयोः ॥** क्वचित्पूर्वोत्तरपदादेरचो वृद्धिर्भवति ञिति णिति च तद्धिते परे॥ अग्निमरुतौ देवते यस्य तदाग्निमारुतं कर्म। सौहार्दम्। अत्र भावेऽण् वक्तव्यः॥ १०॥

(च०) अथ वृद्धिविशेषमाह—'क्वचिद्द्वयोः'॥ क्वचित् प्रथमैकवचनान्तम् 'अव्यया०' द्वयोरिति द्विशब्दस्य षष्ठीद्विवचनान्तम् 'त्यदादेष्टि०' 'ओसि' 'ए अय्' 'स्वरही०' 'सोर्वि' पूर्वं 'चपा अबे०'॥ क्वचिदिति प्रयोगान्तरे पूर्वपदादेः स्वरस्य उत्तरपदादेः स्वरस्य च द्वयोरपि वृद्धिर्भवति। अग्निमरुत्। अग्निश्च मरुच्च अग्निमरुतौ तयोरिदम्। इदमर्थे अण्। यद्वा 'कर्मण्यप्यण् वक्तव्यः' 'क्वचिद्द्वयोः' इति अग्निमरुतोरुभयोरप्याद्यस्वरस्य वृद्धिः। 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत्। आग्निमारुतमेतत्कर्म। सुहृद् शोभनं हृत् हृदयं यस्य स सुहृत्। सुहृदो भावः। अत्र भावेऽण् वक्तव्यः। पश्चात् 'क्वचिद्द्वयोः' इति

सुहृत् इत्यत्र उकारऋकारयोर्द्वयोरपि वृद्धिः । सौहार्द् । 'शषपो०' जलतुम्बि० । 'स्वर-हीनं०' कुलशब्दवत् सौहार्दम् । अत्र भावेऽण् वक्तव्यः इति वक्तव्यबलादनुक्तेऽपि अण् ॥ एवं सुभगस्य भावः सौभाग्यम् ॥ एवं परस्त्रियः अपत्यं पारस्त्रैणेयः ॥ १० ॥

( प्र० ) क्वचिदिति । आदिस्वरस्येत्यत्र पदापेक्षया आदित्वेऽविशेषाद्द्वयोः पूर्व-पदादेः उत्तरपदादेश्च वृद्धिर्भवतीत्यर्थः । अग्निमरुतौ देवते अस्य तत् आग्निमारुतम् । कर्मेति विशेष्यपदम् । सुहृदो भावः सुभगस्य भाव इति विग्रहे भावार्थे प्रत्ययानभिधानादत्र भावे अण् वक्तव्य इति वक्तव्यत्वात्स्वार्थेऽपीत्यपिशब्दादनुक्तसमुच्चयार्थाद्वा विकाराभावसमूहा-दावणि सिद्धेरत्रापि तेनैव वक्तव्यो व्याख्येयः । सौभाग्यमित्यत्र भावे तत्वयण् इति यण् । यदि तु भावे यण् वक्तव्य इति पाठस्तदा भावे तत्वयण् इत्येव यण्सिद्धेः तेनैव वक्तव्यो व्याख्येयः ॥ १० ॥

**णितो वा ॥** उक्ता वक्ष्यमाणाश्च प्रत्यया विषयान्तरे णितो वा भव-न्ति ॥ अजो गौर्यस्यासावजगुः शिवः । तस्येदं धनुराजगवं अजगवं वा । कुमुदस्येव गन्धो यस्याः सा कुमुदगन्धिः । तस्यापत्यं स्त्री कौमुदगन्ध्या । श्वशुरस्यायं श्वाशुर्यो ग्रामः । विष्णोरिदं वैष्णवम् । गोरिदं गव्यम् । कुले भवं कुल्यम् । तवेदं त्वदीयम् । ममेदं मदीयम् ॥ ११ ॥

(च०) अथ प्रयोगानुसारेण वृद्धेरभावमाह—सूत्रम्—'णितो वा' ॥ णितः प्रथमा-बहुवचनान्तम् 'स्वरहीनं०' 'सोर्विः०' । वा प्रथमैकवचनान्तम् 'अव्यया०' 'हवे' 'उभो' ॥ उक्ता अणादयः प्रत्ययाः विषयान्तरे कार्यान्तरे अर्थान्तरे णितो णकारानुबन्धा णिसंज्ञका वा भवन्ति । अत्र वाशब्दो व्यवस्थावाचकः बहुलार्थकः । तेनैतेषु परेष्वादिस्वरस्य क्वचि-द्वृद्धिः । क्वचिद्वृद्धेरभावोऽपीत्यर्थः । क्वचिद्विकल्पः ॥ उदाहरणम्—अजगु अजो गौ-र्वृषभो यस्य सः अजगुः शिवः । 'गो' इति गोशब्दस्य ह्रस्वः । अजगु द्विस्थाने अजगो-रिदं धनुः । अत्र इदमर्थेऽण् उभयत्र । एकत्र वृद्धिः आ । अन्यत्र न वृद्धिः । 'वोऽव्य-स्वरे' अव् । 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत् । आजगवमजगवं वा धनुः । अत्र वा वृद्धिः ॥ कुमुदगन्ध । कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः । 'वैयधिकर-ण्ये बहुव्रीहौ मध्यमपदलोपः' 'गन्धादेरिः' 'यस्य लोपः' 'स्वरहीनं०' कुमुदगन्धिस्तस्या-पत्यमिति वाक्ये 'ण्यायनणेयणीयाः०' इत्यपत्येऽर्थे ण्यः । अत्राद्यस्य उकारस्य वृद्धिः । कौ । 'यस्य लोपः' 'स्वरहीनं०' स्त्रीत्वात् । 'आवतः स्त्रियाम्' इत्याप् । अत्र नित्यं वृद्धिः । कौमुदगन्ध्या ॥ एवं श्वशुरस्यायमिति वाक्ये इदमर्थे ण्यप्रत्ययः । वृद्धिः । 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचने श्वाशुर्यो ग्रामः ॥ विष्णु । विष्णोरिदमिति वाक्ये अण्-प्रत्ययः । वृद्धिः वै । 'वोऽव्यस्वरे' 'स्वरहीनं०' प्रथमैकवचने कुलशब्दवत् । केचित् वि-ष्णोः स्वरूपं वैष्णवमिति पठन्ति । इदमर्थस्य पूर्वं प्रणीतत्वात् । विष्णोरिदमिति न पठन्ति ॥ एवं गोरिदं घृतादि गव्यम् । इदमर्थे ण्यप्रत्ययः । 'वोऽव्यस्वरे' 'स्वरहीनं०' गव्यम् ॥ कुले भवं कुल्यम् । 'कारकात्०' इति ण्यप्रत्ययः । अत्र प्रयोगद्वये वृद्धेरभावः

'यस्य लोपः' युष्मद् अस्मद् । ममेदमिति विग्रहे इदमर्थे णीयः । 'त्वन्मदेकत्वे' त्वत् मत् । क्वचिदपदान्तेऽपि पदान्तताश्रयणात् 'यपा अवे जवाः' 'स्वरहीनं' तवेदं त्वदीयम् ममेदं मदीयम् । अत्रापि न वृद्धिः । एवं तस्येदं तदीयम् । अस्येदं यदीयम् । एतस्येदमेतदीयम् । अत्र णीयप्रत्ययो न णित् ॥ ११ ॥

( प्र० ) णित इति प्राक् उक्ता अणादयः प्रत्यया विषयान्तरे मुख्यविषयादपत्यादिरूपादन्यस्मिन् विषये इदमर्थादौ णितो णित्कार्यकृतो वा भवन्तीत्यर्थः । अयं च णित्वातिदेशो णितोऽणितोऽपि व्यवस्थितः । विकल्पेन णित्वतदभावार्थः । अजगुशब्दादिदमर्थेऽणि णित्वविकल्पाद्वृद्धिविकल्पः । " धनुर्वदन्त्याजगवं पिनाकिकरगोचरम् । " इति कात्यायनमते नित्यम् । अमरसिंहमते तु " पिनाकोऽजगवं धनुः " इत्युक्तेर्नेति विकल्पः । विषयान्तर इत्यस्य प्रत्युदाहरणम् । कौमुदगन्ध्येति तत्र वैयधिकरण्ये बहुव्रीहौ मध्यमपदलोपश्चेति बहुव्रीहौ मध्यमपदलोपे च वकाराद्गन्धशब्दस्येकारान्तादेशे कुमुदगन्धिशब्दादपत्यार्थे गर्गादित्वात् ण्यप्रत्यये विषयान्तरत्वभावाण्णित्वविकल्पाभावः । स्त्रीत्वादाप् । क्वचित् कुमुदगन्ध्येति । णित्वाभावोदाहरणमप्यस्ति । तच्चिन्त्यम् । विषयान्तरत्वाभावात् । इवाशुर्यः वैष्णवमित्यत्र नित्यं णित्वम् । गव्यमित्यादौ च न ॥ ११ ॥

**चतुरश्चलोपो ण्यणीययोः** ॥ चतुर्शब्दस्य चकारस्य लोपो भवति ण्यणीययोः प्रत्यययोः परतः । तुर्यः तुरीयः ॥१२॥ **अन्यस्य दक्** ॥ अन्यशब्दस्य दगागमो भवति णीयप्रत्यये परे ॥ अन्यदीयम् । अर्धजरतीयम् (क) ॥ १३ ॥

(च०) 'चतुरश्चलोपो ॥ चतुर्शब्द बन्धिनश्चकारस्य लोपो भवति ण्यणीयप्रत्यययोः परयोः इत्यनेनोभयत्रापि चलोपः । चतुर्णां संख्यापूरणः अयं तुर्यः तुरीयः । अत्र पूरणार्थस्येदमर्थान्तःपातित्वात् इदमर्थे ण्यणीयप्रत्ययौ । अत्रापि न णित्वम् ॥ 'अन्यस्य दक्' अन्यशब्दस्य णीयप्रत्यये परे दगागमो भवति । ककारः स्थाननियमार्थः । अकार उच्चारणार्थः । अन्य । अन्यस्येदमिति विग्रहे इदमर्थे णीयप्रत्ययः । ईय दगागमः । 'स्वरहीनं० अन्यदीयम् ॥ अन्यत्रापि दगागममिच्छन्ति । अन्यदर्थः । अन्यद्भागः । अन्यदाशीः । अन्यदुत्सुकम् । अन्यद्रतिः । अन्यदास्था । इत्यादि ॥ अर्धजरती । अर्धजरत्या अर्धवृद्धायाः स्त्रिया इदं वस्त्रादि अर्धजरतीयम् । इदमर्थे णीयप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' कुलवत् । गव्यमित्यारभ्योक्तप्रयोगेषु न वृद्धिः ॥ १२-१३ ॥

( प्र० ) चतुरश्चलोप इति । चतुःशब्दस्य यश्चकारस्तस्येत्यर्थः । ण्यणीययोः परतो लोपो वक्तव्य इत्यर्थः । चतुर्णां सङ्ख्यापूरण इति विग्रहे स्वार्थेऽपीत्यपिशब्दात्पूरणार्थे ण्यणीयौ तयोश्च णित्वाभावादादिवृद्ध्यभावः । अन्यस्य दगिति । अन्यशब्दाण्णीये दगागमो वक्तव्यः । स्त्रीत्वादन्ते । अन्यस्येदमिति विग्रहः ॥ १२-१३ ॥

**कारकात्क्रियायुक्ते** ॥ कारकादप्येते अणादयः प्रत्यया भवन्ति

---

( क ) स्वपरयोः कक् । स्वकीयम् परकीयम् । —इति मूलपुस्तके विशेषः ॥

क्रियायुक्ते कर्तरि कर्मणि चाभिधेये ॥ कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । मथुराया आगतो जातो वा माथुरः । ग्रामे भवो ग्राम्यः ग्रामीणः । धुरं वहतीति धुर्यः धौरेयः ॥ १४ ॥

(च०) सूत्रम्—'कारकात्क्रियायुक्ते' ॥ कारकादिति कारकशब्दस्य पञ्चम्येकवचनान्तम् 'ङसिरत्' 'सवर्णे०' । क्रियायुक्ते क्रियया युक्तं क्रियायुक्तं तस्मिन् सप्तम्येकवचनान्तम् । द्विपदम् । कारकात् कर्तृकर्मकरणप्रदानाधारलक्षणान्तादपि एते अणादयः प्रत्यया भवन्ति । क्रियासहिते कर्तरि कर्मणि च वाक्ये सति । षट् कारकाणि सन्ति । ततः 'कारकेभ्यः' इति वक्तव्ये कारकादित्येकवचनं जात्यभिप्रायेण । कुङ्कुमशब्दात् तृतीयैकवचने 'टेन' 'अ इ ए' । कुङ्कुमेन रक्तं वस्त्रमिति विग्रहे । अत्र कुङ्कुमेनेत्यत्र करणंकारकम् । तथा रञ्जनरूपक्रियासहितं वस्त्रं कर्म । तच्चात्राभिधेयम् । अतोऽण् । 'समासप्रत्यययोः' इति तृतीयालोपः । 'उक्तार्थानामप्रयोगः' णित्वाद्वृद्धिः । 'यस्य लोपः' ॥ एवं कुसुम्भेन रक्तं वस्त्रं कौसुम्भम् । माञ्जिष्ठम् ॥ मथुराशब्दात् पञ्चम्येकवचने । 'ङितां यट्' 'सवर्णे' 'मथुराया आगत' इति वाक्ये । अत्र अपादानं कारकम् । 'विश्लेषावधौ' इति पञ्चमी । आगमनक्रियायुक्तो नरः कर्ताभिधेयस्ततोऽण् प्रत्ययः । 'आदिस्वरस्य०' 'यस्य लोपः' 'स्वरहीनं०' माथुरः ॥ एवं ग्रामे भवो ग्राम्यः । अत्र भवनक्रियायुक्ते कर्तरि अभिधेये ग्रामे इत्यधिकरणकारकात् व्यप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' 'सोर्वि०' ॥ धुर्शब्दात् द्विस्थाने धुरं वहतीति धुर्यः धौरेयो वा । एकत्र व्यप्रत्ययः । तत्र वाग्रहणाच्च वृद्धिः । अन्यत्र एयण् तत्र वृद्धिः धौ 'स्वर०' । 'य्वोर्विहसे' इति सूत्रे 'तद्धितयकारे न' इति वक्तव्यम् । तेन धुर्यः इत्यत्र दीर्घत्वाभावः । प्रक्रियामते तु 'न भकुर्छुराम्' इति दीर्घत्वनिषेधः । धौरेयः । अत्र वहनक्रियाश्रये कर्तरि अभिधेये धुरमिति कर्मकारकात् व्यण्प्रत्यय एयण्प्रत्ययौ ॥ एवमात्मने हितः आत्मनीनः विश्वजनाय हितः विश्वजनीनः । अत्र संप्रदानकारकात् वक्ष्यमाण ईनः प्रत्ययः ॥ १४ ॥

( प्र० ) कारकादिति । क्रिया धात्वर्थस्तद्युक्तस्तदाश्रयः । स च क्वचित्कर्ता । क्वचिच्च कर्म । यथा देवदत्तो ग्रामं गच्छतीत्यत्र गमनक्रियाश्रयो देवदत्त ओदनं पचतीत्यादौ च विक्लित्तिरूपायाः पचनक्रियाया आश्रयः कर्मभूतौदन इत्यभिप्रेत्य कर्तरि कर्मणि चाभिधेये इत्युक्तम् । यत्क्रियायुक्ते कर्तृकर्मणी तत्क्रियाकारकादणादयो भवन्ति । तद्धितान्तस्य चैते एव वाच्ये भवेतामित्यर्थः । कौङ्कुममित्यत्र रञ्जनक्रियायाः करणकारणात् कुङ्कुमाद्रञ्जनक्रियायुक्ते वस्त्रेऽभिधेयेऽण् । धुरमिति कर्मकारकाद्वहनक्रियायुक्ते कर्तर्यनद्वुहि वाच्ये व्य एयण् । णतो वेति व्यवस्थितो णित्वाभावादादिवृद्ध्यभावः । एयणश्च णित्वाद्वृद्धिः णितो वेत्यनन्तरसूत्रतो वानुवृत्तेर्व्यवस्थयाऽर्थविशेष एव न भिन्नः शरेण रामेणेत्यादौ ॥ १४ ॥

**केनेयकाः** ॥ क ईन इय इक एते प्रत्यया भवन्ति भवाद्यर्थेषु ॥ णित्वं चैषां वैकल्पिकम् । कर्णाटे भवः कार्णाटकः–कर्णाटकः ॥ ग्रामादा-

गतस्तत्र जातो वा ग्राम्यः—ग्रामीणः ॥ सध्रीचि भवो वा सध्रीचा युक्तः सध्रीचीनः । समीचि भवो वा समीचा युक्तः समीचीनः । तिरश्चि भवो वा तिरश्चा युक्तस्तिरश्चीनः । उदीचि भवो वा उदीचा युक्त उदीचीनः ॥ १५ ॥

(च०) सूत्रम्—'केनेयेकाः' ॥ कश्च ईनश्च इयश्च इकश्च केनेयेकाः प्रथमाबहुवचनान्तम् । 'स्वर्णे०' एकपदम् । नाम्नो भवाद्यर्थेषु इदमर्थे च वाच्ये सति क ईन इय इक एते चत्वारः प्रत्यया भवन्ति । णित्वं चैषामिति । एषां कादीनां प्रत्ययानामणित्त्वेऽपि वैकल्पिकं णित्वं व्यवस्थितं विकल्पेन णित्वं भवति 'णितो वा' इत्युक्तत्वात् । तेन क्वचित्प्रयोगे विकल्पेन वृद्धिः । क्वचिन्नित्यं वृद्धिः । क्वचित्सर्वथापि वृद्धिर्न भवतीति भावार्थः ॥ कर्णाट—कर्णाटदेशे भवः कार्णाटकः कर्णाटको वा । उभयत्रापि कप्रत्ययः । एकत्र वृद्धिः । अन्यत्र न । प्रथमैकवचने 'सोर्वि०' अत्र भवार्थे कप्रत्ययः । ग्राम—ग्रामादागतस्तत्र जातो वा ग्रामीणः । आदिशब्दादत्र आगतार्थे ईनप्रत्ययः । 'यस्य लोपः' 'ऋतो०' 'प्रथमैकवचने ॥ सध्र्यच् सध्र्यङ् एव सध्रीचीनः । अथवा सध्रीचि भवः सध्रीचीनः अत्र स्वार्थे ईनप्रत्ययः । वर्णविश्लेषे सध्रि अच् 'अच्चेर्दीर्घश्च' इत्यलोपः इकारस्य च ई दीर्घः । 'स्वरहीनं०' प्रथमैकवचनम् ॥ एवं सम्यङ् एव । यद्वा समीचि भव समीचीनः । सम्यच् शब्दात् ईनप्रत्ययः । 'अच्चेर्दीर्घश्च' समीच् । 'स्वरहीनं' प्रयोगद्वयेऽपि वैकल्पिकत्वान्न वृद्धिः एवं तिरश्चि भवः तिरश्चीनः तिर्यच् ईनप्रत्यय' । 'तिरश्चादयः' इति तिरश्च् आदेशः । 'स्वरहीनं०' प्रथमैकवचने 'सोर्वि०' ॥ १९ ॥

( प्र० ) केनेति । कश्च ईनश्च इय इकश्च ते तथा । णित्वं चैषां वैकल्पिकमिति । णितो वेत्यस्यात्रानुवृत्तेरिति भावः । सध्र्यङ्ङेव सध्रीचीनः सम्यगेव समीचीनः । स्वार्थे ईनप्रत्यये । तद्धिते परे अच्चेर्दीर्घश्चेत्यकारलोपपूर्वेकारदीर्घौ । तिरश्चीन इत्यत्र तिरश्चादय इति तिरश्चनिपातः ॥ १९ ॥

**यलोपश्च** ॥ नाम्नामुपधाभूतस्य यकारस्य लोपो भवति तद्धिते परे । यस्य लोपः । कानीनः । पौषी । क्षत्रे भवः क्षात्रियः । शुक्रियम् इन्द्रियम् ॥ अक्षैर्दीव्यतीत्याक्षिकः । तर्के चतुरः तार्किकः । शब्दे कुशलः शाब्दिकः । वैदिकी ॥ १६ ॥

( च० ) 'यलोपश्च' ॥ तद्धितप्रत्यये परे नाम्नामुपधाभूतस्य यकारस्य लोपो भवति । कन्याशब्दात् सप्तम्येकवचने । कन्यायां भवः कानीनः ईनप्रत्ययः । कल्पितणित्वाद्वृद्धिः 'यस्य लोपः' 'यलोपश्च' अनेन यकारलोपः । कानीनः प्रथमैकवचनम् ॥ ननु कन्यायाः कथमपत्यं संभवति । नैवं,देवतामुनिमाहात्म्यात् कन्याया अपत्यं घटते । कानीनो द्वैपायनमुनिः ॥ एवं पुष्यः । पुष्येण युक्ता रात्रिः पौर्णमासी वा पौषी । अत्र 'कारकाद्०' इति अण् वृद्धिः । पौ 'यलोपश्च' इति यकारलोपः । 'यस्य लोपः' 'स्वरहीनं०' 'अण ईप्' पुनः 'यस्य लोपः' 'स्वरहीनं०' 'हसेपः०' पौषी । यकारलोपप्रसङ्गादिहेदमुदाहरणम् ॥ अन्य-

त्रापि यलोपमाह—

'मत्स्यस्य यस्य स्त्रीकारे ईये वाऽगस्त्यसूर्ययोः ।
तिष्यपुष्ययोर्नक्षत्रे अणि यस्य विभञ्जनः ॥,

विभञ्जनो लोपो नाम ॥ मत्सी ॥ अगस्तस्यापत्यमागस्त्यः । तस्यायमागस्तीयः । आगस्त्यस्येयं दिक् आगस्ती ॥ सूर्यस्यापत्यं सौर्यः । तत्र सौरीयः सौर्यस्येयं दिक् सौरी ॥ तिष्येण युक्तः कालः तैषः । पुष्येण युक्तः कालः पौषः इत्यादि ॥ क्षतात्प्रहारात् त्रायते इति क्षत्त्रम् । क्षत्त्राद्भवं क्षत्त्रियं क्षत्त्रस्यापत्यं वा क्षत्त्रियः । अत्र इय् 'यस्य लोपः' 'स्वरहीं०' 'अतोऽम्' ॥ पक्षे अण् । क्षात्त्रः ॥ एवं शुक्राद्भवं शुक्रियं । शुक्रो देवताऽस्येति शुक्रियम् । तथा इन्द्राद्भवमिन्द्रियं । यद्वा इन्द्रस्यात्मनः प्रत्यक्षज्ञानकरणमिन्द्रियम् । क्षत्त्रियं शुक्रियमिति प्रयोगत्रयेऽपि विकल्पत्वात्सर्वथाऽपि न वृद्धिः ॥ तथैव अक्षैः पाशकैर्दीव्यति आक्षिकः । अत्र 'कारकात्०' इति क्रीडनार्थे इकप्रत्ययः । भवादित्वाद्वा णित्वम् । वृद्धिश्च यलोपः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' । शब्दमधीते शाब्दिकः । वेदे भवा वैदिकी स्तुतिः । इकप्रत्यये णित्वाश्रयणादणन्तत्वे 'नूण ईप्' 'यस्य लोपः' । प्रथमैकवचने 'स्रोर्वि०' ॥ एवं शास्त्रेण जयतीति शास्त्रिकः । धनुषा जयतीति धानुष्कः । भवता प्रोक्तं भवत इदं वा भावत्कम् ॥ १६ ॥

( प्र० ) यलोपश्चेति । क्वचित्तद्धिते परे यकारस्य लोपो वक्तव्य इत्यर्थः । कन्यायां भव इति विग्रहे ईनः । यस्य लोप इत्यकारलोपः । आदिवृद्धिः । पुष्ये भवः पौषीणः । इयो वेति क्षत्त्रशब्दाज्जातावेवेयः । क्षत्त्रं जातिः । क्षत्त्रियः । क्षात्त्रोऽन्यः । अक्षैर्दीव्यति शब्दान् करोति तर्कमधीते वेद वेत्यादि विग्रहाः । वैदिकीत्यत्र तदादित्वादीप् ॥ १६ ॥

**त्यतनौ** ॥ त्यश्च तनश्च त्यतनौ । किमादेरद्यादेर्भवाद्यर्थे त्यतनौ प्रत्ययौ भवतः । कुत्रत्यः । कुतस्त्यः । तत्रत्यः । ततस्त्यः । अत्रत्यः । अतस्त्यः । अद्यतनः । ह्यस्तनः । श्वस्तनः । सदातनः (क) ॥ १७ ॥

( च० ) सूत्रम्—'त्यतनौ' ॥ त्यश्च तनश्च त्यतनौ प्रथमाद्विवचनान्तम् । 'ओ औ औ' एकपदम् । किमादेरद्यादेश्चेति । किमादेर्भवाद्यर्थे त्यप्रत्ययो भवति । तथैव अद्यादेस्तनः अद्याद्यव्ययसाहचर्यात् किमोऽव्ययं गृह्यते । भवाद्यर्थे इत्यत्रादिशब्दात् आगतसहशा गृह्यन्ते । कुत्र भवः कुत्रत्यः । अत्र किमोऽव्ययाद्भवाद्यर्थे त्यप्रत्ययः एवं तत्र भव इति तदोऽव्ययात् । अत्र भवोऽत्रत्यः इत्यत्र इदमोऽव्ययम् । तथा कुतो भवः कुत आगतो वा कुतस्त्यः । अमा सह भवः अमात्यः । इह भव इहत्यः इत्यादिशब्दाज्ज्ञेयम् ॥ अद्यभवोऽद्यतनः । अत्र अद्यादेर्भवाद्यर्थे तनप्रत्ययः । ह्यो गतदिने गतकल्पे भवो ह्यस्तनः श्व आगामिदिने भवतीति श्वस्तनः । सदाभवः सदातनः । सना निरन्तरं भवतीति सनातनः ।

---

( क ) पुराभवः पुरातनः । चिरं भवश्चिरंतनः । सायं भवः सायंतनः । प्राह्णे भवः प्राह्णेतनः । चिरादिभ्यस्त्नः चिरपरुत्परारिभ्यस्त्नो भवाद्यर्थे । चिरं भवश्चिरत्नः । परु भवः परुत्नः । परारि भवः परारित्नः ॥ इति विशेषः ॥

एवं दोषातनं सायंतनं चिरंतनं पुरातनं प्रगेतनं प्राक्तनम् इत्यादि ॥ 'दक्षिणापश्चात्पुरसस्त्यण् वक्तव्यः, । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥ १७ ॥

( प्र० ) किमादेस्त्यतनाविति । किमादेरिति किमूशब्द आदिः आद्यवयवो यस्य तत्प्रकारकाद्गणात् त्यः । स च अमाइहक्वतसिकुत्रेभ्यः । अमात्यः । इहत्यः । क्वत्यः । कुतस्त्यः । कुत्रत्यः इत्यादि । एवमैषमस्ह्यस्त्वतसस्त्यः । ऐषमस्त्यः । ह्यस्त्यः । तथा परुत्परारिचिरात् त्नः । परुत्नम् । परारित्नम् । दक्षिणापश्चात्पुरसस्त्यण् । तस्य च णितो वेति णित्त्वम् । दक्षिणस्यां भावी दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः इत्याद्यूह्यम् ॥ १७ ॥

**स्वार्थेऽपि ॥ उक्ताः प्रत्ययाः स्वार्थेऽपि भवन्ति ॥ देवदत्त एव देवदत्तकः । चत्वारो वर्णा एव चातुर्वर्ण्यम् । चोर एव चौरः(क) ॥ १८ ॥**

( च० ) सूत्रम्—'स्वार्थेऽपि' ॥ स्वस्यार्थः स्वार्थः तस्मिन् सप्तम्येकवचनम् । 'अ इ ए' अपि प्रथमैकवचनम् । 'अव्यया०' ॥ पूर्वोक्ता अणादयः केनेयेकाश्चत्वारः प्रत्ययाः स्वार्थेऽपत्यार्थवर्जितेऽपि मूलार्थे भवन्ति । देवदत्त एव देवदत्तकः अत्र स्वार्थे कः ॥ चतुर्वर्ण चत्वार एव वर्णा इति वर्णाण्ण्यप्रत्ययः जलतुम्बि० 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचनम् कुलशब्दवत् । चातुर्वर्ण्यम् ॥ चोर एव चौरः स्वार्थेऽण् । 'यस्य लोपः' वृद्धिः ॥ एवं द्वितीय एव द्वैतीयकः । तृतीय एव तार्तीयकः । त्रयोः लोका एव त्रैलोक्यम् ॥ १८ ॥

( प्र० ) स्वार्थेऽपीति । अपिशब्दोऽनुक्तसमुच्चयार्थस्ततश्चेष्टसिद्धिः । चत्वार एव वर्णा इति विग्रहे कर्मधारये चतुर्वर्णशब्दात्स्वार्थे ष्यः ॥ १८ ॥

**अणीनयोर्युष्मदस्मदोस्तवकादिः ॥ तावकम् । मामकम् । तावकीनः । मामकीनः । यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीन ॥**

( च० ) 'अणीनयोर्युष्मद०' ॥ इत्यादि वक्तव्यरूपम् ॥ युष्मद् अस्मद् इत्येतयोः अण् प्रत्यये ईनप्रत्यये च परे तवकादिरादेशो भवति ॥ आदिशब्दात् द्विवचनबहुवचनयोर्विषये युष्मदस्मदोर्युष्माकास्माकौ आदेशौ भवतः ॥ अत्र युष्मद एकत्वे अणीनयोः परयोस्तवकादेशः । द्वित्वे बहुत्वे च युष्माकः ॥ अस्मदश्च एकत्वे ममकः । द्वित्वे बहुत्वे च अस्माकः ॥ युष्मद् अस्मद् । तवायं तावकः । ममायं मामकः । उभयत्रापि ईनप्रत्ययः । वृद्धिश्च 'यस्य लोपः' 'स्वरहीनं०' सिद्धम् । युष्मद् अस्मद् । युवयोः युष्माकं वा अयं यौष्माकः । आवयोः अस्माकं वा अयं आस्माकः । एवं युवयोः युष्माक वा अयं यौष्माकीणः । आवयोरस्माकं वा अयमास्माकीनः । द्वाभ्यामण् द्वाभ्यामीनः । युष्मदो

---

( क ) क्वचिदिदमधिकमुपलभ्यते; तद्यथा ।—अव्ययसर्वनाम्नामकच् प्राक् टेः ॥ अव्ययस्य सर्वादेश्चान्त्यस्वरात्पूर्वोऽकच्प्रत्ययो भवति ॥ उच्चैरेवोच्चकैः । नीचैरेव नीचकैः । सर्व एव सर्वकः । विश्व एव विश्वकः । मया एव मयका । त्वया एव त्वयका । तदेव तकद् । यदेव यकद् । एतदेव एतकद् ।—इति ॥

युष्माकः, अस्मदश्च अस्माकः । वृद्धिः । यौष्माकः आस्माकः सर्वत्र 'यस्य लोपः' यौष्माकीण इत्यत्र अवप्रत्याहारकवर्गपवर्गान्तरत्वात् 'ऋर्नोणो०' ॥ एवं आस्माकीनः ॥

( प्र० ) अणीनयोरिति । अण् च ईनश्च अणीनौ तयोः परतः युष्मदस्मदोस्तवकादिः । एकत्वे तवकममकौ । द्वित्वबहुत्वयोर्युष्माकास्माकौ च वक्तव्याविरयर्थः । अनेकवर्णत्वेन गुरुत्वाद्गुरुः । शित्वेति सर्वादेशः ॥

वत्तुल्ये ॥ तुल्ये सादृश्येऽर्थे वत् प्रत्ययो भवति ॥ चन्द्रवन्मुखम् । घटवदुदरम् । पटवत्कम्बलम् ॥ १९ ॥

( च० ) सूत्रम्—'वत्तुल्ये' । वत् प्रथमैकवचनान्तम् । 'हसेपः०' । तुल्ये सप्तम्येकवचनान्तम् । तुल्ये सदृशत्वस्यार्थे उपमार्थे वाच्ये वत्प्रत्ययो भवति । चन्द्रेण तुल्यं सदृशं चन्द्रवत् । वत्प्रत्ययः 'क्त्वाद्यन्तं वा' इतिवत्प्रत्ययान्तस्याव्ययसंज्ञा ततः प्रथमैकवचने 'अव्यया०' । एवं घटेन तुल्यं घटवत् ॥ सार्वविभक्तिको वत् इति एके । यथा 'घटवत् रेणुकरण्डे तिष्ठति' किं ? निर्मलं नीरम् । अत्र घटेवत् घटवत् इति सप्तम्यन्तात् वत् । गिरिवत्तुङ्गो गजः । इत्यादौ गुणतुल्यत्वेऽपि वत् । देवमिव भवन्तं पश्यामि देववत् । राज्ञेव व्यवहृतमनेन राजवत् । ब्राह्मणायेव देवदत्ताय ददाति ब्राह्मणवत् । पर्वतादिव आसनादवरोहति पर्वतवत् । ब्राह्मणस्येव वृत्तमस्येति ब्राह्मणवत् । मथुरायामिव पाटलिपुत्रे प्रसादाः मथुरावत् । एवं यथाप्रयोगं ज्ञेयम् ॥ १९ ॥

( प्र० ) वदिति । तृतीयान्तात् क्रियातुल्य इति व्याख्येयम् । तेन पुत्रेण तुल्यः स्थूलः गोमान्वा इत्यादौ गुणद्रव्यतुल्ये न । केचित्तु तुल्य इति सामान्योक्तेर्विवक्षितार्थप्रयोगदर्शनात्पुत्रतुल्यस्थूल इत्यादावपि अस्तीत्यादिक्रियाध्याहाराद्गिरिवद्गज इत्यादाविव वत्प्रत्ययेऽप्यदोषात्तृतीयान्तात्क्रियातुल्य इत्यादिविवक्षा नेति । चन्द्र इव घट इव पटस्येवेति प्रथमासप्तमीषष्ठ्यन्तादपि वदित्याहुः ॥ १९ ॥

भावे तत्वयणः ॥ शब्दस्य प्रवृत्तिनिमित्तं भावः । तस्मिन्भावे त त्व यण् इत्येते प्रत्यया भवन्ति ॥ ब्राह्मणस्य भावो ब्राह्मणता । तान्तस्य नित्यं स्त्रीलिङ्गत्वादाप् ॥ २० ॥

( च० ) सूत्रम्—'भावे तत्वयणः' ॥ भावे सप्तम्येकवचनान्तम् । 'अ इ ए' । तत्वयण् तश्च त्वश्च यण् च तत्वयणः प्रथमाबहुवचनान्तम् । 'स्वरहीनं०' 'स्रोर्विं०' ॥ अथ सूत्रं व्याचिख्यासुः प्रथमं भावशब्दं व्याचष्टे—शब्दस्य प्रवृत्तिनिमित्तं भावः । येन शब्दस्य प्रवृत्तिः प्रवर्तनं सम्पद्यते भवति तत्प्रवृत्तिनिमित्तम् । ततो यच्छब्दस्य ब्राह्मणादेः प्रवृत्तेः कारणं स एव भावः । जातिद्रव्यगुणक्रियाभिः शब्दस्य प्रवृत्तिनिमित्तं भावः इत्युच्यते । तस्मिन् भावेऽर्थे तत्वयण् इत्येते त्रयः प्रत्यया भवन्ति । उदाहरणम्—ब्राह्मण । ब्राह्मणस्य भाव इति विग्रहे । अत्र ब्राह्मण इति जातिरूपः शब्दस्य यो भावः यजनादिक्रियानिष्टत्वलक्षणः स ब्राह्मणशब्दस्य प्रवृत्तिनिमित्तमतस्तत्प्रत्ययः । अत्र तप्रत्ययान्तं नाम स्त्रीलिङ्गम् । त्वयण् इत्येतदन्तं न सकलिङ्गम् । तत्र तान्तस्य नित्यं स्त्रीलिङ्गत्वात् 'आबतः स्त्रियाम्' इत्याप् ॥ २० ॥

( प्र० ) भाव इति । तश्च त्वश्च यण् च ते तथा । भवत्यस्माच्छब्दप्रवृत्तिरिति भावशब्दस्यान्वर्थतामभिप्रेत्याह । शब्दस्य प्रवृत्तिनिमित्तं भाव इति । तच्च "चतुष्टयी-शब्दानां प्रवृत्तिः" इति महाभाष्यानुसारात् द्रव्यगुणक्रियाजातिरूपा । केचित्तु द्रव्यगुण-क्रियाजातिरूढयः शब्दहेतव इत्याहुः । ब्राह्मणशब्दप्रवृत्तिनिमित्तं जातिः । समाहारे ता चेत्याबन्तनिर्देशान्तान्तस्य नित्यस्त्रीत्वसूचनादप् ॥ २० ॥

समाहारे ता च त्रेर्गुणश्च ॥ त्रयाणां समाहारस्त्रेता ॥ (क)जनानां समूहो जनता ॥ ब्राह्मणस्य भावो ब्राह्मणत्वम् । त्वयणन्तं नपुंसकम् । ब्राह्मणस्य भावो ब्राह्मण्यम् । सुमनसो भावः सौमनस्यम् । सुभगस्य भावः सौभाग्यम् । विदुषो भावो वैदुष्यम् ।

( च० ) स्त्रीलिङ्गाधिकारात् पुनर्विशेषं वक्तव्येनाह—'समाहारे ता च त्रेर्गुणश्च' ॥ समाहारेऽर्थेऽपि ताप्रत्ययो भवति चशब्दात् तस्मिन् परे त्रेर्गुणः । ताप्रत्ययान्तश्च आबन्तवदित्यर्थः ॥ क्वचित्तु—'समाहारे तश्च' इति पश्चात् 'आबतः स्त्रियाम्' । त्रि त्रयाणां समाहारस्त्रेता । अत्र ताप्रत्यये कृते त्रेर्गुणः प्रथमैकवचनम् । 'आपः' सेर्लोपः । जनानां समूहो जनता ॥ एवं त्वप्रत्यये ब्राह्मणस्य भावो ब्राह्मणत्वम् । यण्प्रत्यये ब्राह्मण्यम् । प्रथमैकवचनम् । 'अतोऽम्' ॥ सुमनस् । सुमनसो भावः सौमनस्यम् । अत्र द्रव्यम् । यण् वृद्धिः सौ । 'स्वरहीनं०' 'अतोऽम्' ॥ विद्वस् । विदुषो भावः वैदुष्यम् । अत्र क्रिया । अत्र यण् वृद्धिः । नौ । 'वसोर्व उः' दु । 'क्विलात्षः सः०' 'स्वरहीनं०' कुलवत् ॥ सर्वत्र तद्धिते विकल्पानुवृत्तिः । तेन यूनो भावो यौवनम् ॥ रमणीयस्य भावो रामणीयकम् । वृद्धस्य भावो वार्धकम् । चपलस्य भावश्चापलयम् इत्यादावण्प्रत्ययोऽपि भवति ॥

( प्र० ) समाहारे ता चेति । चकारादनुक्तसमुच्चयार्थात् । हस्तिनां समूहो हास्तिकम् । धैनुकमित्यादौ । समूहे कः । तस्य च णितो वेति णित्वादादिवृद्धिः । तथा अपूपानां समूह आपूपिकम् । शाष्कुलिकमित्यादावन्नवाचकेभ्यः कण् । एवं कवचिनां समूहः कावचिकम् । केदाराणां समूहः केदारिकम्-केदारकम् । कैदार्यमित्यत्र इककण्याः तथा भिक्षादिभ्योऽण् । भिक्षाणां समूहो भैक्षम् । यौवनम् । तथा पाशादिभ्यो यः । पाशानां समूहः पाश्या । वात्या । खल्या । गव्या । रथ्या । वातादूलः तथा खलिनो गोत्ररथेभ्य इनित्रकट्येत्यादयः । खलानां समूहः खलिनी गोत्रा । रथकट्येत्यादयः प्रयोगतो ज्ञेयाः । स्त्रीत्वादिकं लोकात् । गुणश्चेति विशेषार्थाच्चकारात्त्रिशब्दस्यैव गुणः ॥

( क ) सूत्रे चकारात्समूहे प्रत्ययान्तरमपि । तेन हस्तिनां समूहो हास्तिकम् । धेनूनां समूहो धैनुकम् । अत्र कप्रत्ययः । तस्य णित्वादादिवृद्धिः ॥ अचित्तवाचकादिकः । कवचानां समूहः कावचिकम् । अपूपानां समूहः आपूपिकम् । शष्कुलीनां समूहः शाष्कुलिकम् । कवचिन्शब्दादिकः कवचिनां समूहः कावचिकम् ॥ गणिकाया यञः । गणिकानां समूहो गाणिक्यम् ॥ केदाराद्यञ् च । चकारादिकः । केदाराणां समूहः कैदार्यम् । केदारिकम् ॥ युवत्यादेरण् । युवतीनां समूहो यौवतम् । भिक्षाणां समूहो भैक्षम् ॥ पाशादिभ्यो यः स च स्त्रियाम् ॥ पाशानां समूहः पाश्या । वातानां समूहो वात्या । रथानां समूहो रथ्या । खलानां समूहः खल्या ॥ खलगोरथेभ्य इनित्रकट्याः । इनिः खलिनी । रथानां समूहो रथकट्या । रथ्येत्यपि । गवां समूहो गोत्रा । गव्येत्यादिप्रयोगा ज्ञेयाः ॥ इति मूलपुस्तकगतो विशेषः ॥

कर्मण्यपि यण् वक्तव्यः(क) ॥ ब्राह्मणस्येदं कर्म ब्राह्मण्यम् । राज्ञ इदं कर्म राजन्यम्-राज्यम् । नो वा इति टेर्लोपः(ख) ॥

( च० ) कर्मण्यपि यण् वक्तव्यः । कर्मण्यपि कर्मार्थेऽपि यण् वक्तव्यः । ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ सुगमम् । राजन् राज्ञ इदं कर्म राज्यम् । राजन्यं च । उभयत्रापि कर्मणि यण् प्रत्ययः । एकत्र 'नो वा' इति टिलोपः राज् 'स्वरहीनं०' । अन्यत्र न टिलोपः । 'स्वरहीनं' उभयत्रापि प्रथमैकवचनम् । कुलशब्दवत् । जातावपि यण् । राज्ञो जातीयः राजन्यः । अपिशब्दात् मुनेः कर्म मौनम् । कर्मणि साधुः कर्मण्यः । सभायां साधुः सभ्यः । यशसे हितं यशस्यम् ॥

( प्र० )कर्मण्यपीति । अपिशब्दात्साध्वर्थेऽपि । सामसु साधुः सामन्यः । कर्मण्यः । नो वेति शब्दव्यवस्थया टिलोपप्रसङ्गः । नास्नो नो लोपशधावित्यत्रापि ह्रस्वो वेत्यतो वानुकर्षणाद्व्यवस्थयात्र तदभावः । एवं सभायां साधुः सभ्यः । समाने तीर्थे वासी सतीर्थ्यः । सहादेरिति समानस्य सः । समाने उदरे शयितः समानोदर्यः—सोदर्यः । विकल्पेन सादेशः । अग्रादिभ्य ईयेययतो वार्थे । अग्रे भवः अग्रीय अग्रि:—अग्र्यः । तथा हितार्थे शरीरावयवाद्यत् । दन्तेभ्यो हितं दन्त्यम् । कण्ठ्यम् । ओष्ठ्यमित्यादि । शतेन क्रीतः शत्यः इत्यादि प्रयोगानुसारेणोह्यम् । णितो वेति णित्वव्यवस्था ॥

लोहितादेर्डिमन् ॥ लोहितादेर्गणाद्भावेऽर्थे इमन् प्रत्ययो भवति स इमन् डित्संज्ञो भवति ॥ डित्त्वाट्टिलोपः ॥ लोहितस्य भावो लोहितिमा । ( कालस्य भावः ) कालिमा । ( लघोर्भावो ) लघिमा । (अणोर्भावः) अणिमा ॥ २१ ॥

( च० ) सूत्रम्—'लोहितादेर्डिमन्' ॥ लोहित आदिर्यस्य स लोहितादिस्तस्मात् । पञ्चम्येकवचनान्तम् 'ङिति' 'हस्य' इत्यलोपः 'स्रोर्विं०' । डिमन् प्रथमैकवचनान्तम् । 'इसेपः०' ॥ लोहितादेर्नाम्नो भावेऽर्थे इमन्प्रत्ययो भवति स च डित्संज्ञकः । परम् अनेकस्वराड्डिदिति वक्तव्यम् । तेन भूमा इत्यत्र एकस्वरे टिलोपो न । उदाहरणम्—लोहित । लोहितस्य रक्तस्य भावः इति विग्रहे । इमन्प्रत्ययः । डित्त्वाड्डिलोपः । डिति टेः'' 'स्वरहीनं०' प्रथमैकवचने 'नोपधायाः' 'इसेपः०' 'नाम्नो नो०' लोहितिमा । अणोर्भावः अणिमा । तथा लघोर्भावः लघिमा । एवं महतो भावो महिमा । राजन्शब्दवत् ॥ २१ ॥

( प्र० ) लोहितादेरिति । भावे तत्वयण इत्यनुवृत्तेस्तेऽपि । ततश्च लोहितता—लोहितत्वम्— लौहित्यमित्याद्यपि ॥ २१ ॥

---

( क ) कर्मण्यपीत्यपिशब्दात्साध्वर्थे यण् तस्य नित्वं न । सामनि साधुः सामन्यः । कर्माणि साधुः कर्मण्यः । सभायां साधुः सभ्यः ॥

( ख ) अन्यत्रापि यण् प्रत्ययः समानस्य वा स इत्यादेशः समाने उदरे शयितः समानोदर्यः । सोदर्यः शतेन क्रीतः शत्यः ॥

**ऋ र इमनि ॥** पृथोर्भावः प्रथिमा । ( दृढस्य भावो ) द्रढिमा । बहोर्भाव इति विग्रहे ॥

( च० ) 'ऋ र इमनि' ॥ ऋ षष्ठ्येकवचनान्तम् । रः प्रथमैकवचनान्तम् । इमनि सप्तम्येकवचनान्तम् । पृथुमृदुदृढकृश इत्यादीनां नाम्नामादेः ऋकारस्य इमनि प्रत्यये परे र आदेशो भवति ॥ पृथु । पृथोर्भावः इति विग्रहे अनेन ऋस्थाने रः । टिलोपः पूर्ववत् प्रथिमा । एवं मृदोर्भावो म्रदिमा । दृढस्य भावो द्रढिमा । कृशस्य भाव क्रशिमा । इ-सादेर्लघोश्च ऋकारस्येति व्याख्येयं । तेन कृष्णिमा ऋजिमा इत्यादौ रकारो न भवति । सर्वत्र तद्धिते विकल्पानुवृत्तिरिति लोहितता लोहितत्वम् । लौहित्यम् । अणुता अणुत्वम् । लघुता लघुत्वं पृथुता पृथुत्वं मृदुता मृदुत्वं । कृशता कृशत्वं दृढता दृढत्वम् । इत्याद्यपि भवति ॥

( प्र० ) ऋ र इति । वक्तव्यत्वेन प्रयोगानुसारित्वाद्धसादेर्लघोरित्येव नेह ऋजिमा । कृष्णिमा ॥

**बहोर्लोपो भू च बहोः ॥** बहोरुत्तरेषामिमनादीनामिकारस्य लोपो भवति बहोः स्थाने भू चादेशः ॥ भूमा(क) ॥ २२ ॥

( च० ) सूत्रम्—'बहोर्लोपो भू च बहोः' । बाहोरिति बहुशब्दस्य पञ्चम्येकवचनान्तम् । 'ङिति' 'ङस्य' इत्यलोपः । 'ओर्वि०' । लोपः प्रथमैकवचनान्तम् । 'ओर्वि०' पश्चात् 'नासिनो०' । भू प्रथमैकवचनान्तं सांकेतिकम् । पश्चात् 'हवे' 'डमो' । च प्रथमैकवचनान्तम् । 'अव्यया०' । बहोः षष्ठ्येकवचनान्तम् । 'ङित' 'ङस्य' इत्यलोपः । पञ्चपदं सूत्रम् । बहुशब्दात्परेषामिमन्प्रत्ययादीनां संबन्धिन इकारस्य लोपो भवति,— बहुशब्दस्य च भूइत्ययमादेशो भवति । अत्र इमनादीनामित्यादिशब्दात् इमन् इष्ठ ईयस् इत्येते गृह्यन्ते । यद्यपि ईयस् ईकारोऽस्ति 'कारग्रहणे केवलग्रहणम्' इति न्यायस्यापि भू चादेश इत्यत्र चकाराज्ञोकदोषः ॥ केचित्तु इमनादीनामादेर्लोपो भवत्येवं व्याख्यान्ति । अन्ये तु इमन्नादीनामिवर्णस्य लोपमिति व्याख्यान्ति । बहु बहोर्भाव इति विग्रहे लोहितादित्वादिमन् । एकस्वरत्वाट्टेर्लोपः' । 'बहोर्लो०' इति इकारलोपः बहोर्भू आदेशः पूर्ववत् । प्रथमैकवचने सि 'नोपधायाः' 'हसेपः' 'नाम्नो नो०' भूमा ॥ २२ ॥

( प्र० ) बहोरिति । इमनादीनामित्यादिशब्देनेष्ठेयसोर्ग्रहणम् । पुनर्बहोरिति स्थानिनियमार्थम् । अन्यथा इमन्नादीनां प्रकृतत्वात्तेषामेव स्यात् । यद्यपि तेषामिकारलोप सामर्थ्यान्न संभवति । तथापि पूर्वस्य पञ्चम्यन्तत्वेन स्थानषष्ठ्यन्तस्य पृथगुक्तिर्युक्तैव । सव एवादेः परस्येति परिभाषया परलोपप्रसक्तौ संभवदभिप्रायेणेकारस्योक्तिः । ततश्चेयानित्यादौ इकारस्यापि लोपः ॥ २२ ॥ .

**अस्त्यर्थे मतुः ॥** नाम्नो मतुः प्रत्ययो भवति अस्यास्मिन्वास्तीत्ये-

---

( क ) 'गुर्वादेः' इति गुरोर्गरादेशः । गुरोर्भावो गरिमा । वरस्य भावो वरिमा ॥ इमनि लोपः । इमनि प्रत्यये परे वकारस्य लोपो भवति । स्थूलस्य भावः स्थेमा । स्थूलस्य स्थवादेशः ।—इति विशेषः ॥

तस्मिन्नर्थे ॥ उकारो नुम्विधानार्थः । गौरस्यास्तीति गोमान् गोमती(क)॥२३॥

( च० ) सूत्र—'अस्त्यर्थे मतुः' ।। अस्तेर्धातोरर्थोऽस्त्यर्थस्तस्मिन् सप्तम्येकवचना-न्तम् 'अ इ ए' । मतुः प्रथमैकवचनान्तम् 'स्रोर्वि०' अस्यास्ति अनेन अस्ति अस्मिन् विषये वा इदमस्ति इत्येतस्मिन्नर्थे तद्धिताख्नाम्नो मतुप्रत्ययो भवति । अत्र मतुप्रत्यये उकारो 'उितो नुम्' इति नुम्विधानार्थस्तथा 'ऋ्वितः' इति ईप्विधानार्थश्च । गो द्विस्थाने । गौरस्यास्तीति, द्वितीये स्त्रीविशेषणे गौरस्या अस्तीति । उभयत्रापि मतुः । मत् । आद्ये प्रथमैकवचने 'उितो नुम्' मनत् 'अत्वसोः सौ' दीर्घः सा 'हसेपः०' 'संयोगान्तस्य०' गोमान् ॥ द्वितीये 'ऋ्वितः' इति ईप् । 'स्वरहीनं०' 'हसेपः०' गोमती । नपुंसकलिङ्गे तु गोमत् । एवं श्रीमान् श्रीमती ।। नित्ययोगातिशयप्रशस्त्वादिविशिष्टे अस्त्यर्थे मतु-रिति केचित् । तन्मते नित्यं श्रीरस्त्यस्येति श्रीमान् । अतिशयिता प्रीतिरस्यास्तीति प्रीतिमान् । प्रशस्ता धीरस्येति धीमान् ॥ २३ ॥

( प्र० ) अस्त्यर्थे इति । अस्तेरर्थोऽस्त्यर्थो विद्यमानार्थस्तस्मिन्नाम इति प्रथमा-न्तपरम् । ततश्च प्रथमान्तान्नाम्नोऽस्त्युपाधिकान्मतुरित्यर्थः । अस्यास्मिन्वास्तीत्यर्थः । विशेषस्तु वातुन्नूर्क्ष्वसेयः । गौः श्रीश्चास्यास्मिन्वेति विग्रहे उकारानुबन्धित्वात् ऋ्वित इतीप् । " भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुवादयः ॥ " क्रमेण । ब्राह्मणवान् ग्रामः ।। उदरिणी कन्या । रूपवाञ्जनः । दण्डी । अस्त्यर्थोदाहरणं चोक्तम् ।। २३ ।।

**अइकौ च मत्वर्थे** ॥ मत्वर्थे अइकौ प्रत्ययौ भवतः ॥ वैजयन्ती पताका यस्यासौ वैजयन्तः । माया विद्यते यस्यासौ मायिकः ॥२४॥

( च० ) सूत्रम् । 'अइकौ च मत्वर्थे' ॥ अश्च इकश्च अइकौ प्रथमाद्विवचनान्तम् । मतोः अर्थः मत्वर्थस्तस्मिन् सप्तम्येकवचनम् । यद्यपि समासे सन्धिनिश्चयेन स्यात्तथा-प्यत्र स्पष्टार्थत्वात् 'अइकौ०' इत्यत्र सन्धिर्न कृतः । क्वचित्तु 'एकौ च मत्वर्थे' इत्येव दृश्यते । मत्वर्थे इति मतुप्रत्ययार्थे अर्थादस्त्यर्थे एव नाम्नः अइकौ इत्येतौ प्रत्ययौ

---

( क ) फलबर्हरथेभ्य इनेनौ वा वक्तव्यौ फलमस्यास्तीति फलिनः फली । बर्हमस्यास्तीति बर्हिणः बर्ही । रथोऽस्यास्तीति रथिनः-रथी ॥ बलवाताभ्यामूलः ॥ बलूलः ॥ वातूलः ॥ वातातिसाराभ्यां किन् ॥ वातकी अतिसारकी ॥ ऊर्णाहंशुभंभ्यो युः अस्त्यर्थे ॥ ऊर्णायुः । अहंयुः । शुभंयुः ॥ अर्णः केशयोर्वः अर्णसः सलोपश्च । अर्णवः केशवः ॥ शंकंभ्यां बभयुस्तितुतयसः । आभ्यामेते प्रत्ययाः स्युरस्त्यर्थे ॥ शं विद्यते यस्यासौ शंबः । शंभः । शंयुः । शंतिः । शंतुः । शंतः । शंयः । कं विद्यते यस्यासौ कम्बः । कम्भः । कंयुः । कान्तिः । कन्तुः । कन्तः । कंयः । इत्यादि ॥ लोमादिभ्यः शः लोमशः । पामादेर्नः । पामन । अङ्गना । पिच्छादेरिलच् । पिच्छिलः । फेनादिभ्य इलच् । फेनिलः ॥ तुन्दिवलिवटिभ्यो भः तुन्दिभः । वलिभः ।वटिभः ॥ कृष्यादिभ्यो वलच् दीर्घश्च । कृषीवलः ॥ प्रज्ञार्चाश्रद्धावृत्तिभ्योऽण् । प्रज्ञाऽस्यास्तीति प्राज्ञः । आर्चः । श्राद्धः । वार्तः । शृङ्गवृन्दाभ्यामारकण् । प्रशस्तं शृङ्गमस्यास्तीति शृ-ङ्गारकः । प्रशस्तं वृन्दमस्यास्तीति वृन्दारकः । मध्वादे रः । मधुरः । मुखरः । शुषिरः रन्ध्रवानित्यर्थः । कुञ्जरः । कुञ्जो हस्तिहनुः ॥ सिध्मादेर्लः । सिध्मास्यास्तीति सिध्मलः । चूडास्यास्तीति चूडालः ॥—इति पुस्तकान्तरे विशेषः ॥

भवतः। वैजयन्ती वैजयन्ती नाम पताका ध्वजो विद्यतेऽस्मिन्निति विग्रहे अप्रत्ययः। 'यस्य' ईलोपः। 'स्वरहीन०' 'सो०' वैजयन्तः प्रासादः॥ तथा मायास्त्यस्येति मायिकः। पूर्ववत् इकप्रत्ययः। 'यस्य लोपः' 'स्वरहीन०' मायिकः॥ क्वचिद्प्रत्ययो णिदपि। प्रज्ञास्यास्तीति प्राज्ञः। श्रद्धा अस्यास्तीति श्राद्धः॥ २४॥

( प्र० ) अइकाविति। अश्च इकश्च अइकौ सन्ध्यभावोऽसन्देहार्थः। एवं प्रज्ञास्यास्ति प्राज्ञः। श्राद्धः। आर्थः। वृत्तिरस्यास्ति वार्त्त इत्यादौ णितो वेति व्यवस्थया णित्वम्। चकारादनुक्तसमुच्चयार्थात्प्रयोगानुसारेणान्येभ्योऽपि। यथा फलबर्हिरथेभ्य इनः। फलमस्यास्तीति फलिनः। बर्हिणः। रथिनः। तथा बलवाताभ्यामूलः। बलमस्यास्ति बलूलः। वातूलः। तथा वातातीसाराभ्यां किन् रोगे। वातो रोगोऽस्यास्तीति वातकी। अतीसारकी। तथा कंशंभ्यां बभादयः। कं शं वास्यास्तीति। कम्बः। शम्बः। कम्भः। शम्भः। कंयुः। शंयु। कन्तिः। शन्तिः। कन्तुः। शन्तुः। कन्तः। शन्तः। तथा तुन्दिवलिवटिभ्यो भः। तुन्दिनो विद्यन्तेऽस्मिन् तुन्दिभः। बलिभः। वटिभः। कृष्यादिभ्यो वलः। पूर्वस्य च दीर्घः। कृषीवलः। रजस्वला दन्तावलशिखावलौ संज्ञायाम्। अन्यत्र दन्तवान् शिखावान्। तथा मध्वादे रः। मधुरः। ऊषः क्षारमृत्तिकाऽस्यास्ति ऊषरः। शुषीरः। खमुखकुञ्जेभ्यश्च। खरः। मुखरः। कुञ्जा हस्तिहनुः सोऽस्यास्ति कुञ्जरः। कच्छूः कण्डूः सास्यास्तीति कच्छूरः। अस्य ह्रस्वत्वम्। अर्णसो वः सलोपश्च। अर्णांसि जलान्यस्मिन्नर्णवः। केशादिभ्योऽपि प्राशस्त्ये। प्रशस्ताः केशाः सन्त्यस्य केशवः। तथा काण्डाण्डयोरीरः। काण्डीरः। मेधारथाभ्यामिरः। मेधिरः। रथिरः। तथा लोमादिभ्यः शः। लोमशः रोमशः। पामादेर्नः। पामनः। प्रशस्तान्यङ्गानि सन्त्यस्या अङ्गना सिध्मादेर्लः। सिध्मलः। चण्डालः इत्यादयो यथाप्रयोगमूह्या॥ २४॥

**मान्तोपधाद्वत्विनौ**॥ मकारान्तान्मकारोपधादकारान्तादकारोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे(क)॥ किं विद्यते यस्यासौ किंवान्। लक्ष्मीवान् (शमी)॥ भवान्। धनवान् धनी दण्डी छत्री दृषद्वती। कामो विद्यते यस्यासौ कामी। क्रमयो विद्यन्ते यस्यासौ क्रमिवान्। शमोऽस्यास्तीति शमी। दमोऽस्यास्तीति दमी॥ २५॥

( च० ) सूत्रम्—"मान्तोपधाद्वत्विनौ"॥ मश्च अश्च मौ अत्र 'सवर्ण०' 'मो मौ मौ' अन्तश्च उपधा च अन्तोपधे मौ अन्तोपधे यस्य स मान्तोपधस्तस्मात् पञ्चम्येकवचनान्तम्। पुनः पूर्वं 'सवर्णे०' अग्रे वत्विनौ वतुश्च इन् च वत्विनौ प्रथमाद्विवचनान्तम्।

( क ) 'अस्त्यर्थे' इतः परं 'यशस्वान्' इत्यवधिकपाठविशेषो मूलपुस्तके दृश्यते। सो यथा;—मघोऽस्यास्तीति मघवान्॥ श्रियां यशसि सौभाग्ये योनौ कान्तौ माहात्म्ये च। सूर्ये संज्ञाविशेषे च मृगाङ्केऽपि भगः स्मृतः॥ भगं भाग्यं विद्यते यस्यासौ भगवान्। लक्ष्मीरस्यास्तीति लक्ष्मीवान्। पुत्रोऽस्यास्तीति पुत्रवान्। धनमस्यास्तीति धनवान्-धनी। छत्रमस्यास्तीति छत्रवान्-छत्री। इनां शो सो। दण्डो विद्यते यस्यासौ दण्डवान् दण्डी। क्षेत्रं विद्यते यस्यासौ क्षेत्रवान् क्षेत्री। विद्यास्यास्तीति विद्यावान्। दृषदो विद्यन्ते यस्यासौ दृषद्वान् दृषद्वती भूमिः। स्त्रीत्वे॥ यशोऽस्यास्तीति यशस्वान् इति।

'स्वरहीनं०' पूर्वं 'चपा अबे जबाः' ॥ द्विपदमिदम् । मकारान्तान्मकारोपधाच्च तथा अकारान्तादकारोपधाच्च यद्वा अवर्णान्तादवर्णोपधाच्च नाम्नोऽस्त्यर्थे वतु इन् एतौ प्रत्ययौ भवतः । इन्प्रत्ययस्तु अकारान्तादेव भवत्यस्त्यर्थे ॥ प्रथमं मान्तोदाहरणम् । किम् । किमस्यास्तीति वाक्ये अत्र वतु । वत् । क्वचित्पदान्तताश्रयणात् 'मोऽनु०' प्रथमैकवचने । 'ऋितो नुम्' 'अत्वसोः सौ' 'हसेपः०' 'संयोगान्तस्य०' किंवान् ॥ लक्ष्मी । लक्ष्मीः अस्यास्तीति लक्ष्मीवान् । अत्र मकारोपधत्वात् वतुः ॥ नोर्म्यादिभ्यः इति ऊर्मिमान् भूमिमान् इत्यादौ मान्तोपधत्वेऽपि न वतुप्रत्ययः, किन्तु मतुप्रत्ययः ॥ शम । शमोऽस्यास्तीति शमी । अत्र मकारोपधत्वादकारान्तत्वाच्च इन् । एवं भानि नक्षत्राणि सन्त्यस्येति भवान् चन्द्रः । यद्वा भानि नक्षत्राणि सन्त्यस्मिन् इति भवान् आकाशः ॥ अत्र अकारान्ताद् वतुः ॥ एवं मालावान् दयावान् । अत्र आकारान्ताद् वतुः ॥ धन छत्र दण्ड । धनमस्यास्तीति धनी । छत्रमस्यास्तीति छत्री । दण्डोऽस्यास्तीति दण्डी । एषु सर्वत्र इन् अकारान्तेभ्यः । 'यस्य लोपः' 'स्वरहीनं०' । त्रिष्वपि प्रथमैकवचने 'इनां शौ सौ दीर्घः' 'हसेपः०' नाम्नो नो०' ॥ दृषदः सन्त्यस्यामिति दृषद्वती । अकारोपधत्वाद्वतुः । उकारानुबन्धत्वात् 'उित्रतः' इति ईप् ॥ क्वचिद्वतुप्रत्यये परे दीर्घत्वमपि भवति यथा—अमरावती पद्मावती मृगावती पुष्करावती कुशावती भोगवती अहीवती पुष्पावती शरावती ॥ क्वचिन्मतुप्रत्ययेपि दीर्घत्वम् । यथा—हनूमान् ॥ २९ ॥

( प्र० ) मान्तोपधादिति । मश्च अश्च मौ मौ अन्ते उपधायां च यस्येति व्यधिकरणबहुव्रीहिः । वतुप्रत्ययः सामान्येन भवति इन्प्रत्ययस्त्वकारान्तादेवेति विवेकः । दृषद्वानित्यवर्णोपधोदाहरणम् । वतोरुकारानुबन्धित्वादीप् । किंवान् । लक्ष्मीवानिति मकारान्तमकारोपधयो दाहरणे ञितो वेत्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थया यवादेर्न । यवमान् । भूमिमान् इत्यादि ।। २५ ।।

**तडिदादिभ्यश्च** ॥ तडिदादिभ्यः शब्देभ्यो वतुप्रत्ययो भवति ॥ तडिद्विद्यते यस्यासौ तडित्वान्(क) । [ भानि नक्षत्राणि विद्यते यस्यासौ भवान् । ] यशस्वान् । मरुद्विद्यते यस्यासौ मरुत्वान् ॥ २६ ॥

( च० ) साम्प्रतं मान्तोपधत्वं विनाऽपि वतुप्रत्ययं वक्तव्येनाह—'तडिदादिभ्यश्च' ॥ तडिदादिभ्यो मान्तोपधत्वरहितेभ्योऽपि वतुप्रत्ययो भवति ॥ चकारात्तडिदित्यत्र चपस्य जबत्वं न भवति । तडित् । तडिदस्यास्तीति तडित्वान् । एवं विद्युदस्यास्तीति विद्युत्वान् उभयत्रापि वतुप्रत्ययो भवति । पूर्ववत् । एवं सरस्वान् मरुत्वान् । समिध्वान् ॥ चकारात् राजन्वान् राजन्वती सौराज्ये । उदधौ उदन्वान् एतौ निपात्यौ ॥ तथा चूडासिध्मादेश्च लप्रत्ययः । चूडाऽस्त्यस्येति चूडालः । सिध्मलः । मांसलः । इत्यादि ॥ ऐश्वर्ये स्वशब्दादामिन् । स्वमैश्वर्यमस्त्यस्येति स्वामी ॥ २६ ॥

( प्र० ) तडितादिभ्य इति । चकारादधिकविधानार्थात्तडितादीनां चपानां जबा न ।

---

( क ) अयमत्र विशेषः ।—तकारान्तस्य सकारान्तस्य हसादावस्त्यर्थे प्रत्यये परे अपदान्तता वक्तव्या यस्वरादौ प्रत्ययमात्रे परे सर्वेषामपदान्तता भवति । ईये परे पदान्तता । तेन भवदीयम् ॥

श्नोर्विसर्ग इत्यत्रापि स्कोराद्योश्चेत्यनन्तरसूत्रात्तकारानुवृत्तेर्मत्वर्थीयपरे यशस्वानित्यादौ विसर्गाप्रसङ्गः ।। २६ ।।

**एतत्कियत्तद्भ्यः परिमाणे वतुः** ॥ एतत्कियत्तद्भ्यः शब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति ॥ २७ ॥

( च० ) 'एतत्कियत्तद्भ्यः०' इत्यादि । एतद् किम् यद् तद् एतेभ्यः शब्देभ्यः परिमाणेऽर्थे वतुप्रत्ययो भवति । उकार उच्चारणार्थः । यद् तद् । यत्परिमाणमस्य यावान् । तत्परिमाणमस्य तावान् । परिमाणे वतुः ॥ २७ ॥

( प्र० ) एतत्कियत्तद्भ्य इति । एभ्यः परिमाणेऽर्थे वतुप्रत्ययो वक्तव्यः । मान्तोपधादित्यनेनैव सिद्धे परिमाणार्थं वचनम् ।। २७ ।।

**यत्तदोरा** ॥ यत्तदोष्टेरात्वं भवति वतौ परे । यत्परिमाणमस्येति यावान् । तावान् ॥ २८ ॥

( च० ) 'यत्तदोरा' ॥ यत्तद् एतयोष्टेराकारो भवति परिमाणेऽर्थे वतौ परे इत्यर्थः । यावत् तावत् । उभयत्रापि प्रथमैकवचने । 'ञिता नुम्' 'अत्वसोः सौ' 'हसेपः०' 'संयोगान्तस्य०' इति तलोपः । सिद्धम् । स्त्रीलिङ्गे यावती । नपुंसके यावत् ॥ किम् । किं परिमाणमस्येति कियान् । 'एतत्कि०' वतुप्रत्ययः ॥ २८ ॥

**किमः कियश्च** ॥ किम्शब्दस्य किरादेशो भवति वतोर्वकारस्य यकारादेशो भवति ॥ किं परिमाणमस्येति कियान् ॥ २९ ॥

( च० ) 'किमः कियश्च' वतुप्रत्यये परे किम्शब्दस्य कि इत्यादेशः कृत्स्नस्य भवति । वतोर्वकारस्य च यकारो भवति । अनेन किमः किः वस्य यः । चकाराच्छित्वं विनापि सर्वस्य किरादेशः । प्रथमैकवचने पूर्ववत् । एतद् उभयत्रापि वतुप्रत्ययः ॥ २९ ॥

( प्र० ) किम इति । किमः किरादेशो वक्तव्यः । चकाराद्वतोर्वस्य यादेशश्चेत्यर्थः यत्तत्कि वा परिमाणमस्येति विग्रहे इयानित्यत्र चकाराद्यः ।। २९ ।।

**आ इश्चैतदो वा** ॥ एतदष्टेर्वा आ इश् च वा भवति वतौ परे(क)। एतत्परिमाणमस्येति एतावान् इयान्(ख) ॥ ३० ॥

( च० ) 'आ इश्च एतदो वा' ॥ वतुप्रत्यये परे एतच्छब्दस्य आ इश् इत्येतावादेशौ भवतः । 'गुरुः शिच्च सर्वस्य' इति न्यायात्कृत्स्नस्य आ इति गुरुस्तथापि चकारग्रहणादन्त्यस्यैव टेराकारादेशो न कृत्स्नस्य । इश् इति शित् । 'गुरुः शिच्च' इति शित्त्वात्सर्वस्य एतद् इत्यस्य इ आदेशः । वाग्रहणाद्यत्र इशादेशस्तत्र वकारस्य यकारः । अन्यत्र न । एतावत् इयत् प्रथमैकवचने पूर्ववत् । 'ञिता नुम्' 'हसेपः०' 'संयोगान्तस्य०' ॥३०॥

**तुन्दादेरिलः** ॥ तुन्दादेर्गणात् इलप्रत्ययो भवति । प्रशस्तं तुन्दं य-

---

( क ) यस्मिन्पक्षे आत्वं न तस्मिन्पक्षे इशादेशः स्यात् शकारः सर्वादेशार्थः चकाराद्वतोर्वकारस्य यकारः॥

( ख ) वाशब्दोऽनुक्तसमुच्चयार्थः । तेन इदमो वतुप्रत्ययः । इदम् इश् चकाराद्वतोर्वकारस्य यश्चेति वाच्यम् । इदं परिमाणं यस्य स इयान् । शकारः सर्वादेशार्थः ॥

स्यासौ तुन्दिलः ॥ ३१॥ औन्नत्ये दन्तादुरः ॥ औन्नत्येऽर्थे वाच्ये सति दन्तशब्दादुरः प्रत्ययो भवति । उन्नता दन्ता यस्यासौ दन्तुरः ॥ ३२ ॥

( च० ) 'तुन्दादेरिलः' ॥ तुन्दादेः शब्दात् अस्त्यर्थे इलप्रत्ययो भवति । तुन्द । तुन्दमस्यास्तीति तुन्दिलः । इलप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' प्रथमैकवचनम् ॥ एवम्—उदरिलः फेनिलः ॥ 'औन्नत्ये दन्तादुरः' दन्तशब्दादौन्नत्ये उच्चत्वेऽर्थे उरप्रत्ययो भवति । उन्नता उच्चा दन्ता अस्येति दन्तुरः ॥ ३१–३२ ॥

श्रद्धादेर्लुः ॥ श्रद्धा विद्यते यस्यासौ श्रद्धालुः । कृपा विद्यते यस्यासौ कृपालुः । मायालुः । दयालुः ॥

( च० ) 'श्रद्धादेर्लुः' ॥ श्रद्धादेर्नाम्नोऽस्त्यर्थे लुप्रत्ययो भवति । श्रद्धा दया कृपा । श्रद्धा अस्यास्तीति श्रद्धालुः । दयाऽस्यास्तीति दयालुः । कृपाऽस्यास्तीति कृपालुः । सर्वत्र लुप्रत्ययः । प्रथमैकवचने 'स्रोर्वि०' ॥

असमायामेधास्रग्भ्योऽस्त्यर्थे विनिर्वक्तव्यः ॥ तपो विद्यते यस्यासौ तपस्वी । यशस्वी । मायावी । मेधावी । स्रक् विद्यते यस्यासौ स्रग्वी ॥

( च० ) असमायामेधा० ॥ अस् इति । 'वचादेरस्' इत्युणादिसूत्रोक्तोऽसुप्रत्ययः तदन्तान्नाम्नः पुनः मेधामायास्रज्शब्देभ्यश्च अस्त्यर्थे विनिः प्रत्ययो वक्तव्यः । इकार उच्चारणार्थः । तपस् । 'तप सन्तापे' इत्यस्यासन्तस्य रूपम् । विन् । तपोऽस्यास्तीति तपस्वी । दण्डिन्शब्दवत् । प्रथमैकवचने । 'इनां शौ सौ' 'हसेपः०' 'नाम्नो नो०' ॥ एवं यशस्वी । एवं मायाऽस्यास्तीति मायावी । मेधा बुद्धिरस्यास्तीति मेधावी । स्रक् माला अस्यास्तीति स्रग्वी । 'दिशाम्' इति कुत्वम् स्रज् इत्यत्र अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदान्तताश्रयणात् ( 'चोः कुः' ) जस्य गः । प्रथमैकवचने सिः पूर्ववत् ॥

( प्र० ) असमायेति । असमायेत्यत्रासः प्रत्ययत्वात्प्रत्ययग्रहणेन तदन्तस्येति असप्रत्ययान्तान्मायादेश्चेत्यर्थः ॥

वाचो ग्मिनिः ॥ वाच्शब्दात् ग्मिनिः प्रत्ययो भवति अस्त्यर्थे ॥ प्रशस्ता वाक् विद्यते यस्यासौ वाग्मी(क) ॥ ३३ ॥

( च० ) 'वाचो ग्मिनिः' ॥ वाच्शब्दात् ग्मिन्प्रत्ययो भवति । गकारोऽनुबन्धमकारादित्वनिषेधार्थः । तेन 'ञमे ञमा वा' इति न भवति । वाच् वाग् । प्रशस्ता वागस्यास्तीति वाग्मी ग्मिन्प्रत्ययः । 'चोः कुः' पदान्तताश्रयणात् 'चपा अबे जबाः' कस्य गः । 'स्वरहीनं०' दण्डिन्शब्दवत् ॥ गोरपि अस्त्यर्थे मिनिः । गावो विद्यन्तेऽस्येति गोमी॥ ३३॥

( प्र० ) वाच इति । वाक्शब्दादस्त्यर्थे ग्मिनिप्रत्ययो वक्तव्यः । ग्मिनेर्गकारः ञमादित्वव्यावृत्त्यर्थः । अथवा वाचो ग्मिनिरिति च्छेदे वाचो मिनिप्रत्ययः वाचश्च गकारोऽन्तादेशश्चेति वक्तव्यः । एवं च वाच इत्यस्योपलक्षणाद्गोमीत्यादावपि ॥ ३३ ॥

आलाटौ कुत्सितभाषिणि ॥ कुत्सितभाषिण्यर्थे वाच्ये सति

---

( क ) एकादाकिनिचासहाये । न विद्यते एकः सहायो यस्य सः एकाकी । स्त्री चेत् एकाकिनी ॥

आलाटौ प्रत्ययो भवतः । कुत्सिता वाक् विद्यते यस्यासौ वाचालः । वाचाटः(क) ॥ ३४ ॥

( च० ) 'आलाटौ कुत्सितभाषिणि' ॥ आलश्च आटश्च आलाटौ प्रथमाद्विवचनम् । बहुभाषिणीत्येके । कुत्सितं भाषते इत्येवंशीलः कुत्सितभाषी तस्मिन् अभिधेये वाचश्शब्दात् आल आट इत्येतौ प्रत्ययौ भवतः ॥ वाच् । कुत्सिता वागस्येति वाचालः । वाचाटः । एकत्र आलः अन्यत्र आटः । 'स्वर०' 'लोवि०' ॥ ३४ ॥

( प्र० ) आलाटाविति । कुत्सितमनन्वितं भाषितुं शीलमस्य कुत्सितभाषी तस्मिंस्तद्धितान्तवाच्ये विवक्षित इत्यर्थः । ईषदपरिसमाप्तिः किंचिन्न्यूनत्वम् । प्रशंसा प्राशस्त्यं स्तुतिरिति यावत् ।पूर्वं भूतः प्राज्ञो ज्ञात इति यावत्। टकारस्येवर्थत्वात्तु दृष्टचरी॥३४॥

**ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः** ॥ ईषदपरिसमाप्तः सर्वज्ञ इति सर्वज्ञकल्पः ईषदपरिसमाप्तः पटुरिति पटुदेश्यः । पटुदेशीयः । ईषदूनः कविरिति कविदेश्यः । कविदेशीयः ॥ ३५ ॥

( च० ) 'ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः' ॥ अपरिसमाप्तौ अपरिपूर्णत्वे किञ्चिन्न्यूनत्वे वाच्ये नाम्नः कल्प देश्य देशीय इत्येते त्रयः प्रत्ययाः भवन्ति । सर्वज्ञ पटु कवि । ईषदपरिपूर्णसर्वज्ञः सर्वज्ञकल्पः । ईषदसमाप्तः पटुः पटुदेश्यः । ईषदसमाप्तः पटुः पटुदेशीयः । पटुश्चतुरः । ईषदसमाप्तः कविः कविदेशीयः । त्रिषु क्रमेण कल्पदेश्यदेशीयप्रत्ययाः।३५।

**प्रशंसायां रूपः** ॥ प्रशंसायां रूपः प्रत्ययो भवति ॥ प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥ ३६ ॥

**पाशः कुत्सायाम्** ॥ कुत्सायां वाच्यायां सत्यां पाशः प्रत्ययो भवति ॥ कुत्सितो वैयाकरणो वैयाकरणपाशः ॥ ३७ ॥

**भूतपूर्वे चरट्** ॥ भूतपूर्वेऽर्थे वाच्ये सति चरट् प्रत्ययो भवति ॥ पूर्वं दृष्ट इति दृष्टचरः । स्त्री चेद्दृष्टचरी ॥ ३८ ॥

( च० ) 'प्रशंसायां रूपः' ॥ प्रशंसायां श्लाघायां वाच्यमानायां रूपप्रत्ययो भवति । वैयाकरणः । प्रशस्तो वैयाकरणो व्याकरणस्य पाठी वैयाकरणरूपः ॥ केचिदत्र कुत्सायां पाश इत्यपि पठन्ति । तन्मते कुत्सितः पाषण्डः पाषण्डपाशः । एवं भिषक्पाशः । इत्युदाहरणम् ॥ 'भूतपूर्वे चरट्' पूर्वं भूत इति निदर्शनादिक्रियया तत्समयात्प्राक् विषयीभूतो भूतपूर्वः । तस्मिन्नर्थे चरट् प्रत्ययो भवति । दृष्ट । द्विस्थाने पूर्वं दृष्ट इति विग्रहे अत्र दर्शनक्रियायां वर्तमानकालात्प्रागपि दृष्टत्वात्स्मृतिज्ञानेन विषयीभूतत्वाद्भूतपूर्वोऽतश्चरट् । उभयत्रापि टकार ईवर्थः । एकत्र पुंस्त्वे देववत् । अन्यत्र टित्वाङ्गीप् । 'ङ्मितः' 'यस्य लोपः' 'स्वरहीनं' नदीवत् ॥ ३६-३७-३८ ॥

---

( क ) लः समाहारप्रकृष्टयोः नाम्नः समाहारप्रकृष्टयोर्विषये लः प्रत्ययो भवति । क्लेशस्य समूहः प्रकृष्टः क्लेशो वा क्लेशलः ॥

**प्राचुर्यविकारप्राधान्यादिषु मयट् प्रत्ययो भवति ॥** अन्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चन्द्रः । गोमयम् ॥

( च० ) 'प्राचुर्यविकारप्राधान्यादिषु मयट्' ॥ प्रचुरस्य भावः प्राचुर्यं, विकारोऽवस्थान्तरापादनं, प्राधान्यं मुख्यत्वं तथा आदिशब्दान्निर्वर्तनस्वरूपपुरीषावयवेषु च । एष्वर्थेषु नाम्नो मयट्प्रत्ययो भवति । उदाहरणानि—अन्न । अन्नं प्रचुरं यत्र सोऽन्नमयो यज्ञः । अत्र प्राचुर्यार्थे मयट् । टित्वादीप् । अन्नमयी स्थाली ॥ मृद् । मृदो विकारो मृन्मयः । अत्र विकारे मयट् । 'वावसाने' दस्य तः ॥ 'ञमे ञमा वा' तस्य नः । 'स्वरहीनं०' । यद्वा 'क्वचिज्जवानां ञमा एष्टव्याः' इति दस्य नः 'स्वरहीनं०' मृन्मयो घटः ॥ स्त्री प्रधानाऽस्येति स्त्रीमयो जाल्मः । जाल्मो मूर्खः । अविचार्यकारीत्यर्थः । अमृतेन निर्वृत्तो अमृतमेव रूपं वा यस्य सोऽमृतमयश्चन्द्रः । अत्र निर्वर्तनार्थे मयट् ॥ गोः पुरीषं गोमयम् ॥ शरस्यावयवाः शरमयाः ॥

( प्र० ) प्राचुर्येति । प्राचुर्यं च विकारश्च प्राधान्यादिश्च ते तथा तेषु वाच्येषु मयट्प्रत्ययो वक्तव्य इत्यर्थः । प्रचुरस्य भावः प्राचुर्यं बाहुल्यमित्यर्थः । अन्नप्रचुरोऽन्नमयः । मृदो विकारः मृन्मयः । स्त्रीप्रधानो जाल्मोऽसमीक्ष्यकारी । आदिशब्दात्स्वरूपेऽपि । तदेवाह । अमृतमयश्चन्द्र इति । अमृतरूप इत्यर्थः । एवमादिशब्दादेव । गोः पुरीषे मयट् । गोमयम् । मयटष्टित्वादन्नमयी स्थालीत्यादावीप् ॥

**तदधीते वेद वेत्त्यत्राणवक्तव्यः ॥** व्याकरणमधीते वेद वा वैयाकरणः ॥ शोभनोऽश्वः स्वश्वः । तं वेदेति सौवश्वः । न्याये कुशलो नैयायिकः ॥

( च० ) 'तदधीते०' ॥ तच्छास्त्रादि अधीते पठति वेद जानाति वा इत्येतस्मिन्नर्थे अण् प्रत्ययो भवति । उदाहरणम् । व्याकरणमधीते अथवा वेद जानातीति वैयाकरणः । सुष्ठु शोभनोऽश्वः स्वश्वः तं वेदेति सौवश्वः पुरुषः । व्याकरण, स्वश्व, एकत्राध्ययनज्ञानार्थेऽण् । अन्यत्र वेदेत्यर्थेऽण् । णकारो वृद्ध्यर्थः ॥

( प्र० ) तदिति । अधीते पठति तद्वेद जानाति वा इत्यर्थे अण् वक्तव्य इत्यर्थः । व्याकरणस्वश्वशब्दाभ्यामणि णित्वात् वृद्धिप्राप्तावपवादमाह ॥—

**न संधिय्वोर्युट् च ॥** सन्धिजौ य्वौ सान्धिय्वौ तयोः । सन्धिजयोर्यकारवकारयोः सम्बन्धिनः स्वरस्य वृद्धिर्न भवति किन्तु तयोर्युडागमो भवति । तेन इट् उट् इत्येतावागमौ भवतः वर्णविश्लेषं कृत्वा यकारात्पूर्व इकारः । वकारात्पूर्व उकारः । पश्चात् 'आदिस्वरस्य ञ्णिति च वृद्धिः(क) ॥ ३९ ॥

( च० ) नन्वत्र स्वपदे वृद्धिराकारः क्रियतां तत्राशङ्कायामाह—सूत्रम्—'न सन्धिय्वोर्युट् च' ॥ न प्रथमैकवचनान्तम् । 'अव्यया०' । सन्धिय्वोः इत्यस्य समासो वृत्तावेव विहितः । यथा संधिजौ य्वौ संधिय्वौ तयोः संधिय्वोः षष्ठीद्विवचनान्तम् । 'स्वर-

---

(क) चटकादेरैरण् चटकस्यापत्यं चाटकैरः । कल्याण्यादीनामिनेयः ॥ कल्याण्या अपत्यं काल्याणिनेयः । इति मूलपुस्तके विशिष्टपाठः ॥

हीनं०' 'स्रोर्वि०' इ च उट् च युट् प्रथमैकवचनान्तम् । 'ह्रसेपः०' । च प्रथमैकवचनान्तम् । 'अव्ययां०' पूर्वं 'नासिनोरः' चतुःपदम् ॥ संधिजातयोर्यकारवकारयोः सम्बन्धिनः स्वरस्य वृद्धिर्न भवति । अत्र व्या इत्यत्र वि आङ् उपसर्गयोर्योगे संधिजो यकारस्तत्सम्बन्धी स्वर आकारः स च वृद्धिरूप एव । अतो न तस्य वृद्धिकार्यं किन्तु य्वोर्यकारवकारयोर्युडागमः । तत्सम्बन्धो स्वर आकारः स च वृद्धिरूपः । एतस्य णित्वाद्वृद्धिसम्भवे प्रस्तुतसूत्रेण वृद्धिनिषेधः ततः किन्तु तयोर्यकारवकारयोर्युडागमो भवति । युडागमः इति कोऽर्थः । तथैतदेव विवृणोति । इट् उट् इत्येतावागमौ ॥ ननु कथं संश्लिष्टस्य यकारस्य वकारस्य च इट् उट् आगमौ भवत इत्याह—वर्णविश्लेषमिति । वय् आ, स्व् अ इति वर्णविश्लेषं वियोजनमसंयोगेनोच्चारणं कृत्वा यकारात्पूर्वमिकारः कर्तव्यः,—वकारात्पूर्वमुकारः कर्तव्यः । 'स्वरहीनं०' विया सुव इति जातम् । पश्चात् 'आदिस्वरस्य०' इति वृद्धिः । वैया सौव । 'यस्य लोपः' 'स्वरहीनं०' । प्रथमैकवचने 'स्रोर्वि०' वैयाकरणः । सौवश्वः । इति सिद्ध्यति ॥ अन्यत्राप्यर्थे स्वस्ति आह इति सौवस्तिकः । द्वारे नियुक्त इति दौवारिकः । एवमैतिहासिकः पौराणिकः । स्वस्येदं सौवम् । त्रिपक्षस्येदं त्रैपक्षम् । व्यर्थस्य भावो वैयर्थ्यम् । इत्यादि ॥ ३९ ॥

( प्र० ) न सन्धिय्वोरिति । सन्धेः संबन्धिनौ य्वौ सन्धिय्वौ । संबन्धश्च जन्यजनकभाव एवेति विगृह्य व्याचष्टे । सन्धिजा य्वावित्यादि । इश्च उश्च द्वन्द्वान्तत्वादुभाभ्यामन्वेति । अत एवेट् उड् इत्येतावागमौ भवत इति । तौ च सन्धिय्वोरेव यथासंख्येन ततश्च व्याकरण इत्यत्र वकारस्य सन्धिजत्वाद्यकारवकारयोर्विश्लेषं कृत्वा सन्धिजाद्यकारात्पूर्वमिकारः एवं सकारवकारयोर्विश्लेषं कृत्वा वकारात्पूर्वमुकार इत्यर्थः । विश्लेषश्च बालबोधार्थं तयोरुक्तः । इकारोकारयोश्च यकारवकारजनकत्वाभावादादिवृद्धिर्भवत्येवमित्युक्तेर्वृद्धिविषय एव न । दाध्य वृश्चिक इत्यादौ नो वेत्यतो वानुवृत्तेर्व्यवस्थया स्वध्वस्वागतव्यंव्यवहारस्वर्गव्यायामप्रभृतीनां न निषेधयुटौ । द्वारादीनां च सन्धिजत्वाभावेऽपि निषेधयुटौ । दौवारिकः । सौवस्तिकः । नैयग्रोधः । वैयासक्तिरित्यादि ॥ ३९ ॥

**इतो जातार्थे** ॥ जातार्थे इतः प्रत्ययो भवति ॥ लज्जा सञ्जाता यस्यासौ लज्जितः(क) ॥ ४० ॥

( च० ) 'इतो जातार्थे' ॥ इतः प्रथमैकवचनान्तम् । जातार्थे सप्तम्येकवचनान्तम् । जातार्थे उत्पन्नार्थे इतप्रत्ययो भवति । उदाहरणम् । लज्जा । जाता अस्येति लज्जितः । जातार्थे इतप्रत्ययः । 'यस्य लोपः' 'स्वरहीनं०' 'स्रोर्वि०' । एवं पुष्पितः फलितो वृक्षः । तारकितं नभः । पुलकितः । कन्दलितः । कण्टकितः । क्षुधितः ॥४०॥

( प्र० ) इत इति । अस्य जातमित्यर्थे इतप्रत्ययो वक्तव्य इत्यर्थः । लज्जा जातास्य लज्जितः । एवं तारकितं नभः । पल्लवितो वृक्ष इत्यादि ज्ञेयम् ॥ ४० ॥

---

( क ) 'लज्जितः' इत्यारभ्य 'करिष्ठ' इति वक्ष्यमाणावधिकपाठो मूलपुस्तके दृश्यते । सो यथा;—विमतुवतुतृप्रत्ययानां लोपश्च इष्ठादौ ॥ मतिर्विद्यते यस्यासौ मतिमान् । अतिशयेन मतिमान् इति मतिष्ठः । अतिशयेन मायावी इति मायिष्ठः । अतिशयेन धनवान् इति धनिष्ठः । अतिशयेन कर्ता इति करिष्ठः ।—इति ॥

**तरतमेयस्विष्ठाः प्रकर्षे ॥** अतिशयेऽर्थे तरः तमः इयसुः इष्ठः इत्येते प्रत्यया भवन्ति ॥ अतिशयेन कृष्णः कृष्णतरः । अतिशयेन कृष्णः कृष्णतमः । अतिशयेन शुक्लः शुक्लतरः शुक्लतमः ॥ **ईयस्विष्ठौ डिताविति वक्तव्यौ ॥** अतिशयेन लघुर्लघीयान् । लघीयसी । लघिष्ठः । अतिशयेन पापः इति पापीयान् । अतिशयेन पापिनी इति पापीयसी । पापिष्ठः ४१ ॥

( च० ) 'तरतमेयस्विष्ठाः प्रकर्षे' ॥ तरश्च तमश्च ईयसुश्च इष्ठश्च तरतमेयस्विष्ठाः प्रथमाबहुवचनान्तम् । 'सवर्णे०' 'स्रोर्वि०' । प्रकर्षे सप्तम्येकवचनान्तम् । 'अ]इ एः' प्रकर्षेऽतिशयार्थे नाम्नस्तर तम ईयस इयस इष्ठ एते चत्वारः प्रत्यया भवन्ति । इष्ठ प्रत्ययः टान्तः । कृष्ण । अतिशयेन कृष्णः श्यामः इति कृष्णतरः कृष्णतमः । एकत्र तरप्रत्ययः । अन्यत्र तमप्रत्ययः । प्रथमैकवचने 'स्रोर्वि०' एवं शुक्लतरः शुक्लतमः ॥ ईयस्विष्ठाविति । ईयस इष्ठः इत्येतौ डित्संज्ञौ वक्तव्यौ । अतिशयेन लघुर्लघीयान् । अतिशयेन लघुः स्त्री लघीयसी । अशातियेन लघुर्लघिष्ठः । रूपद्वये ईयस, तृतीये इष्ठः । 'ईयस्विष्ठौ डितौ०' डित्त्वादुकारलोपः । 'स्वरहीनं०' । आद्ये प्रथमैकवचने उकारानुबन्धत्वात् 'ञितो नुम्' इति नुमागमः । 'न्सम्महतो' 'हसेपः०' 'संयोगान्तस्य०' द्वितीये । 'ङ्यत्रतः' 'स्वरहीनं०' प्रथमैकवचने । 'हसेपः से०' । तृतीये इष्ठप्रत्ययः । डित्वाट्टिलोपः । 'स्वरहीनं०' 'स्रोर्वि०' लघिष्ठः ॥ पाप । अत्र पापशब्दः पापयुक्तस्य नरस्य वाचको न पापस्य । यतः पापशब्दस्य व्याकरणान्तरेषु इनूप्रतिषेधोऽस्तीति । ( नो पापदरिद्राभ्यामिन् छन्दसि तु भवति ) । अतः अतिशयेन पापः पापवान् पुरुषः इति पापोयान् । स्त्री चेत् पापीयसी । उभयत्रापि ईयस् । डित्वाट्टिलोपः । 'स्वरहीनं०' आद्ये प्रथमैकवचने लघीयस्वत् । द्वितीये 'ङ्यत्रतः' इति ईप् । पुनः अतिशयेन पापः इति पापिष्ठः । पापवान् पुरुषः । इष्ठप्रत्ययः । डित्वाट्टिलोपः । 'स्वरही०' प्रथमैकवचने 'स्रोर्वि०' पापिष्ठः ॥ ४१ ॥

( प्र० ) तरतमेति । तरश्च तमश्च ईयसुश्च इष्ठश्च ते तथा । प्रकर्षोऽतिशयः । अतिशयेन कृष्णः । णितो वेत्यतो वानुवृत्तेर्व्यवस्थया । याचकतरः याचकतम इत्यादौ तरतमावेव नेयस्विष्ठौ ॥ ४१ ॥

**गुर्वादेरिष्ठेमेयस्सु गरादिष्ट्यलोपश्च ॥** इष्ठमेयस्सु परतो गुर्वादेर्गरादिरादेशो भवति टेरलोपः(क) ॥ गुरोर्गरादेशः-अतिशयेन गुरुः गरीयान् गरीयसी गरिष्ठः ॥ गुरोर्भावो गरिमा ॥ प्रियस्य प्रादेशः । प्रेयान् प्रेयसी प्रेष्ठः । लोहितादेर्डिमन् । प्रेमा ॥ स्थिरस्य स्थादेशः । स्थेयान् स्थेयसी स्थेष्ठः ॥ स्थूलस्य स्थवूआदेशः । स्थवीयान् स्थवीयसी स्थविष्ठः ॥ प्रशस्यस्य श्रादेशः । श्रेयान् श्रेयसी श्रेष्ठः ॥ वृद्धस्य ज्यादेशः ॥ ४२ ॥

( च० ) 'गुर्वादेरिष्ठेमेयस्सु गरादिष्ट्यलोपश्च' गुर्वादेः शब्दस्य इष्ठ इमन् ईयस् इत्येतेषु परेषु गर इत्यादय आदेशा भवन्ति । गुरु प्रिय स्थिर स्थूल प्रशस्य वृद्ध दीर्घ बहुल

( क ) टेरलोपष्टेश्चलोपः । ईयस्विष्ठयोर्डित्वाट्टिलोपे प्राप्ते निषेधः ॥

दूर निकट लघु नां क्रमेण गर् प्र स्थ स्थव श्र ज्या द्राघ् बंह दव् नेद कना एते आदेशा भवन्ति। टेश्च अलोप इति लोपो न भवतीत्यर्थः॥ गुरु। एकत्र ईयस्। अन्यत्र इष्ठ तृतीये भावेऽर्थे 'लोहितादे०' सर्वत्र गुरु इत्यस्य गर्। अत्र 'ईयस्विष्ठौ०' इति डित्वेऽपि निषेधकथनादेर्नलोपः। प्रक्रिया पूर्ववत्। अतिशयेन गुरुर्गरीयान्। गरिष्ठः। तृतीये गुरोर्भावो गरिमा। इमन् 'स्वरहीनं०' प्रथमैकवचने राजन्शब्दवत्। स्त्री चेद्गरीयसी॥ प्रिय अतिशयेन प्रियः प्रेयान् प्रेष्ठः। ईयस् इष्ठ उभयत्रापि 'गुर्वादेः०' इत्यादिना प्रियस्य प्र इत्यादेशः। 'अ इ ए'। स्त्री चेत प्रेयसी। एवं स्थिर इत्यस्य स्थ। अतिशयन स्थिरः स्थेयान् स्थेयसी स्थेष्ठः। स्थिरस्य भावः स्थेमा॥ स्थूलस्य स्थव्। अतिशयन स्थूलः स्थवीयान्। स्थवीयसी स्थविष्ठः॥ प्रशस्यस्य श्र आदेशः। अतिशयेन प्रशस्यः श्रेयान् श्रेयसी श्रेष्ठः॥ वृद्ध। अतिशयेन वृद्धो ज्यायान् ज्येष्ठः। वृद्धस्य ज्या आदेशः॥४२॥

(प्र०) गुर्वादेरिति। अतिशयेन प्रियः प्रेष्ठः प्रियस्य भावः प्रेमा। प्रियस्य प्रादेशः स्थूलस्य स्थवादेशः। अतिशयेन स्थिरः स्थेयान्–स्थेष्ठः–स्थेमा। स्फिरः स्फेष्ठः–स्फेयान्। उरुः वरिष्ठः–वरीयान्–वरिमा। बहुलः बंहिष्ठः–बंहीयान्–बंहिमा। वृद्धः वर्षिष्ठ वरीयान्–तृप्रः त्रपिष्ठः–त्रपीयान्। वृन्दारकः वृन्दिष्ठः–वृन्दीयान्। दूरः। दविष्ठः–दवीयान्। युवा यविष्ठः–यवीयान्। ह्रस्वः ह्रसिष्ठः–ह्रसीयान्–ह्रसिमा। क्षिप्रः क्षेपिष्ठः–क्षेपीयान्–क्षेपिमा। क्षुद्रः क्षोदिष्ठः–क्षोदीयान्–क्षोदिमा। अन्तिकः नेदीयान्–नेदिष्ठः। बाढः साधीयान्–साधिष्ठः। युवाल्पयोः कन् वा। कनिष्ठः–कनीयान्। इत्यादयो यथाप्रयोगं ज्ञेयाः॥४२॥

**ईलोपो ज्याशब्दादीयसः॥** ज्याशब्दादीयस ईकारस्य लोपो भवति ॥४३॥ अतिशयेन वृद्धो ज्यायान् ज्यायसी ज्येष्ठः॥ दीर्घस्य द्राघादेशः। द्राघीयान् द्राघीयसी द्राघिष्ठः द्राघिमा॥ बहुलस्य बंहादेशः। बंहीयान् बंहीयसी बंहिष्ठः बंहिमा॥ दूरस्य दवादेशः। दवीयान् दवीयसी दविष्ठः॥ निकटस्य नेदादेशः। नेदीयान् नेदीयसी नेदिष्ठः॥ लघोः कन् आदेशः। कनीयान् कनीयसी कनिष्ठः॥ क्षिप्रस्य क्षेपादेशः। क्षेपीयान् क्षेपीयसी क्षेपिष्ठः। क्षेपिमा॥ क्षुद्रस्य क्षोदादेशः। क्षोदीयान् क्षोदीयसी क्षोदिष्ठः क्षोदीमा॥ **बहोरिष्ठे यिः॥** बहुशब्दात्परस्य इष्ठे वर्त्तमानस्येकारस्य यिर्भवति। ईयस ईकारस्य लोपश्च॥ बहोर्भूरादेशः॥ भूयान् भूयसी भूयिष्ठः॥ भूमा॥ ४४॥

(च०) एकत्र 'ईलोपो ज्याशब्दादीयसः'॥ बहोश्च॥ ज्याशब्दात परस्य ईयसः प्रत्ययस्य ईलोपो वक्तव्यः। प्रथमैकवचने 'ब्रितो नुम्' 'न्सम्महतो धौ०' 'हसेपः०' 'संयोगान्तस्य०'॥ अन्यत्र इष्ठप्रत्ययः। 'अ इ ए' दीर्घः॥ अतिशयेन दीर्घो द्राघीयान्। द्राघिष्ठः। दार्घस्य द्राघआदेशः॥ अतिशयेन बहुलः बंहीयान् बंहिष्ठः॥ अतिशयेन दूरः दवीयान् दविष्ठः। स्त्री चेत् दवीयसी॥ अतिशयेन निकटः नेदीयान् नेदिष्ठः॥ अतिशयेन लघुः कनीयान् कनिष्ठः। स्त्री चेत कनीयसी॥ पाणिनीये तु "युवाल्पयोः कन् वा"। अतिशयेन युवा अल्पो वा कनीयान् कनिष्ठः। पक्षे यवीयान् यविष्ठः। स्त्री यवीयसी।

पक्षे अल्पीयान् अल्पिष्ठः । स्त्री चेत् अल्पीयसी ॥ 'अन्तिकबाढयोर्नेदसाधौ' ॥ अतिश-येन अन्तिकः नेदीयान् नेदिष्ठः । अतिशयेन बाढः साधीयान् साधिष्ठः ॥ गुरु, स्फिर, वृद्ध, तृप्रानां [ तृप्राणां ], क्रमेण गर्, स्फ, वर्ष, त्रप: स्युः ॥ 'विन्मतोर्लुक्' विनो मतुपश्च लुक् स्यात् इष्ठेयसोः परयोः । अतिशयेन स्रग्वी स्रजिष्ठः स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः त्वचीयान् एवमन्येऽपि यथा संभवं ज्ञेयाः ॥ क्वचित्तु स्थूल, दूर, युवन्, ह्रस्व, क्षिप्र, क्षुद्राणामन्त्या यरलवाः सस्वरा एव लोप्याः । पूर्वस्य च गुणः इष्ठेयसोः पर-योः। स्थविष्ठः स्थवीयान् । दविष्ठः। यविष्ठः। ह्रस्वस्य गुणासंभवः ह्रसिष्ठः । क्षेपिष्ठः । बहु । अतिशयेन बहु भूयान् । अत्र ईयस्प्रत्यये 'बहोर्लोपो०' इत्यादिना भूआदेशः । वकारादि-मनादीनामिति बहुत्वादिकारलोपः । बहोश्चेति कथनादीकारलोपः । बहु । इष्ठप्रत्ययः । पुनः बहु । इष्ठप्रत्ययः । 'बहोर्लोप०' इत्युकारलोपः बहोश्च भूआदेशः । ततो "बहोरि-ष्ठेयिः । बहुशब्दात् इष्ठप्रत्यये परे यिर्भवति इति इकारस्य यकारागमो भवति । अत्र बहोर्भू आदेशो 'यदादेशस्तद्वद्भवति' इति बहुवत् । तथा इष्ठस्य इकारे लुप्तेऽपि 'एकदेश-विकृतमनन्यवद्भवति' इति न्यायात् न विरुद्धम् । भूयिष्ठः ॥ अत्र केचित् बहुशब्दादिष्ठ-संबन्धिन इकारस्य यि इत्यादेश इत्येवं व्याचक्षते ॥ तदसंगतम् । ईकारलोपस्य प्रधान-त्वात् । भूइत्यादेशस्तु इकारलोपादृते दुःसाधः । पुनश्चिन्त्यम् ॥ ४३-४४ ॥

( प्र० ) ईलोप इति । प्रशस्यवृद्धयोर्ज्यादेशः तस्माज्ज्याशब्दादीयस ईकारस्य लोपो वक्तव्य इत्यर्थः । प्रशस्यस्य ज्यादेशः । बहोरिति । बहोर्लोपो भूश्च बहोरिति इष्ठे-कारलोपे बहोभूरादेशे पदादेशन्यायेन (क)एकदेशविकृतन्यायेन च बहोरिति इष्ठप्रत्यये परे बहुशब्दात् यिप्रत्ययो वक्तव्य इत्यर्थः । अथवा इष्ठस्य इति सांकेतिकं प्रथमान्तम् । ततश्च बहुशब्दात्परो य इष्टेकारः स यिर्भवति । यद्वा । इष्ठे इति स्थानसप्तम्यापि आदेशे प्राप्ते आदेः परस्येति परिभाषया इकारस्य यिरादेशः । केचित्तु बहुशब्दात्परे इष्ठप्रत्यये य ईकारः स यकारयुक्तो वक्तव्य इत्याहुः ॥ ४३-४४ ॥

**किमोऽव्ययादाख्याताच्च तरतमयोराम्वक्तव्यः(ख)॥**

कुत इति कुततरां परमाणवः । अतिशयेन कुत इति कुतस्तमां तेषामार-म्भकत्वम् । उच्चैस्तरां गायति । अतिशयेन उच्चैरिति उच्चैस्तमाम् । नीचैस्त-राम् । नीचैस्तमाम् । किन्तराम् । किन्तमाम् । अतिशयेन पठति इति पठ-तितराम् । पठतितमाम् । अतिशयेन पचति इति पचतितराम् । पचतितमाम् ॥

( च० ) 'किमोऽव्यया०' ॥ किम् इति अव्ययरूपात्किमः किम्शब्दसम्बन्धिनो-ऽव्ययात् अन्यस्मादप्यव्ययादाख्याताच्च सिद्धत्वादिधातुप्रयोगात् परयोस्तरतमप्रत्यययो-राम्प्रत्ययो भवति । अयं भावः । किम्शब्दसम्बन्धिनोऽव्ययात् अन्यस्मादपि उच्चैस् इत्यादिकादव्ययात् आख्याताद्भवति पचतीत्यादिरूपात्स्वार्थे अतिशयार्थे वा तरतमप्रत्ययौ

( क ) "सर्वे पादः पाददेशा दाक्षीपुत्रस्य पाणिनेः" इति ।—पदादेशन्यायस्वरूपम् ।

( ख ) 'अद्रव्यप्रकर्षे' इति चन्द्रिकासम्मतम् । निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया तुट्विधौ नास्य ग्रहणम् । अन्यथा पचतितराणामिति स्यात् ।—इति सदानन्दः ॥

भवतः। तस्मात्पुरत आम्प्रत्ययो भवति। उदाहरणम्। कुत इति 'तन्त्रादिगणः'। किमः पञ्चम्यन्तस्य निपातरूपमव्ययम्। तस्मात्तरप्रत्ययस्तमप्रत्ययश्च। उभयत्रापि आम्। कुतस्तरां परमाण्वः। प्रादुर्भवन्तीत्यध्याहारः। तथा तेषां परमाणूनां कुतस्तमामारम्भकत्वं परमाणुद्वययोगेन द्व्यणुकाद्युत्पादकत्वं कुतः कुतो मूलोत्पत्तिरित्यर्थः। उच्चैस्तरां गायति इत्यव्ययम्। केचित्तु केवलात्किम एवाव्ययात्तरतमयोराम् इति व्याचक्षते। चशब्दात उच्चैर्नीचैरव्यययोरपीति। तथा 'डुपचष् पाके'। पच् तिप्। 'शप् कर्त्तरि' 'स्वरहीनं०' पचति। अग्रे स्वार्थे तरस्तमश्च। तस्माच्च आम्। एवं 'पठ व्यक्तायां वाचि'। पठ पूर्ववत्। पठतितमाम्॥ एतदाख्यातिकम्॥

(प्र०) किमोऽव्ययादिति। एभ्यः परयोरित्यर्थः। वक्तव्यत्वाद्द्रव्यप्रकर्ष एव। नेह उच्चैस्तरस्तरुः एषां सद्भावे प्रमाणाभावरावारम्भकत्वेनाभिमताः परमाणवोऽतिशयेन कुतः। एवं परमाणूनामसत्त्वाशेषां पृथिव्यादिचतुष्टयारम्भकत्वमप्यतिशयेन कुत इत्यर्थः॥

**परिमाणे दघ्नादयः(क)**॥ परिमाणेऽर्थे वाच्ये सति दघ्नट् द्वयसट् मात्रट् इत्येते प्रत्यया भवन्ति॥ जानु परिमाणं यस्य तज्जानुदघ्नं जलम्। शिरोद्वयसम्। पुरुषमात्रं जलम्॥ ४५॥

(च०) 'परिमाणे दघ्नादयः'॥ परिमाणार्थे दघ्नट् द्वयसट् मात्रट् इत्येते त्रयः प्रत्यया भवन्ति। वक्तव्यमात्रमेतत्॥ उदाहरणम्। जानु। जानुपरिमाणमस्य जानुदघ्नम्। अत्र परिमाणे दघ्नट्प्रत्ययः। जानुपरिमितं जलमित्यर्थः। तथा पुरुषः प्रमाणमस्येति पुरुषमात्रम्। तथा शिरस्। शिरः परिमाणमस्य शिरोद्वयसम्। टकारानुबन्धत्वात् 'टिड्ढितः' इती। ऊरुद्वयसी ऊरुदघ्नी शिरोद्वयसी गजपतिद्वयसी। इत्यादि॥ ४९॥

(प्र०) परिमाण इति। दघ्नद्वयसमात्रादयः। तत्र दघ्नद्वयसावूर्ध्वे माने मात्रस्त्वविशेषेण आदिशब्दात्पुरुषहस्तिभ्यामेतेऽण् च। पुरुषः प्रमाणमस्य पौरुषम्। वो वेति वाशब्दव्यवस्थया टिलोपाभावे हस्ती प्रमाणमस्य हास्तिनम्। पक्षे पुरुषमात्रमित्यादि॥४९॥

**द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ**॥ कतरो भवतोर्मध्ये काण्वः। कतमो भवतां तान्त्रिकः। भवतोर्यतरस्तार्किकस्ततर उद्गृणातु। यतमः। ततमः॥

(च०) 'द्वयोर्बहूनां चैकस्य निर्धारणे किमादिभ्यो डतरडतमौ वक्तव्यौ'। व्याख्या-द्वयोर्मध्ये बहूनां चावराणां मध्ये एकस्य निर्धारणे पृथक्करणे जात्यादिपरिप्रश्ने वा किमादिभ्य इति कियत्तद्भ्यो डितौ अतरअतमौ प्रत्ययौ भवत इत्यर्थः। बहूनां द्वयोर्मध्ये कः कतरः कतमः। अत निर्धारणं पृथक्करणं तस्यार्थे डतरः। डित्त्वाट्टिलोपः। 'स्वरहीनं०' कतरो भवतोः काण्वः। क इति कतरः। भवतोर्द्वयोर्मध्ये काण्वः कण्वगोत्रीयः कण्ववंशीयः कः। तथा किम्। डतमः पूर्ववत्। कतमो भवतां मध्ये तान्त्रिकः शास्त्रविदित्यर्थः। सिद्धान्तिकस्तु तान्त्रिकः। यद् तद् उभयत्रापि डतरः। टिलोपः 'स्वरहीनं०' 'सोर्विसर्गः' भवतोर्द्वयोर्मध्ये यतरस्तार्किकस्ततर उद्गृणातु ब्रवीतु इति भावः॥ चका-

---

(क) प्रमाणे दघ्नट्द्वयसट्मात्रटः।—इति चन्द्रिकासंगृहीतः पाठः।

रादेकशब्दादन्यशब्दादपि डतरडतमौ वक्तव्यौ । एकतरः एकतमः । अन्यतरः अन्यतमः

( प्र० ) द्वयोर्मध्ये एकस्य निर्धारणे किमादिभ्यः कियत्तद्भ्यो डतरः । एवं बहूनां मध्ये निर्द्धारणे डतम इत्यर्थः । काण्वः काण्वशाखीयः । तान्त्रिकः शास्त्रज्ञः । तर्के कुशलस्तार्किकः । उद्गृणातु स्वसिद्धान्तावलम्बेन प्रथममुपन्यस्यत्वित्यर्थः ॥

**संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः त्रेः सम्प्रसारणं सस्वरस्य ॥ द्वयोः संख्यापूरको द्वितीयः त्रयाणां संख्यापूरकस्तृतीयः॥**

( च० ) 'संख्येयविशेषा०' संख्यातुं योग्यः संख्येयः । द्वयोस्त्रयाणां वा मध्ये योऽन्यः संख्येयो गणनायां प्रस्तुतः संख्यापूरणस्तस्य विशेषेणावधारणे 'अयं कतिथ' इत्यस्मिन्नर्थे अपरिच्छेदे द्वित्रिशब्दाभ्यां तीयप्रत्ययो भवति ॥ 'त्रेः संप्रसारणं च वक्तव्यम्' ॥ द्वि त्रि । द्वयोः संख्यापूरणो द्वितीयः । एकस्यापेक्षयाऽपरः संख्येयः तस्य विशेषणपरिच्छेदः क्रियते इति द्विशब्दात्तीयः प्रत्ययः । अन्यत्र तु द्वौ । त्रयाणां संख्यापूरणत्वेन विशेषावधारणे तत्रापि तीयः । तस्मिंश्च परे त्रेः सम्प्रसारणम् । यकारस्य सस्वरस्य सम्प्रसारणमिकारः, वकारस्य च उकारः । रेफस्य ऋकार• सस्वरस्यैव । दीर्घस्वरयुक्तस्य दीर्घ ईकारादिः, ह्रस्वस्वरयुक्तस्य ह्रस्व इकारादिरिति सम्प्रसारणं वक्तव्यम् । अत्र त्रिशब्दे रेफस्य ऋकारः । तृ तृतीयः ॥

( प्र० ) संख्येयविशेषेति । संख्यातुमर्हं संख्येयम् । तस्य विशेषः तत्पूरकस्तस्यावधारण इत्यर्थः द्वयोः संख्ययोः पूरकः । सम्प्रसारणम् । सस्वरस्य रेफस्य ऋकारः । षट्चतुरोरिति षट्चतुरशब्दाभ्यां संख्येयविशेषावधारणे थट्प्रत्ययो वक्तव्यः । षण्णां चतुर्णां संख्यापूरण इति विग्रहे षस्य षत्वमाख्यातादौ डत्वनिषेधार्थमित्यत्रापि षविधानसामर्थ्यात्षो ड इति डत्वाप्रसङ्गः । स्रोर्विसर्गः इत्यत्र ह्रस्वो वेत्यतो मण्डूकप्लुतिन्यायेन वानुवृत्तेर्व्यवस्थया विसर्गाप्रसङ्गः ॥

**षट्चतुरोस्थट् ॥ षण्णां संख्यापूरकः षष्ठः ॥ पञ्चादेर्मः ॥** पञ्चमः । सप्तमः । अष्टमः । नवमः । दशमः । इत्यादि ॥ **एकादशादेर्डः ॥ द्वित्र्यष्टैकानां द्वात्रयोष्टैकाः । प्राक्शतादनशीतिबहुव्रीहोरिति वक्तव्यम् ॥** एकेनाधिकादश एकादश । एकादशानां संख्यापूरक एकादशः–एकादशी । द्वादशः-द्वादशी । त्रयोदशः-त्रयोदशी । चतुर्दशः-चतुर्दशी । सप्तदशः-सप्तदशी । अष्टादशः-अष्टादशी ॥

( च० ) 'षट्चतुरोस्थट्' । षट् चतुर् इत्येतयोः संख्येयविशेषावधारणेऽर्थे थट् प्रत्ययो भवति । षष् । षण्णां संख्यापूरणः षष्ठः । थट् प्रत्ययः । 'ष्टुभिः ष्टुः' थस्य ठः । 'स्वरहीनं०' प्रथमैकवचने 'स्रोर्वि०' ॥ चतुर् । चतुर्णां संख्यापूरणश्चतुर्थः । थप्रत्ययः जलतुम्बिका० ॥ टित्वादीप् । षष्ठी चतुर्थी । चतुर्णां संख्यापूरणस्तुर्यस्तुरीयः इति तु पूर्वमेवोक्तम्

'पञ्चादेर्मः' ॥ पञ्चादेर्नाम्नो दशपर्यन्तात्संख्येयविशेषावधारणेऽर्थे मट् प्रत्ययो भवति । पञ्चानां संख्यापूरणः पञ्चमः । मप्रत्ययः । 'नाम्नोनो०' पञ्चमः ॥ एवं सप्तमः । अष्टमः नवमः दशम इति ॥

'एकादशादेर्डः' ॥ टकारानुबन्धत्वमत्राप्यनुवर्तनीयम् । एकादशन् इत्यादेः अष्टादश-यावत् संख्येयविशेषावधारणे डप्रत्ययो भवति । मट्प्रत्ययनिषेधः । एकादशन् । एकादशानां संख्यापूरणः एकादशः । डप्रत्ययः । अत्र डित्वाट्टिलोपः ! 'स्वरहीनं०' 'लोवि०' ॥ 'सहादेः सादिः' इति एकस्य एका इत्यादेशः । प्रक्रियामते तु 'आन्म०' इति योगविभागादात्वम् । देववत् । एकत्वात्प्रायः एकवचनमेव ॥ एवं द्वादशः त्रयोदशः । 'द्वित्र्यष्टानां द्वात्रयोष्टाः' इति द्विशब्दस्य द्वाइत्यादेशः । त्रिशब्दस्य त्रय इत्यादेशः । चतुर्दशः । पञ्चदशः ॥ षोडशः । 'सहादेः सादिः' इति षस्य उः । दस्य डः । 'उ ओ' । सप्तदशः । अष्टादशः । एकोनविंशतिः । अत्र डप्रत्यये कृते निपातनात्तिसहितस्य टेरकारस्य लोपः 'स्वरहीनं०' एकोनविंशः ॥

( प्र: ) पञ्चादेरिति । सङ्ख्येयविशेषावधारणे इति सर्वत्रानुवर्तते पञ्चादेर्दशपर्यन्तान्मप्रत्ययः । सप्तमः । अष्टमः । नवमः । दशमः । एकादशादेरिति निपातनादेकशब्दस्य दशशब्दे परे आत्वम् । एवं द्वादशेत्यादौ । द्वित्र्यष्टानां समासे सहादेः सादिरिति । द्वात्रयोष्टाः आशतादनशीतेः स्युः । द्वाविंशः । त्रयोविंशः । द्वात्रिंशत्त्रयस्त्रिंशच्च त्वारिंशदादौ वा । द्विचत्वारिंशत्—द्वाचत्वारिंशदित्यादि । यद्यप्येकादश इत्यादौ डित्वं विनापि नो वेति टिलोपः सम्भवति तथापि विंश इत्यादौ यस्य लोपे कृतेऽल्लोपार्थं डित्वमिति सन्ध्येयम् । विंश इत्यत्र वाशब्दाल्लोकाद्वा तिलोपे डित्वादलोपः ।।

**विंशत्यादेर्वा तमट् ॥ विंशतेः संख्यापूरकः विंशतितमः । पक्षे-विंशतेस्तिलोपः ।। विंशः ॥**

( च० ) 'विंशत्यादेर्वा तमट्' विंशत्यादेर्नाम्नः संख्येयविशेषावधारणे तमट्प्रत्ययो वा भवति । वाग्रहणात् एकत्र तमट्, द्वितीये डः ( तृतीये प्रत्ययो न, यथास्थित एव तिष्ठति ? ) विंशति । आद्ये तमट् प्रत्ययः । टकार ईवर्थः । विंशतेः संख्यापूरणः विंशतितमः । तथा स्त्रीत्वे विंशतितमी इत्यपि भवति । द्वितीये डप्रत्ययः । डानुबन्धेऽन्त्यस्वरादेर्लोपः तेन विंशतेरपिति इत्यनेन सह टिलोपः । 'स्वरहीनं०' विंशः ।। तथा प्रक्रियायां 'ति विंशतेर्डिति' विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति परे ।। यद्वा केचित्तु टिलोपे कृते पुनः 'हलादेरीषा०' इति टिलोपमिच्छन्ति ।। केचित्तु टिलोपे कृते 'सहादेः सादिः' इति विंशति इत्यस्य विंश इत्यादेशमिच्छन्ति ।। ( तृतीये विंशतिरित्येव रूपं भवति । विंशतिसंख्य इत्यर्थः । ) केचित्तु वाग्रहणादेव पञ्चादेर्मः' इति मप्रत्ययमपीच्छन्ति । तन्मते विंशम इत्यपि स्यात् । एवमेकविंशतितमः एकविंशः । द्वाविंशतितमः द्वाविंशः । त्रयोविंशतितमः त्रयोविंशः । चत्वारिंशत्तमः चत्वारिंशः । एवं पञ्चाशत्तमः पञ्चाशः । एवं षष्टितमः एकषष्टितमः एकषष्टः । इत्यादि ज्ञेयम् । अत्र ग्रन्थान्तरेष्वेतानि वक्तव्यानि सन्ति । 'द्वित्र्यष्टानां द्वात्रयोऽष्टा' भवन्ति । 'प्राक्शतादनशीतेः' शतात्प्राक् शतं यावत् अनशीतेः अशीतिशब्दं वर्जयित्वा अन्यत्र यत्र द्वित्रिअष्टशब्दाः सन्ति तत्र क्रमेण द्वा त्रयः अष्टा एते आदेशा भवन्ति । यद्वा द्वादशः त्रयोदशः अष्टादशः ॥

**चत्वारिंशदादौ वा ।।** द्विचत्वारिंशत्-द्वाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । अनशीती-

विशेणाद् द्व्यशीतिः त्र्यशीतिः अष्टाशीतिः । शतादेर्नित्यम् ॥ शततमः ॥

( च० ) 'चत्वारिंशदादौ वा' । चत्वारिंशदादिशब्देषु परेषु द्वित्र्यष्टानां द्वात्रयोष्टा वा भवन्ति । द्विचत्वारिंशत् द्वाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । द्विपञ्चाशत् । द्वापञ्चाशत् । त्रिपञ्चाशत् । त्रयःपञ्चाशत् । अष्टपञ्चाशत् । अष्टापञ्चाशत् । एवं द्विषष्टिः द्वाषष्टिः त्रिषष्टिः । त्रयःषष्टिः । अष्टषष्टिः अष्टाषष्टिः । द्विसप्ततिः द्वासप्ततिः । त्रिसप्ततिः त्रयः सप्ततिः । अष्टसप्ततिः अष्टासप्ततिः । द्विनवतिः द्वानवतिः । त्रिनवतिः त्रयोनवतिः । अष्टनवतिः अष्टानवतिः । अनशीतेरिति विशेषणात् द्व्यशीतिः द्व्यशीतितमः । त्र्यशीतिः अष्टाशीतिः । अत्र द्वात्रयोष्टा न भवन्ति ॥ 'शतादेर्नित्यम्' तमट्प्रत्ययः स्यात् । शततमः । 'एकादशादेरधिकार्थात् सप्तम्यर्थे शते सहस्रे च डप्रत्ययः' । एकादश अधिका यस्मिन् तत् एकादशं शतं सहस्रम् । एवं द्वादशं शतं त्रयोदशं शतं एकविंशं त्रिंशं चत्वारिंशं पञ्चाशं शतमित्यादि ज्ञेयम् ॥ शतादेरित्यादिशब्दात् शततमः । एकशततमः । मासतमः । अर्धमासतमः । संवत्सरतमः इत्यादि ज्ञेयम् । शतादीनि संख्योपयोगानि लोकादवगन्तव्यानि ॥

**संख्यायाः प्रकारे धा** ॥ संख्यावाचकाच्छब्दात्प्रकारेऽर्थे वाच्ये सति धाप्रत्ययो भवति ॥ द्विप्रकारं द्विधा । त्रिप्रकारं त्रिधा । चतुष्प्रकारं चतुर्धा ॥४५॥

(च०)'संख्यायाः प्रकारे धा'॥ संख्यावाचिनो नाम्नः प्रकारेऽर्थे धाप्रत्ययो भवति । द्विप्रकारं इति । द्वौ प्रकारावस्येति वा द्विधा त्रिधा चतुर्धा पञ्चधा षोढा इत्यादि ॥ ४५ ॥

**गुणोऽण् च** ॥ धाप्रत्ययान्तस्य शब्दस्य गुणो वा भवति अण् च वा भवति ॥ द्विप्रकारं द्वेधा । त्रिप्रकारं त्रेधा । धाप्रत्ययान्तात्स्वार्थेऽण् । द्विधा एव द्वैधम् । त्रैधम्(क) ॥ **क्रियाया आवृत्तौ कृत्वस्** ॥ (ख)पञ्चवारान् भुङ्क्ते इति पञ्चकृत्वो भुङ्क्ते । सप्तकृत्वः ॥ ४६ ॥

( च० ) गुणोऽण् च' धाप्रत्यये परे द्वित्रिशब्दयोर्गुणो भवति अण् च वा भवति । इकारस्य ए गुणः । द्वेधा त्रेधा । प्रथमैकवचने । 'क्त्वाद्यन्तं च' इति 'अव्ययाद्विभक्तेर्लुक्' । तथा धाप्रत्ययात्स्वार्थेऽण् प्रत्ययो भवति । णकारो वृद्ध्यर्थः । द्विधा त्रिधा । उभयत्रापि अण् वृद्धिः । 'यस्य लोपः' 'गायत्र्याद्यण्' इति नपुंसके प्रथमैकवचने । 'अतोऽम्' द्वैधं त्रैधम् ॥ 'क्रियाया आवृत्तौ कृत्वस्' क्रियायाश्चलनगमनकरणादिकाया आवृत्तौ तत्संख्यापरिवृत्तेन पौनःपुन्येन वारंवारार्थे पञ्चसप्तादिसंख्यायाः कृत्वस् इति प्रत्ययो भवति ॥ पञ्चन् । पञ्च वारान् इति । पञ्चन् कृत्वस्प्रत्ययः । 'नाम्नो नो०' प्रथमैकवचने सि । 'अव्यया०' 'सोर्वि०' पञ्चकृत्वः । सप्तकृत्वः । त्रिसप्तकृत्वः । कतिकृत्वः । इत्यादीन्युदाहरणानि ॥ ४६ ॥

---

( क ) एकाद्ध्यमुञ्चा ॥ ऐकध्यम् । एकधा इति विशेषः ।

( ख ) पौनः पुन्येन गणनमावृत्तिः । वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात् कालाध्वनोरिति द्वितीया । भूरिवारान् भुंक्ते इत्यत्र भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽपि न कृत्वस् । एकत्वद्वित्वादिवनियतनिष्ठाभावात् ।

( प्र० ) गुणोऽण् चेति । धाप्रत्यये परे गुणो भवति । गुणविधिसामर्थ्याच्चका-द्वा गुणाभावपक्षे धाप्रत्ययान्तादण् चकारो विकल्पार्थः । क्रियाया आवृत्तौ क्रियाभ्यावृत्तिगणने सङ्ख्यावाचकात्कृत्वस् वक्तव्य इत्यर्थः । पञ्च वारानिति पञ्चकृत्वः ॥ ४६ ॥

**द्वित्रिचतुर्भ्यः सुः** ॥ द्वित्रिचतुःशब्देभ्यः सुप्रत्ययो भवति ॥४७॥ द्विवारमिति द्विः । त्रिवारमिति त्रिः । चतुः । द्विरुक्तम् । त्रिरुक्तम् ॥ **बह्वादेः कारकाच्छस्** ॥ बह्वादेः शब्दाच्छस्प्रत्ययो भवति ॥ बहुवारानिति बहुशः । अल्पशः । शतशः । सहस्रशः । लक्षशः । कोटिशः । इत्यादि । बहुशो धनं ददाति ॥ कारकात्किम् । बहूनां स्वामी ॥ ४८ ॥

( च० ) 'द्वित्रिभ्यां सुः' ॥ द्वित्रिशब्दाभ्यां क्रियाया आवृत्तौ सुप्रत्ययो भवति । उकार उच्चारणार्थः । द्वौ वारौ इति द्विः । त्रीन् वारानिति त्रिः । सुप्रत्यये कृते प्रथमैकवचने । 'अव्यया०' 'सोर्वि०' ॥ अग्रे उक्तमिति 'नामिनोरः' 'स्वरहीनं०' । एवं द्विर्भुङ्क्ते । द्वौ वारौ इत्यर्थः । त्रिरधीते त्रिः । त्रीन् वारान् अधीते पठतीत्यर्थः । चतुः स्वपिति इत्यपि क्वचित् दृश्यते ॥ एकस्य सुप्रत्ययसहितस्य सकृदादेशो वक्तव्यः । सकृदेकवारम् ॥ 'बह्वादेः शस्' बह्वादेर्नाम्नो वारंवारार्थे संख्यायां वा शस्प्रत्ययो भवति । बहु । बहून् वारानिति बहुशः । अथवा बहवः एव बहुशः । कोटि संख्या येषां ते कोटिशः । शस्प्रत्ययः । 'अव्यया०' ॥ एवं शतशः सहस्रशः लक्षशः कोटिशः अनेकशः भूरिशः गणशः कतिशः इत्यादीनि ॥ ४७–४८ ॥

( प्र० ) द्वित्रिभ्यां सुरित्यत्रापि क्रियावृत्तावित्येव । बह्वादेरिति । बह्वादेः कारकादित्यर्थस्तेन बहूनां स्वामीत्यादौ न । अत्रापि क्रियाभ्यावृत्तिगणन एव । भूरिशः । गणशः । स्तोकशः । अल्पशः । अनेकश इत्यादि ॥ ४७–४८ ॥

**तयायडौ संख्याया अवयवे** ॥ संख्याया अवयवे वाच्ये सति तयायडौ प्रत्ययौ भवतः ॥ द्वौ अवयवा यस्य तद्द्वितयम् ॥ त्रितयम् । द्वौ अवयवौ यस्य तद्द्वयम् । त्रयम् । चतुष्टयी ॥ **अल्पे कुटीशमीशुण्डाभ्यो रः** ॥ अल्पा कुटी इति कुटीरः । अल्पा शमी इति शमीरः । अल्पा शुण्डा इति शुण्डारः ॥ ४९ ॥

( च० ) 'तयायडौ संख्यायामवयवार्थे' ॥ अवयवार्थे संख्यायां वाच्यमानायां तयट् अयट् इत्येतौ प्रत्ययौ भवतः । तत्र तयट् संख्यावाचिनः शब्दात्संभवति अयट् द्वित्रिशब्दाभ्यामेव । द्वित्रि । उभयत्र तयट् । क्लीबे द्वितयम् त्रितयम् । चतुष्टयम् । अयडित्यत्र डकारष्टिलोपार्थः । इति चिन्त्यम् । द्वौ अवयवौ अस्य समुदायस्य द्वितयम् । यद्वा द्वावेव द्वयम् । त्रय एव त्रयम् । त्रयोऽवयवा यस्येति त्रयम् । एवं द्वयम् । द्वित्रि । अयट् प्रत्ययः । 'यस्य लोपः' 'स्वर०' प्रथमैकवचने । 'अतोऽम्' ॥ स्त्रीलिङ्गे द्वितयी त्रितयी चतुष्टयी द्वयी त्रयी ॥ उभशब्दादप्ययट् वक्तव्यः । उभौ अवयवौ यस्येति उभयः । दित्वा-

दुमयी । 'यस्य लोपः' ॥ 'अल्पे शमीकुटीशुण्डाभ्यो रः' ॥ अल्पार्थे लघ्वर्थे वाच्ये शमी-कुटीशुण्डा इति त्रिभ्यः शब्देभ्यः रप्रत्ययो भवति । अल्पा शमी शमीरः । अल्पा कुटी कुटीरः । अल्पा शुण्डा शुण्डारः ॥ ४९ ॥

( प्र० ) तयायडाविति । तयश्च अयट् च तौ सङ्ख्याया अवयवत्वविवक्षायां भवत इत्यर्थः । द्वाववयवौ त्रयो वावयवा इति विग्रहः । द्वितयी । त्रितयीत्यत्र नदादित्वादीप् । द्वयी । त्रयीत्यत्र । यटष्टित्वात् ट्वित इतीप् । केचित्तु तयायडो इति पठित्वा डित्त्वाट्टिलोपे नदादित्वादेवेप् । इत्याहुः । तदसत् । यस्य लोप इत्येव सिद्धे डित्त्ववैयर्थ्यप्रसङ्गात् । त-द्धितप्रत्ययानामनन्तत्वात्कात्स्न्र्येनाभिधातुमशक्यत्वादनुक्तनिष्पत्त्यर्थमाह ॥ ४९ ॥

स्त्रीपुंसाभ्यां नण्स्नणौ ॥ स्त्रैणम् । पौंस्नम्(क) ॥ शेषा निपात्याः क त्यादयः । आदिशब्दात् या संख्या येषां ते यति । सा संख्या येषां ते तति ॥ का संख्या येषां ते कति ॥ लोकाच्छेषस्य सिद्धिः ॥

इति सारस्वतव्याकरणे तद्धितप्रकरणम् ॥ १९ ॥

( च० ) 'स्त्रीपुंसाभ्यां नण्स्नणौ' ॥ स्त्रीपुंसोः शब्दयोः क्रमेण नण्स्नणौ प्रत्ययौ भवतः अपत्याद्यर्थे ॥ णकारो वृद्ध्यर्थः । स्त्रीषु भवः स्त्रिया अपत्यं स्त्रीणां समूहो वा स्त्रैणम् । पुंसि भवः पुंसोऽपत्यं पुंसां समूहो वा पौंस्नम् । तत्र स्त्रैणमित्यत्र नण् । णित्त्वाद्वृद्धिः । 'दन्तौणो०' ॥ तथा पुंसः स्नण् प्रत्ययः णित्त्वाद्वृद्धिः । पौंस्नम् । 'संयोगान्तस्य०' इति सलोपः । प्रथमेकवचने क्लीबे । 'अतोऽम्' 'अम्शसो०' 'मोऽनु०' ॥ अथोपसंहारमाह—'शेषा निपात्याः कत्यादयः ।' शेषा अत्र व्याकरणेऽनुक्ता ग्रन्थान्तरेषु च उदाहृताः शब्दाः कति कतिपय कतिथ कतिपयथ यति तति अन्येऽपि विंशति त्रिंशत् पञ्चाशत् षष्टि सप्तति अशीति नवति शतं इत्यादयः शब्दाः निपात्याः निपातसिद्धाः प्रयोगानुसारेण साध्याः ॥ इति सुबोधिकायां तद्धितदीपिका ।। १९ ।।

सुबोधिकायां क्लृप्तायां सूरिश्रीचन्द्रकीर्तिभिः ।
स्यादीनां प्रक्रिया पूर्णा बभूवेत्थं मनोहरा ॥ १ ॥
तेषामेव हि सच्छिष्यो हर्षकीर्त्याह्वपाठकः ।
लिखनोपक्रमं चास्याः प्रपेदे प्रीतमानसः ।। २ ।।

इति श्रीनागपुरीयतपागच्छाधिविद्याधिसदाचारभट्टारकश्रीचन्द्रकीर्तिसूरिकृतायां सारस्वतटीकायां प्रथमावृत्तिः पूर्णा ।।

( प्र० ) शेषा इति । निपातात् साधवो निपात्याः । किमः सङ्ख्यापरिप्रश्ने डतिः । का संख्यैषां कति । एवं यति तति इत्यादि प्रयोगादूह्यम् ।।

इति श्रीमद्वासुदेवविरचिते सारस्वतप्रसादे तद्धितप्रक्रिया समाप्ता ॥ १९ ॥

इति सारस्वतप्रक्रियायाः पूर्वार्द्धं समाप्तम् ।

---

( क ) पौंस्नमित्यत्र संयोगान्तस्येति सलोपः ।

इति यास्क-श्री नवकिशोरकरकृतायां मनोरमाभिधायां विवृत्यां तद्धितान्तं प्रकरणं समाप्तम् ॥ शिवमस्तु ।

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।**
**रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥ १ ॥ (२)**

( २ ) **विभावेनेति** । अत्र विभावादिपदेन तज्ज्ञानं लक्ष्यते । विभावेन काव्यान्तर्गतनायकनायिकादिरूपालम्बनविभावज्ञानेन तथा चन्द्रचन्दनादिरूपोद्दीपनविभावज्ञानेन चेत्यर्थः । अनुभावेन अनुरागादिप्रकाशकस्तम्भस्वेदादिरूपानुभावज्ञानेनेत्यर्थः । तथा सञ्चारिणा निर्वेदादिरूपसञ्चारिभावज्ञानेनेत्यर्थः । व्यक्तः स्वयं स्वयं ताद्रूप्येण परिणम्य पिण्डीभावेन प्रकाशितः, सचेतसां सामाजिकानां सहृदयानाम्, रत्यादिरनुरागप्रभृतिः स्थायी भावः स्थायिभावज्ञानम्, रसतां रसस्वरूपत्वम्, एति प्रतिपद्यते । सामाजिकेषु युगपद् विभावादिज्ञानमेव रसरूपेण प्रकाशत इति सारार्थः ।

"नायकादिनिष्ठोऽपि रत्यादिर्ज्ञानसम्बन्धेन सामाजिकनिष्ठो रसो भवतीत्यभिप्राय" इति तर्कवागीशः ।

इदमप्यत्र पुत्रव्याख्यानम्—"सचेतसां सहृदयानां रत्यादिः स्थायीभावः । भाव्यते वास्यते इति व्युत्पत्त्याऽनादिवासनान्तर्लीन इत्यर्थः । तदुक्तम्—

"वासनानादिकालीना याऽसौ हृदि सचेतसाम् ।
स्वसामग्रीं समासाद्य व्यक्ता सैति रसात्मताम्" ॥ इति ।

यद्यपीह मिलितो रत्यादिः प्रपाणकरसन्यायेन चर्व्यमाणोऽखण्डरूपो रसस्तथापि लोकप्रसिद्धिमासाद्य प्रत्यभिज्ञानात् स्थायी भावो रसतामेतीत्युक्तम् ।"—इति ।

केचित्तु—विभावादिपदानां लक्षणामकृत्वैव व्याख्यानमिदमुपक्रमन्ते तद्यथा—

विभावेन—विभावयति विशिष्टात्मना भावनामास्वदयोग्यतां नयतीति तेन तथोक्तेन । भावना च रत्यादीनामेव । कारणं चोत्पादनापरपर्य्यायमालम्बनं निमित्तापरपर्य्यायं चोद्दीपनमिति द्विविधम् । तथा च रत्यादीनां भावनाया आस्वादयोग्यतानयने कारणीभूतो यः तेन आलम्बनोद्दीपनात्मकतया द्विविधेन विभावपदार्थेनेत्यर्थः ।

---

'विभावादीनां सम्बन्धाद्रसस्य रत्यादेर्निष्पत्तिरारोपः' इति पञ्चमे ।

'विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैः संयोगादनुमानाद्रसस्य रत्यादेर्निष्पत्तिरनुमितिर्नटादौ पक्ष इति शेषः' इति षष्ठे ।

'विभावादीनां त्रयाणां संयोगात्समुदायाद्रसनिष्पत्ती रसपदव्यवहारः' इति सप्तमे । 'विभावादिषु सम्यग्योगाच्चमत्कारात्' इत्यष्टमे । तदेवं पर्यवसितत्रिषु मतेषु सूत्रविरोधः । विभावानुभावव्यभिचारिणामेकस्य तु रसान्तरसाधारणतया नियतरसव्यञ्जकतानुपपत्तेः सूत्रे मिलितानामुपादानम् । एवं च प्रामाणिके मिलितानां व्यञ्जकत्वे यत्र क्वचिदेकस्मादेवासाधारणाद्रसोद्बोधस्तत्रेतरद्वयमाक्षेप्यम् । अतो नानैकान्तिकत्वम् । इत्थं नानाजातीयाभिः शेमुषीभिर्नानारूपतयावसितोऽपि मनीषिभिः परमाह्लादाविनाभावितया प्रतीयमानः प्रपञ्चेऽस्मिन्नसौ रमणीयतामावहतीति निर्विवादम् ।—इति ।

विभावादयो वक्ष्यन्ते। सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः (३)। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसो न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते (४)। तदुक्तं लोचनकारैः—"रसाः

---

अनुभावेन—अनुभावयति वासनारूपेणावस्थितान् रत्यादीन् स्फुटमिति तेन, अनुभवनं वासनात्मनाऽवस्थितानां रत्यादीनां कार्य्यात्मना परिणमनमनुभावः तेनेति वा। तथा च स्तम्भस्वेदादिरूपतया सात्त्विकेन कटाक्षपातादिरूपतया चासात्त्विकेन रत्यादीनां कार्य्यात्मना परिणामेनेत्यर्थः।

तथा सञ्चारिणा—सम्यक् सर्वाङ्गव्यापितया कार्य्यजनने आनुकूल्येनेति यावत्, चरतीत्येवं शीलस्तेन तथोक्तेन, सहकारिणेति भावः, अत्र सहार्थयोत्ये तृतीया, तेन सम्भूयेति फलितम्। अत एवाहुः प्रदीपकाराः—

'नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्य्यवसन्नम्, तच्च न च युक्तम्, विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्, 'घटपटा' विति समूहालम्बनवत्, इति चेन्न, पानकरसन्यायेन चर्वणात्, यथा पानकरसे कर्पूराद्यंशो न पार्थक्येनानुभूयते तथात्रापि विभावाद्यंशः।' इति

व्यक्तः व्यञ्जितः—व्यक्त्याख्यया वृत्त्या प्रतिपत्तिं नीत इत्येके, भग्नावरणया चिदा विषयीकृत इत्यपरे प्राहुः।

सचेतसां—चेतसा परिपक्वशक्तिकेन चित्तेन सहिता इति तेषां तथोक्तानाम्। रत्यादिः स्थायी भावः चिदवच्छिन्न इत्येके, तदवच्छिन्नं चैतन्यमित्यपरे प्राहुः, रसतां रसस्वरूपत्वम्, एति प्राप्नोति। इति।

( ३ ) विवृणोति—**विभावादय इति**। वक्ष्यन्ते इहैव परिच्छेदे। सामान्यतस्तु—"कारणानि च कार्य्याणि सहकारीणि चानि च। रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः। विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः" ॥ इत्युक्तप्रकाराः। नन्वन्यैरुक्तम्—

"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीय नीतः स्वादत्वं स्थायी भावो रसः स्मृतः ॥'

इति। तत्कथमत्र लक्षणे सात्त्विकानामनुपादानमित्याशङ्क्याह—**सात्त्विकाश्चेति**। सात्त्विकाः स्तम्भस्वेदादयः। अनुभावरूपत्वात् न पृथगुक्ता इति। अनुभावग्रहणेनैव प्राप्तत्वादिति भावः।

( ४ ) ननु व्यङ्ग्यव्यञ्जकयोर्घटदीपयोरिव सर्वत्र व्यतिरेकदर्शनादत्रापि व्यङ्ग्यव्यञ्जकरूपयो रसविभावाद्योर्व्यतिरेकोऽवश्यंभाव्य इति तत् कथं 'ततः संवलितः सर्वो विभावादिः सचेतसाम्। प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्' ॥ इति वक्ष्यमाणरीत्या स्थापितो रसविभावाद्योरव्यतिरेकः सङ्गच्छते इत्यत आह—**व्यक्त इति**। दध्यादिन्या-

(११)। चिन्मय इति स्वरूपार्थे मयट् (१२)। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः । तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामह-सहृदय गोष्ठी-गरिष्ठ-कवि-पण्डित-मुख्य-श्रीमन्नारायणपादैरुक्तम् । तदाह धर्मदत्तः स्वग्रन्थे—(१३)

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ।
तस्माद्द्भुतमेवाह कृती नारायणो रसम् ॥" इति (१४) ।

---

दीत्यादिपदेनानुभावसञ्चारिभावयोः रत्यादीत्यादिपदेन तु ह्रासादिस्थायिभावान्तराणां च परिग्रहः । विभावादित्रयं कारणकूटं रत्यादिकं तु कार्य्यकूटमिति . कार्य्यकारणभेदेन गणयोर्द्वित्वादादिपदद्वयं प्रयुक्तम् । ननु मिलिता विभावादयो रसस्तत्कथमस्याखण्डत्वमत आह—**अत्रेति** । अत्र रसस्याखण्डतायामित्यर्थः, हेतुं समूहालम्वनज्ञानतादात्म्यम् । वक्ष्यामः कथयिष्यामः ।

तथा च—यद्यपि विभावादीनां प्रत्येकस्य खण्डरूपतैव तथापि प्रपाणकरस इव समूहालम्वनविधया विभावादीनामभेदेन तदा प्रत्ययादेतस्य रसस्याखण्डत्वं वक्ष्यत इति भावः ।

( ११ ) रसस्य रत्याद्यंशशवलितत्वेऽपि यथा स्वप्रकाशत्वमविरुद्धं तथैहैवाग्रे दर्शयिष्यते, एतदेवाह—**स्वप्रकाशत्वादीति** । रत्याद्यंशशबलत्वादेव चास्य ब्रह्मास्वादसहोदरत्वं न तु तत्त्वं सूत्रेणोक्तम् । आदिपदेनानन्दचिन्मात्रत्वयोर्ग्रहणम् । अपिः समुच्चये ।

( १२ ) **स्वरूपार्थे मयडिति** । 'स्वरूपार्थ इत्यनेन मयटः प्रस्तुतार्थस्य निरासः, तेन स्वप्रकाशानन्दाभिन्नत्वं रसस्योक्तं भवति । न तु अन्नमयो यज्ञ इत्यादिवत् प्राचुर्य्यार्थे ।

( १३ ) द्वितीयकारिकार्थं विवृणोति । **चमत्कार इति** । चित्तं विस्तीर्य्यते स्वावबोधकाले दीर्घमिव क्रियते अनेनेति चित्तविस्तारः । अलौकिकार्थाकलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य दीर्घप्रायत्वं चित्तविस्तारः तद्रूप इत्यर्थः । दृष्टहेतुभ्योऽसम्भवित्वज्ञानेन हेत्वनुसन्धाने मनोव्यापारणमेव चित्तविस्तार इति केचित् । **विस्मयेति** । विस्मयो विस्मयशब्दोऽपरः पर्य्यायो वाचकान्तरं यस्य सः । यद्वा—अपरपर्य्यायोऽभिन्नः । तत्प्राणत्वञ्च रसस्य चमत्कारसारत्वञ्च । **नारायणपादैरुक्तमिति** ।

तदाहुः—

"चमत्कार एव सर्वरसप्राणभूतः, तस्य च रत्याद्यंशशबलत्वेन यथायथं शृङ्गारादिरसव्यपदेशः । तदभावादद्भुतव्यपदेशः" इति ।

( १४ ) **रस इति** । सर्वत्र सर्वस्मिन्नपि रसे, चमत्कारः चित्तविस्ताररूपो विस्मय एव, सारः स्थिरांशोऽनुभूयते प्रतीयते । विस्मय एव सारत्वेन प्रतीतो भव-

